आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९१

श्रीमद्वात्स्यायनमुनिकृतभाष्यश्रीविश्वनाथ-
भट्टाचार्यकृतवृत्तिसमेतानि

# श्रीगौतममुनिप्रणीतन्यायसूत्राणि ।

---

एतत्पुस्तकम्

जोशीत्युपाह्वनागेशात्मजदिगम्बरशास्त्रिणा संशोधितम् ।

तच्च

बी० ए० इत्युपपदधारिणा

विनायक गणेश आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

---

शालिवाहनशकाब्दाः १८४४

खिस्ताब्दाः १९२२

---



मूल्यं सार्धरूपकचतुष्टयम् ( ४ ॥ )

## आदर्शपुस्तकोल्लेखपत्रिका ।

अथैतद्वात्स्यायनभाष्यवृत्तिपुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रदर्श्यन्ते ।

१ (क.) इति संज्ञितम्—गु० वे० शा० सं० महामहोपाध्यायाभ्यंकरोपाह्ववासुदेवशास्त्रीत्येतेषाम् ।

२ (ख.) इति संज्ञितम्—आनन्दाश्रमस्थम् ।

३ (ग.) इति संज्ञितम्—आनन्दाश्रमस्थम् ।

४ (घ.) इति संज्ञितम्—भाण्डारकर ओरियंटल् रिसर्च इन्स्टीटयूट् इति संस्थास्थम् ।

५ (ङ.) इति संज्ञितम—आनन्दाश्रमस्थम् ।

६ (च.) इति संज्ञितम्—फर्ग्युसनकालेजस्थम् ।

वृत्तेस्तु पुस्तकद्वयमेव ।

१ (च.) इति संज्ञितम—फर्ग्युसनकालेजस्थम् ।

२ (छ.) इति संज्ञितम्—गु० वे० शा० सं० म० अभ्यंकरोपाह्ववासुदेवशास्त्रीत्येतेषाम् ।



# प्रस्तावना



इह तावज्जगति प्रयोजनमुद्दिश्यैव सकलप्रेक्षावतां प्रवृत्तिर्दृश्यते। प्रयोजनं च व्यावहारिकं पारमार्थिकं चेति द्विविधम्। तत्र व्यावहारिकं प्रयोजनं तु दुःखसंभिन्नत्वाद्विनाशित्वादल्पत्वाच्च नात्यादरणीयम्। पारमार्थिकं च प्रयोजनं दुःखासंभिन्नत्वान्नित्यत्वान्महत्त्वाच्च प्रेक्षावद्भिरत्यादरणीयमेव। तच्च निःश्रेयसापरपर्यायं मोक्षपदवाच्यमेव। तच्च प्रमाणप्रमेयादिषोडशपदार्थानां तत्त्वज्ञानादेव लभ्यं नान्यथा। तत्त्वं च व्यावहारिकत्वमेव न तु पारमार्थिकत्वम्। एवं च प्रमाणादीनां सकलपदार्थानां व्यावहारिकत्वेन बोधनार्थमेतच्छास्त्रप्रवृत्तिः। तथा चानेन शास्त्रेण वस्तुतो मिथ्याभूतानां सकलपदार्थानां सत्यत्वेन प्रतिपादने कृते सति 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इति न्यायेन वेदान्तशास्त्रेण ब्रह्मव्यतिरिक्तानां सकलपदार्थानां मिथ्यात्वं बोध्यत इति न तच्छास्त्रेण सहास्य विरोधः। एवमेव वैशेषिकसांख्ययोगमीमांसाशास्त्राणां तत्तदधिकार्यनुरोधेन प्रवृत्तत्वान्न वेदान्तशास्त्रेण सह विरोधः। सर्वज्ञानां तत्तच्छास्त्रप्रवर्तकाचार्याणामज्ञानकल्पनापेक्षया सर्वेषां शास्त्राणामेकवाक्यतया व्याख्यानस्यौचित्यात्। ननु वेदान्तशास्त्रेऽपि सुप्रसिद्धाः परस्परविरुद्धमतप्रतिपादकाश्चत्वार आचार्याः श्रूयन्ते। तत्र श्रीशंकराचार्याणामद्वैतमतम्। श्रीरामानुजाचार्याणां विशिष्टाद्वैतमतम्। श्रीमध्वाचार्याणां द्वैतमतम्। श्रीवल्लभाचार्याणां तु शुद्धाद्वैतमतम्। तत्र पूर्वोक्तानां न्यायादिमीमांसान्तानां शास्त्राणां श्रीशंकराचार्यप्रतिपादिताद्वैतमतेनैव सहैकवाक्यता कर्तव्या न त्वन्येषां मतेनेत्येतद्विषये प्रमाणाभावात्पुनरनवस्था तदवस्थैवेति चेत्। अत्रोच्यते—श्रीशंकराचार्यैः श्रुतिप्रमाणसिद्धमायायाः स्वीकरणात्सर्वेषां द्वैतप्रतिपादकश्रुतिवाक्यानां व्यावहारिकदशाप्रतिपादनपरत्वेन सर्वेषामद्वैतप्रतिपादकश्रुतिवाक्यानां पारमार्थिकब्रह्मप्रतिपादकत्वेन न केषांचिदपि श्रुतिवाक्यानां परस्परविरोधः। एवं च श्रुत्यादिप्रमाणसिद्धमद्वैतमतमेव वेदान्तशास्त्रस्य प्रतिपाद्यम्। एतदेव चान्येषां रामानुजाचार्यादीनां त्रयाणामपि संमतम्। अविरोधेन श्रुतिवाक्यानां सम्यगन्वयस्य सर्वसंमतत्वात्। चतुर्णामपि सर्वज्ञत्वस्य तत्तन्मताभिमानिभिः स्वीकृतत्वात्सर्वेषामेक-

वाक्यतैवोचिता । अन्यथा परस्परमतवैचित्र्येण सर्वज्ञत्वं व्याहन्येत । ननु सर्वेषामैकमत्ये सति स्वस्वग्रन्थेषु परस्परमतखण्डनमनुचितम्, श्रूयते तु खण्डनमिति चेत् । भ्रान्तोऽसि । कारुणिकानां लोकानुग्राहकाणां चतुर्णामप्याचार्याणामधिकार्थनुरोधेन तत्तन्मतप्रतिपादने प्रवृत्तत्वात् । तत्तन्मतदार्ढ्याय च परस्परमतखण्डनं कृतं न तु वास्तवम् । नैतावता परस्परमतविरोधः शङ्क्यः । अन्यथा सर्वेषां परस्परविरुद्धमतप्रतिपादकत्वेन विप्रलम्भकत्वापत्तिः । प्रकृतमनुसरामः । एवं च मोक्षप्राप्त्यर्थं ब्रह्मज्ञानमपेक्षितम् । तच्च जगतो मिथ्याज्ञानं विना न संभवति । जगतो मिथ्यात्वेनानुभवस्तु सत्यत्वेन भासमानानां पदार्थानां मिथ्यात्वभावनयैव स्यात् । मिथ्यात्वेन भावना तु जगति विद्यमानानां पदार्थानां तत्तद्रूपेण ज्ञानं विना न संभवति । तत्तद्रूपेण सकलपदार्थानां ज्ञापको लघूपायः शास्त्रव्यतिरिक्तो न लभ्यते । अतस्तत्तद्रूपेण सकलपदार्थानां ज्ञापनार्थं लघूपायभूतमेतन्न्यायशास्त्रं भगवता कारुणिकेन महर्षिणा गौतमेन प्रणीतम् । अस्मिंश्च शास्त्रे स्थूलदृशां लोकानामनुग्रहाय परमाणुपर्यन्ता एव तारतम्येन सूक्ष्मपदार्था दर्शिताः । तदपेक्षया सूक्ष्मास्तु सांख्यशास्त्रे दर्शिताः । तस्मान्मोक्षस्वरूपपारमार्थिकप्रयोजनसिद्धेः प्रथमोपायभूतमेतन्न्यायशास्त्रमत्यावश्यकमिति मन्य इत्यलमतिपल्लवितेन ।

भगवतो गौतमस्य कालस्तु शा० वा० शकात्पूर्वम् ( ३१०० ) वर्षाणीत्यनुमीयते । भगवद्वात्स्यायनस्य च शा० वा० शकात्पूर्वम् (४००) वर्षाणि । विश्वनाथपञ्चाननस्य तु शके ( १४६८ ) । इदं च न्यायशास्त्रमतिगहनमिति विदुषां विदितमेव । तत्र च मादृशानां प्रवेशस्यासंभवनीयत्वेऽपि श्रीमच्छंकरस्वरूपपरमगुरुगोडबोले इत्युपाह्वश्रीरामशास्त्रिचरणसेवालब्धानुग्रहेण श्रीमन्महामहोपाध्यायाभ्यंकरोपाह्वगुरुवर्यवासुदेवशास्त्रिप्रसादलब्धानेकशास्त्रदृशा प्रवृत्तोऽहमेतच्छास्त्रशोधने । अस्मिन्खलु शास्त्रे यद्यपि गौतमप्रणीतन्यायसूत्रविषये व्याख्याकाराणां विप्रतिपत्तिरुपलभ्यते । कश्चित्किंचिद्वचनं सूत्रत्वेन स्वीकरोति । अन्यश्च भाष्यवचनमेवैतदिति ब्रवीति । तथा च तद्विषये महान्संशयः । तथाऽप्यस्मदीयपुस्तके वृत्तेर्मुद्रितत्वेन तदनुरोधेनैव सूत्रोल्लेखः कृतः । सूत्रपाठे तु सर्वसंमतसूत्रोल्लेखः कृतः । तत्रापि वृत्त्यनुसारिसूत्राणामेव क्रमाङ्कसहितं मुद्रणं कृतम् । अन्येषां च सूत्राणाम् ' '

एतच्चिह्नं निवेशितम् । किं च टीकाद्यालोचनेन तत्र तत्रोपयुक्ता टिप्पण्यपि दत्ता । तथा सूत्रसूची विषयसूची शुद्धिपत्रकं चेति त्रयमपि मुद्रितम् । अत्र च वृत्त्यनुरोधेन सूत्रोल्लेखस्य कृतत्वेऽपि द्वितीयाध्यायस्थद्वितीयाह्निके (१७०) पृष्ठे ‘ विनाशकारणानुप० ’ इत्यस्य सूत्रत्वेनोल्लेखोऽनवधानजनितो बोध्यः । एवं च क्वचिन्मदनवधानात्क्वचिच्च कीलकसंयोजकप्रमादाद्यो व्यत्यासः स गुणैकदृग्भिर्विद्वद्भिः क्षन्तव्य इति विज्ञाप्य विरमति । इति शम् ।

दिगम्बरशर्मा ।



ॐ तत्सद्ब्रह्मणे नमः ।

# गौतमप्रणीतन्यायसूत्राणि

## वात्स्यायनभाष्यविश्वनाथवृत्तिसमेतानि ।

भा०—ॐ नमः प्रमाणाय । * प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम् + । प्रमाणमन्तरेण नार्थप्रतिपत्तिः । नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम् । प्रमाणेन खल्वयं ज्ञाताऽर्थमुपलभ्य तमर्थमभीप्सति जिहासति वा । तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरित्युच्यते । सामर्थ्यं पुनरस्याः फलेनाभिसंबन्धः । समीहमानस्तमर्थमभीप्सञ्जिहासन्वा तमर्थमाप्नोति जहाति वा । अर्थस्तु

---

वृ०—वपुर्लीलालक्ष्मीजितमदनकोटिर्व्रजवधू-
जनानामानन्दं कमपि कमनीयं विरचयन् ।
स कोऽपि प्रेमाणं प्रथयतु मनोमन्दिरचर-
स्त्रिलोकीलोकानां सजलजलदश्यामलतनुः ॥ १ ॥
संयुक्तां युक्तरूपामभिनवनिहितालक्तकारक्तभासा
संध्यापीयूषभानोरतिरुचिरतरां चूर्णयन्तीमभिख्याम् ।
मानव्यामोकनम्रत्रिपुरहरशिरोरम्यभूषाविशेषं
भूयो भव्यं विधातुं चरणनखरुचं भावयामो भवान्याः ॥ २ ॥

---

* एतद्भाष्यकृद्वचनं बोध्यम् । अग्रेऽपि बहून्येतादृशानि सन्ति । अत एव वैलक्षण्यद्योतनार्थं तद्रेखान्वितं मुद्रितम् । + प्रमाणं प्रत्यक्षादि अर्थवदर्थाव्यभिचारि प्रवृत्तिसामर्थ्यात्संवादिप्रवृत्तिजनकत्वात् । प्रवृत्तिजनकतायामवान्तरव्यापारः प्रमाणजन्याऽर्थप्रतीतिः । तथा च संवादिप्रवृत्तिजनकत्वेन प्रामाण्यमनुमीयत इति बोधयितुमिदं वाक्यम् । अतश्च विषयमात्रावभासकस्य ज्ञानस्य स्वग्राहकत्वस्याप्यभावेन स्वधर्मिकप्रमात्वग्राहकताया असंभवेन ज्ञानान्तरस्य चासिद्धप्रमाणभावस्य पूर्वज्ञानप्रामाण्यग्राहकत्वायोगात्प्रामाण्यमुभयथाऽपि दुर्ग्रहमिति शास्त्रं कथं पदार्थतत्त्वज्ञानं जनयेदिति तद्द्वारेण तस्य निःश्रेयसोपायता न संभवतीति शङ्का निराकृता भवतीति भावः ।

सुखं सुखहेतुर्दुःखं दुःखहेतुश्च । सोऽयं प्रमाणार्थोऽपरिसंख्येयः प्राणभृद्भेदस्यापरिसंख्येयत्वात् । अर्थवति च प्रमाणे प्रमाता प्रमेयं प्रमितिरित्यर्थवन्ति भवन्ति* । कस्मात् । अन्यतमापायेऽर्थस्यानुपपत्तेः । तत्र यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमाता । स येनार्थं प्रमिणोति तत्प्रमाणम् । योऽर्थः प्रतीयते तत्प्रमेयम् ।

---

यदीयतर्ककिरणैरान्तरध्वान्तसंततिम् ।
सन्तस्तरन्ति भास्वन्तमक्षपादं नमामि तम् ॥ ३ ॥
अद्वैतं गुरुधर्मयोरिव लसत्क्ष्मामण्डलीमण्डनं
रूपं किंचन पौरुषं गिर इव प्रागल्भ्यसंपादकम् ।
दाने कर्णमिवावतीर्णमपरं दीने दयादक्षिणं
तातं विश्वविसारिचारुयशसं विद्यानिवासं नुमः ॥ ४ ॥
अलसमतिरपीदं विस्तृतं न्यायशास्त्रं
विरहितबहुयत्नो लीलया वेत्तु विज्ञः ।
इति विनिहितचेताः कौशलं कर्तुकामो
गुरुचरणरजोऽहं कर्णधारी करोमि ॥ ५ ॥
विद्यानिवाससूनोः कृतिरेषा विश्वनाथस्य ।
विदुषामतिसूक्ष्मधियाममत्सराणां मुदे भवतु ॥ ६ ॥

प्रयोजनमनभिसंधाय प्रेक्षावन्तो न प्रवर्तन्तेऽतः प्रथमं प्रयोजनमभिधानीयम् । तथा चाऽऽहुः—"सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते। शास्त्रादौ तेन वक्तव्यः संबन्धः सप्रयोजनः" ॥ सिद्धो ज्ञातोऽर्थः प्रयोजनं यस्य तत्तथा । एवं सिद्धसंबन्धमित्यपि । अतस्तत्प्रतिपादनाय भगवानक्षपादः प्रथमं सूत्रयति । अत्र तत्त्वज्ञाननिःश्रेयसयोः शास्त्रतत्त्वज्ञानयोश्च हेतुहेतुमद्भावः प्रमाणादितत्त्वज्ञानयोर्विषयविषयिभावः प्रमाणादिशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः शास्त्रनिःश्रेयसयोश्च प्रयोज्यप्रयोजकभावः संबन्धः । तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रं तथा च शास्त्रनिःश्रेयसयोरपि तत्त्वज्ञानद्वारकहे-

---

* प्रमाणेऽर्थवति विषयाव्यभिचारिणि सति प्रमाताऽर्थवान्प्राप्तविषयः प्रमेयं चार्थवज्ज्ञायमानरूपविशिष्टं प्रमितिश्चार्थवती तन्निष्ठविषयताका भवतीत्यर्थः । प्रमाणाभासेन विषयप्रदर्शने प्रदर्शितप्रकाराभावात् । अन्यथाख्यातिरूपनैयायिकसिद्धान्ते प्रमाणाभासजनितज्ञानविषयताया धर्म्यवृत्तिप्रकारवृत्तित्वान्नार्थवन्ति भवन्तीति भावः ।

---

१ क. प्रमीय° ।

यदर्थविज्ञानं सा प्रमितिः । चतसृषु चैवंविधास्वर्थतत्त्वं परिसमाप्यते * । किं पुनस्तत्त्वम् । सतश्च सद्भावोऽसतश्चासद्भावः । सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति + । असच्च सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति । कथमुत्तरस्य प्रमाणेनोपलब्धिरिति[1] । सत्युपलभ्यमाने तदनुपलब्धेः प्रदीपवत् । यथा दर्शकेन दीपेन दृश्ये गृह्यमाणे तदिव यन्न गृह्यते तन्नास्ति यद्यभविष्यदिदमिव व्यज्ञास्यत विज्ञानाभावान्नास्तीति, एवं प्रमाणेन सति गृह्यमाणे तदिव यन्न गृह्यते तन्नास्ति यद्यभविष्यदिद-

---

तुहेतुमद्भाव एव संबन्ध इति संप्रदायविदः । अत्र च सर्वपदार्थप्रधानो द्वंद्वः समासः । यद्यपि भेदे द्वंद्वविधानादत्र च बहूनां पदार्थानामभेदान्न द्वंद्वसंभवस्तथाऽपि पदार्थतावच्छेदकभेदादेव द्वंद्व इति न दोष इत्यन्यत्र विस्तरः । तत्र च निर्देशे यथावचनं विग्रह इति यथाश्रुतभाष्यानुसारिणः प्रमाणानि च प्रमेयं च संशयश्च प्रयोजनं च दृष्टान्तश्च सिद्धान्तश्चावयवाश्च तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलं च जातयश्च निग्रहस्थानानि चेति विग्रहं वर्णयन्ति । संप्रदायविदस्तु भाष्यस्थवचनपदेन क्वचित्सौत्रं क्वचिदार्थं वचनं गृह्यते । तत्र प्रमाणे प्रमेये च सौत्रं वचनं गृह्यते सप्रयोजनत्वात् । तच्च वक्ष्यते । न तु दृष्टान्तादावेकवचनं सप्रयोजनम् । तथा च दृष्टान्ते द्विवचनम् । अन्वयव्यतिरेकभेदेन दृष्टान्तद्वैविध्यस्य वक्ष्यमाणत्वात् । संशये सिद्धान्ते छले च बहुवचनम् । संशये छले च त्रैविध्यस्य सिद्धान्ते चातुर्विध्यस्य वक्ष्यमाणत्वात् । अन्यथा जातिनिग्रहस्थानयोर्बहुवचनं तथाऽपि व्याहन्येतैकवचनस्यैव लक्षणसूत्रे सत्त्वादिति वदन्ति । नव्यास्तु सर्वत्र

---

* अयं भावः—सुखसाधनत्वेन दुःखसाधनत्वेन वा पूर्वं गृहीते वस्तुनि प्रमाणेनोपदर्शिते संवादिप्रवृत्त्यवधृतप्रमाणभावेन तेन तद्रूपवैशिष्ट्येन ग्राहिते तज्जातीये सुखसाधनत्वस्मरणेनोपादानं दुःखसाधनत्वस्मरणेन परिहार उभयवैलक्षण्यस्मरणेनोपेक्षा चेति फलं परिसमाप्तिरिति । क्वचित्प्रतिबन्धेनोपदानाद्यभावेऽपि तत्त्वसमाप्तिर्मा विघानीति योग्यताग्रहणं कर्तव्यम् । एवं च तत्त्वपरिसमाप्तिर्नाम विनियोगयोग्यतोपेक्ष्यता वेति फलितम् ।

+ सद्भावरूपं वस्तु सदिति प्रतीयमानं भावरूपेण ज्ञायमानं यथाभूतं यद्रूपविशिष्टं वस्तु-तस्ततोऽन्यरूपेणाज्ञातं तत्त्वमित्युच्यत इत्यर्थः ।

---

१ ख. °ति । अस° । २ ख. सत्यप्युप° ।

मिव व्यज्ञास्यत विज्ञानाभावान्नास्तीति[1] । तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयतीति। सच्च खलु * षोडशधा व्यूढमुपदेक्ष्यते तासां खल्वासां सद्विधानाम्—

**प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥**

निर्देशे यथावचनं विग्रहः । चार्थे द्वंद्वः समासः । प्रमाणादीनां तत्त्वमिति शैषिकी षष्ठी । तत्त्वस्य ज्ञानं निःश्रेयसस्याधिगम इति कर्मणि षष्ठ्यौ । एतावन्तो विद्यमानार्थाः । एषामविपरीतज्ञानार्थमिहोपदेशः । सोऽयम + नवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः । आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमः । तच्चैतदुत्तरसूत्रेणानूद्यत इति । ×हेयं तस्य निर्वर्तकं[2] हानमात्यन्तिकं तस्योपायोऽधिगन्तव्य इत्येतानि ÷चत्वार्यर्थपदानि सम्यग्बुद्ध्वा निःश्रेयसमधिगच्छति । तत्र संशयादीनां पृथग्वचनमनर्थकं संशयादयो यथासंभवं प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिच्यन्त इति । सत्यमेतत् । इमास्तु[3] धर्मार्थकाममोक्षाणां

---

प्रथमोपस्थितैकवचनेनैव विग्रहः । न ह्यत्र बहुवचनेनैव प्रमाणादीनां बहुत्वं परिच्छिद्यते किंत्वग्रिमविभागेन । न ह्येकद्वित्रधवखदिरादौ धवश्च खदिरश्च पलाशश्चेति न विगृह्यते । अत एव प्रयोजनस्यैकवचनान्तत्वेऽपि तद्विभागाकरणेऽपि सुखदुःखाभावतत्साधनभेदेन तस्य बहुत्वं न विरुध्यत इति प्राहुः । अत्र च निःश्रेयसे सिद्धे पटादिवत्तत्प्राप्तये न प्रयत्नान्तरमपेक्षितमिति प्रतिपादनायाधिगमपदम् । ननु प्रमाणादयः पदार्था इति शब्दात्प्रथमसूत्रादेव वा

---

* असतां प्रमाणविषयत्वेऽपि तेषां भावपरतन्त्रत्वाच्चतुर्वर्गानन्तर्भावाद्वा भावप्रपञ्चनेनैवाभावप्रपञ्चस्याप्युद्दिष्टप्रायत्वाद्वाऽसद्भेदा नोच्यन्त इति बोध्यम् । व्यूढं संक्षिप्तमित्यर्थः ।
+ अनवयवेन साकल्येनेत्यर्थः । × हेयं दुःखं तस्य निर्वर्तकमविद्यातृष्णे धर्माधर्मौ चेत्यर्थः ।
× अर्थपदानि शास्त्रप्रतिपाद्या विषया इत्यर्थः ।

---

१ क. °ति । तच्च । २ ख. ग निवर्त° । ३ क. ग. °स्तु चत° ।

क्रमेण बोधिकाश्चतस्रो विद्याः *पृथक्प्रस्थानाः प्राणभृतामनुग्रहा-योपदिश्यन्ते, यासामान्वीक्षिकी चतुर्थीयं न्यायविद्या । तस्याः पृथक्प्रस्थानाः संशयादयः पदार्थाः । तेषां पृथग्वचनमन्तरेणा-ध्यात्मविद्यामात्रमियं स्यात्, यथोपनिषदः । तस्मात्संशयादिभिः पदार्थैः पृथक्प्रस्थाप्यते । तत्र नानुपलब्धे न निर्णीतेऽर्थे + न्यायः प्रवर्तते किं तर्हि संशयितेऽर्थे । यथोक्तम्–' विमृश्य पक्षप्रतिपक्षा-भ्यामर्थावधारणं निर्णयः ' इति । विमर्शः संशयः । पक्षप्रति-पक्षौ न्यायप्रवृत्तिः । अर्थावधारणं निर्णयस्तत्त्वज्ञानमिति । स चायं किंस्विदिति वस्तुविमर्शमात्रमनवधारणं ज्ञानं संशयः प्रमे-येऽन्तर्भवन्नेवमर्थं पृथगुच्यते । अथ प्रयोजनम् । येन प्रयुक्तः × प्रवर्तते तत्प्रयोजनम् । यमर्थमभीप्सञ्जिहासन्वा कर्माऽऽरभते तेनानेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ताः । तदाश्रयश्च न्यायः प्रवर्तते । कः पुनरयं न्यायः । प्रमाणैरर्थपरी-क्षणं न्यायः ⁂ । प्रत्यक्षागमाश्रितमनुमानं साऽन्वीक्षा । प्रत्यक्षागमा-भ्यामीक्षितस्यान्वीक्षणमन्वीक्षा । तया प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम् । यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्या-याभासः स इति तत्र वादजल्पौ सप्रयोजनौ । वितण्डा तु परी-क्ष्यते ✱ । वितण्डया प्रवर्तमानो वैतण्डिकः । स प्रयोजनमनुयुक्तो

---

तत्त्वज्ञानं स्यादिति चेन्न । तेषां विशिष्यज्ञानं हि तत्त्वज्ञानम् । तच्चोद्देशलक्ष-णपरीक्षाप्रकाशकाच्छास्त्रादेव । शास्त्रं हि विशिष्टानुपूर्विका पञ्चाध्यायी । अध्यायस्त्वाह्निकसमूहः । आह्निकं तु प्रकरणसमूहः । प्रकरणं तु तादृशसूत्रस-

---

* पृथक्प्रस्थानाः प्रतिपाद्यविषयवैलक्षण्यविशिष्टा इत्यर्थः । तथा हि—अग्निहोत्रह-वनादिप्रस्थाना त्रयी । हलशकटादिप्रस्थाना वार्ता । स्वाम्यमात्यभेदानुविधायिनी दण्ड-नीतिः । संशयादिभेदानुविधायिन्यान्वीक्षिकी । + नीयते प्राप्यते विवक्षितार्थसिद्धिरने-नेति व्युत्पत्त्या प्रतिज्ञाद्यवयवसमूहो न्यायः । × सुखाप्तिदुःखहानेच्छाजनितकृतिमानित्यर्थः । ⁂ प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि तैरर्थस्य लिङ्गस्य परीक्षण-मिति भावः । ✱ प्रयोजनस्य सकलकर्मविद्याव्यापकत्वोक्त्या वितण्डायां स्वपक्षस्थापनाभा-वेन प्रयोजनाभावकोटिः परपक्षप्रतिषेधमात्रेणापि प्रयोजनवत्ताकोटिश्चोपस्थापितेति संशया-त्क्रमप्राप्तान्दृष्टान्तादीनुल्लङ्घ्य वितण्डापरीक्षावसर इति भावः ।

यदि प्रतिपद्यते सोऽस्य पक्षः सोऽस्य सिद्धान्त इति वैतण्डिकत्वं जहाति । अथ न प्रतिपद्यते नायं लौकिको न परीक्षक इत्यापद्यते । अथापि परपक्षप्रतिषेधज्ञानं प्रयोजनं ब्रवीति, एतदपि तादृगेव । यो ज्ञापयति यो जानाति[2] येन ज्ञाप्यते यच्च प्रतिपद्यते यदि तदा वैतण्डिकत्वं जहाति । अथ न प्रतिपद्यते परपक्षप्रतिषेधज्ञानं[3] प्रयोजनमिति । एतदस्य वाक्यमनर्थकं भवति । वाक्यसमूहश्च स्थापनाहीनो वितण्डा । तस्य यद्यभिधेयं[4] प्रतिपद्यते सोऽस्य पक्षः स्थापनीयो भवति । अथ न प्रतिपद्यते प्रलापमात्रमनर्थकं भवति वितण्डात्वं निवर्तत इति । अथ दृष्टान्तः । प्रत्यक्षविषयोऽर्थः, * यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते । स च प्रमेयम् । तस्य पृथग्वचनं च तदाश्रयावनुमानागमौ । तस्मिन्सति स्यातामनुमानागमावसति च न स्याताम् । तदाश्रया च न्यायप्रवृत्तिः । दृष्टान्तविरोधेन च परपक्षप्रतिरोधो वचनीयो भवति । दृष्टान्तसमाधिना च स्वपक्षः साधनीयो भवति । नास्तिकश्च दृष्टान्तमभ्युपगच्छन्नास्तिकत्वं + जहाति अनभ्युपगच्छन्किंसाधनः परमुपालभेतेति निरुक्तेन दृष्टान्तेन शक्यमभिधातुम्— ' साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ' । ( १ । १ । ३६ ) ' तद्विपर्ययाद्वा विपरीतम् ' ( १ । १ । ३७ ) इति । अस्त्ययमित्यनुज्ञायमानोऽर्थः सिद्धान्तः । स च प्रमेयम् । तस्य पृथग्वचनं सत्सु सिद्धान्तभेदेषु वादजल्पवितण्डाः प्रवर्तन्ते नातोऽन्यथेति । साधनीयार्थस्य यावति शब्दसमूहे सिद्धिः परिसमा-

---

मूहः । सूत्रं तु तादृशवाक्यसमूहः । वाक्यं तु तादृशपदसमूह इति वदन्ति । अत्र समूहशब्देनानेकत्वं विवक्षितम् । तेनाध्यायादेराह्निकादिद्वयात्मकत्वेऽपि न

---

* अनुमानमात्रेणाऽऽगममात्रेण वा गम्यस्यापि दृष्टान्ततया मन्त्रायुर्वेदप्रामाण्यवदणुश्यामतानित्यत्ववद्वेति च सूत्रकारेणैवोपादानाद्यथाश्रुतार्थकत्वे लक्षणासंगतिरिति व्याचष्टे यत्रेत्यादि । क्वचित्केवललौकिकानां क्वचित्केवलपरीक्षकाणां क्वचिल्लौकिकानां परीक्षकाणां चेति व्याख्येयम् । + तस्य क्षणभङ्गवादित्वेन पूर्वदृष्टव्यक्तीनां तद्गतधर्माणां च साधनकाले प्रदर्शनासंभवादिति भावः ।

---

१ क. °ज्ञापनं । २ क. ख. °तियच्च ज्ञा° । ३ क. °ज्ञापनं । ४ क. °धेयत्वं प्र° ।

प्यते तस्य पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते । तेषु प्रमाणसमवाय आगमः * प्रतिज्ञा, हेतुरनुमानम्, उदाहरणं +प्रत्यक्षम्, ×उपनयनमुपमानम्, सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति । सोऽयं ÷परमो न्याय इति । एतेन वादजल्पवितण्डाः प्रवर्तन्ते नातोऽन्यथेति । तदाश्रया च तत्त्वव्यवस्था । ते चैतेऽवयवाः शब्दविशेषाः सन्तः प्रमेयेऽन्तर्भूता एवमर्थं पृथगुच्यन्त इति । तर्को न प्रमाणसंगृहीतो न प्रमाणान्तरम् । प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय परिकल्प्यते । तस्योदाहरणम्—किमिदं ÷÷ जन्म कृतकेन हेतुना निर्वर्त्यत आहोस्विदकृतकेन, अथाऽऽकस्मिकमिति । एवमविज्ञातेऽर्थे कारणोपपत्त्या ऊहः प्रवर्तते । यदि कृतकेन हेतुना निर्वर्त्यते[१] हेतूच्छेदादुपपन्नोऽयं जन्मोच्छेदः । अथाकृतकेन हेतुना ततो हेतूच्छेदस्याशक्यत्वादनुपपन्नोऽयं जन्मोच्छेदः । अथाऽऽकस्मिकमतोऽकस्मान्निर्वर्त्यमानं[२] न पुनर्निवर्त्स्यतीति[३] निवृत्तिकारणं नोपपद्यते[४] तेन जन्मानुच्छेद

क्षतिः । अत्र च यद्यपि मोक्षजनकज्ञानविषयत्वेन प्रमेयमेवाऽऽदौ निरूपयितुमर्हम् । तथाऽपि प्रमाणस्य सकलपदार्थव्यवस्थापकत्वेन प्राधान्यात्प्रथममुद्देशः । ततोऽवसरतो बुभुत्सितप्रमेयस्य । ततश्च पदार्थव्यवस्थापनस्य न्यायाधीनतया

* उत्तरकालिककृतिप्रकारकज्ञानजनकशब्दः प्रतिज्ञा । नन्वत्राऽऽगमः प्रतिज्ञेति सुतरां वक्तुं न शक्यते, आगमस्य तत्त्वव्यवच्छेदकत्वात्प्रतिज्ञातार्थस्य च प्रतिपाद्यत्वादिति चेन्न । आगमाधिगतार्थस्य प्रतिपाद्यत्वाल्लक्षणयाऽऽगमः प्रतिज्ञेत्युच्यत इति न दोषः । + स्मृतिविषयस्य प्रत्यक्षतः पुनरुपदर्शनादुदाहरणं प्रत्यक्षं यस्मात्पूर्वानुभूतमर्थं स्मरति स्मृतं च विषयमुदाहरणत्वेनाऽऽदत्ते तेन पूर्वानुभवप्रसिद्धमनुविधीयमानं प्रत्यक्षमिव प्रत्यक्षमिति भावः । × ननु कः पुनरुपमानार्थ इति चेत् । अत्रोच्यते । संशयाभाव एवेति बोध्यं यथा हि प्रत्यक्षे न विप्रतिपद्यत एवमुदाहरणेऽपीति भावः । ÷ परमत्वं नाम विप्रतिपन्नपुरुषप्रतिपादकत्वम् । एकैकशः प्रमाणानि प्रवृत्तानि न विप्रतिपन्नं पुरुषं प्रतिपादयन्ति । वाक्यभावापन्नानि तु विप्रतिपन्नं प्रत्यपि प्रतिपादयन्ति । अतोऽयं परम इति बोध्यम् । ÷÷ निकायविशिष्टाभिरपूर्वाभिः शरीरेन्द्रियबुद्धिवेदनाभिरभिसंबन्धो जन्म ।

१ ग. निवर्त्य° । २ ग. °न्निवर्त्यमा° । ३ ख. °निर्वर्त्स्य । ग. °निर्वर्त्स्यती° । ४ क. °ते न ज° । ५ च. °तुमुचितम् ।

इति । एतस्मिंस्तर्कविषये कर्मनिमित्तं जन्मेति प्रमाणानि प्रवर्तमानानि तर्केणानुगृह्यन्ते । तत्त्वज्ञानविषयस्य विभागात्तत्त्वज्ञानाय कल्प्यते तर्क इति । सोऽयमित्थंभूतस्तर्कः प्रमाणसहितो वादे साधनायो *पालम्भायै वाऽर्थस्य भवतीत्येवमर्थं पृथगुच्यते प्रमेयान्तर्भूतोऽपीति । निर्णयस्तत्त्वज्ञानं प्रमाणानां +फलम् । तदवसानो वादः । तस्य पालनार्थं जल्पवितण्डे । तावेतौ तर्कनिर्णयौ लोकयात्रां वहत इति । सोऽयं निर्णयः प्रमेयान्तर्भूत एवमर्थं पृथगुद्दिष्ट इति । वादः खलु नानाप्रवक्तृकः प्रत्यधिकरणसाधनोऽन्यतराधिकरणनिर्णयावसानो ×वाक्यसमूहः । पृथगुद्दिष्ट उपलक्षणार्थम्, उपलक्षितेन व्यवहारस्तत्त्वज्ञानाय भवतीति । ÷ तद्विशेषौ

---

न्याये निरूपणीये ऽभ्यर्हितयोर्न्यायपूर्वाङ्गयोः संशयप्रयोजनयोः । तत्राप्यभ्यर्हिततया संशयस्य प्रथमम् । न च निर्णीतेऽपि मननविधानान्न संशयस्य न्यायाङ्गत्वमिति वाच्यम् । आहार्यसंशयोपगमात् । यद्यपि प्रयोजनं न न्यायाङ्गमपि तु तज्ज्ञानम् । तथाऽपि तदेव निरूपणीयम् । न तु ज्ञाननिरूपणापेक्षेति । परप्रत्यायने दृष्टान्तस्य मूलत्वादनन्तरं दृष्टान्तस्य । दृष्टान्तमूलको न्यायः सिद्धान्तविषय इत्यतोऽनन्तरं सिद्धान्तस्य । ततश्चावसरतः सिद्धान्ताधीनस्य पञ्चावयवरूपस्यन्यायस्य । ततश्चैककार्यतया न्यायसहकारिणस्तर्कस्य । ततश्च तर्कजन्यतया निर्णयस्य । ततश्च निर्णयानुकूलत्वाद्वादस्य । जल्पस्यापि वादकार्यकारित्वाद-

---

* उपालम्भः परपक्षदूषणम् । + यद्येवमिन्द्रियापातजन्म प्रत्यक्षज्ञानमपि तत्त्वज्ञानमिति निर्णयः स्यादत आह—प्रमाणानामिति । अनेन पञ्चावयववाक्यमुपलक्षयति । तत्र सतर्काणां प्रमाणानां समवायात् । परमार्थतस्तु तर्कपूर्वकस्तत्त्वनिश्चयो विनिर्णय इति प्रत्यक्षादीनामपि तर्कसहायानां निर्णयफलत्वं बोध्यम् । × अधिक्रियत इत्यधिकरणं साध्यम् । तदधिकृत्य साधनप्रवृत्तेः । उभाभ्यां वादिप्रतिवादिभ्यां स्वस्वसाध्ये साधनं वक्तव्यम् । अन्यतरस्मिन्साध्ये निर्णयः । वादे हि तावद्भूते यावदन्यतरस्मिन्निर्णयो न जातः । तत्त्वबुभुत्स्वोर्वादिनोर्वादेऽधिकारात् । जल्पे तु पुरुषशक्तिपरीक्षालक्षणेऽप्रतिभादिनाऽपि पराजयोपपत्तेर्नावश्यंतत्त्वनिर्णयः । तस्मादन्यतरनिर्णयावसानत्वेन जल्पाद्भेदो वादस्येति ज्ञेयम् । ÷ विशेषोऽङ्गाधिक्यमङ्गहानिश्च । छलजातिनिग्रहस्थानप्रयोगादाधिको जल्पः । स प्रतिपक्षस्थापनाहीनस्तु वितण्डा । विषयभेदाच्च भेदः । शिष्यादिविषयो वादः । शिष्यमाणविषये जल्पवितण्डे ।

---

१ ग. वादिसा° । २ ख. °य चार्थे । ३ ग. °ष्ट ल° । ४ ग. °णार्थः, उ° ।

जल्पवितण्डे तत्त्वाध्यवसायसंरक्षणार्थमित्युक्तम् । निग्रहस्थानेभ्यः पृथगुद्दिष्टा हेत्वाभासा वादे चोदनीया भविष्यन्तीति । जल्पवितण्डयोस्तु निग्रहस्थानानीति च्छलजातिनिग्रहस्थानानां पृथगुपदेश उपलक्षणार्थ इति । उपलक्षितानां स्ववाक्ये परिवर्जनम् । छलजातिनिग्रहस्थानानां परवाक्ये पर्यनुयोगः । जातेश्च परेण प्रयुज्यमानायाः सुलभः समाधिः स्वयं च सुकरः *प्रयोग इति । सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना—

---

नन्तरं जल्पस्य । विजयरूपैककार्यानुकूलतया वितण्डायाः । कथात्रयस्यापि दूषणसापेक्षतयाऽनन्तरं दूषणेषु निरूपणीयेषु वादे देशनीयत्वरूपोत्कर्षवत्त्वाद्धेतुवदाभासमानत्वाच्चाऽऽदौ हेत्वाभासानाम् । ततश्च हेत्वाभासोपजीवनेन च्छलस्य । स्वव्याघातकत्वेनात्यन्तासदुत्तरत्वात्ततो जातेः । कथावसानत्वेनाऽर्थादनन्तरं निग्रहस्थानानामिति । अत्र च प्रमेयान्तःपातिबुद्धिरूपस्यापि संशयादेर्निरनुयोज्यानुयोगरूपनिग्रहस्थानान्तःपातिनोश्छलजात्योश्च प्रकारभेदेन प्रतिपादनं शिष्यबुद्धिवैशद्यार्थमस्तु । निग्रहस्थानान्तःपातिनां हेत्वाभासानां पृथगभिधानप्रयोजनं तु जानाति भगवानक्षपाद एव । भाष्ये तु वादे देशनीयतया हेत्वाभासानां पृथगुपन्यास इत्युक्तम् । अत्र वार्तिकम् । यदि वादे देशनीयत्वात्पृथगभिधानं तदा न्यूनाधिकापसिद्धान्तानां वादे देशनीयत्वात्पृथगभिधानं स्यात् । यदि पृथगभिधानाद्वादे देशनीयत्वं तदा संशयादीनामपि वादे देशनीयत्वं स्यात् । तस्मादान्वीक्षिकीत्रयीवार्तादण्डनीतिरूपविद्याप्रस्थानभेदज्ञापनार्थं संशयादेर्हेत्वाभासस्य च पृथग्वचनमिति । तदप्यसत् । निग्रहस्थानान्तर्गतत्वेनैव तन्निरूपणेन प्रस्थानभेदसंभवात् । वयं तु हेत्वाभासानां न निग्रहस्थानत्वं तथा सति सर्वत्र हेत्वाभाससत्त्वात्सर्वस्यैव निगृहीतत्वापत्तेः । तस्माद्धेत्वाभासप्रयोगो निग्रहस्थानं तद्विभाजकसूत्रस्थहे-

---

* परेण जातौ प्रयुक्तायां प्राश्निकान्ब्रवीति जातिरनेन प्रयुक्तेति त एनं पर्यनुयुञ्जीरन्कथं जातिः कतमा जातिरिति । अतो जात्यभिज्ञः शक्नोति वक्तुमेवं जातिरियं च जातिरिति । एवं च सुकरः प्रयोग इति बोध्यम् ।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥

तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमार्थं यथाविद्यं वेदितव्यम् । इह त्वध्यात्मविद्यायामात्मादितत्त्वज्ञानम् । निःश्रेयसाधिगमोऽपवर्गप्राप्तिः ॥ १ ॥

---

त्वाभासपदं च तत्प्रयोगपरम् । तत्र च प्रयोगस्य न लक्षणमपेक्षणीयमपि तु हेत्वाभासानामित्यत उक्तम्—'हेत्वाभासाश्च यथोक्ताः' ( ५ । २ । २५ ) इति चरमसूत्रम् । न च हेत्वाभासत्वावच्छेदकप्रवेशादेव पृथङ्निरूपणापेक्षेति वाच्यम् । तथा सति प्रमाणतर्कसाधनोपालम्भ इति वादाद्यवच्छेदकप्रमाणादेरपि पृथङ्निरूपणापत्तेरिति युक्तमुत्पश्यामः । अत्र केचित् । सूत्रादौ मङ्गलाकरणेन मङ्गलं न प्रामाणिकमित्यत्र सूत्रकृतां तात्पर्यं वर्णयन्ति । तदसत् । कृतस्याप्यनिबन्धनसंभवाद्विघ्नाभावनिर्णयेनाकरणसंभवाच्च । वयं तु 'प्रमाणं प्राणनिलयः' इति भगवन्नामगणान्तःपातिप्रमाणशब्दस्योच्चारणमेव मङ्गलमिति ब्रूमः । अत्र चोद्देशलक्षणपरीक्षाणां पूर्वपूर्वसापेक्षतया प्रथममुद्देशोऽनन्तरं लक्षणं प्रसङ्गाच्छलपरीक्षेति सोद्देशपदार्थलक्षणच्छलपरीक्षा प्रथमाध्यायार्थः । तत्र च सपरिकरन्यायलक्षणं प्रथमाह्निकार्थः । तत्र च सप्रयोजनाभिधेयप्रतिपादकं प्रथमद्वितीयसूत्राभ्यामेकं प्रकरणम् । ततः प्रमाणलक्षणप्रकरणं ततः प्रमेयलक्षणप्रकरणं ततो न्यायपूर्वाङ्गप्रकरणं ततो न्यायसिद्धान्तप्रकरणं ततो न्यायरूपप्रकरणं ततो न्यायोत्तराङ्गप्रकरणमिति प्रथमाह्निके सप्त प्रकरणानि । श्रवणादनु पश्चादीक्षाऽन्वीक्षा—उन्नयनम्, तन्निर्वाहिका सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते । तथा च 'न्यायो मीमांसा धर्मशास्त्राणि' इति श्रुतिः । 'पुराणन्यायमीमांसा' इत्यादि स्मृतिः । 'मीमांसा न्यायतर्कश्च उपाङ्गः परिकीर्तितः' इति पुराणम् । "त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् । आन्वीक्षिकीं चाऽऽत्मविद्यां वार्तारम्भांश्च लोकतः" इति मनुः । तथा 'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' इत्यादि मोक्षधर्मे । "तत्रोपनिषदं तात परिशेषं तु पार्थिव । मथ्नामि मनसा तात दृष्ट्वा चाऽऽन्वीक्षिकीं पराम्" इत्युपनिषदर्थश्चाऽऽन्वीक्षिक्यनुसारी ग्राह्य इत्युक्तमिति ॥ १ ॥

भा०—* तत्खलु निःश्रेयसं किं तत्त्वज्ञानानन्तरमेव भवति । नेत्युच्यते ! किं तर्हि तत्त्वज्ञानात्—

दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरा[१]पायादपवर्गः ॥ २ ॥

तत्राऽऽत्माद्यपवर्गपर्यन्ते प्रमेये मिथ्याज्ञानमनेकप्रकारकं वर्तते—आत्मनि तावन्नास्तीति, + अनात्मन्यात्मेति, दुःखे सुखमिति, अनित्ये नित्यमिति, अत्राणे त्राणमिति, सभये निर्भयमिति, जुगुप्सितेऽभिमतमिति, हातव्येऽप्रतिहातव्यमिति । प्रवृत्तौ नास्ति कर्म, नास्ति कर्मफलमिति । दोषेषु नायं दोषनिमित्तः संसार इति । प्रेत्यभावे नास्ति जन्तुर्जीवो वा, सत्त्व आत्मा वा यः प्रेयात्प्रेत्य च भवेदिति, अनिमि[२]त्तं जन्म, अनिमित्तो जन्मोपरम इत्यादिमान्प्रेत्यभावोऽनन्तश्चेति नैमित्तिकः सन्न कर्मनिमित्तः प्रेत्यभाव इति देहेन्द्रियबुद्धिवेदनासंतानोच्छेदप्रतिसंधानाभ्यां निरात्मकः प्रेत्यभाव इति । अपवर्गो भीष्मः । स खल्वयं सर्वकार्योपरमः सर्वविप्रयोगेऽपवर्गे बहु च भद्रकं लुप्यत इति कथं

---

वृ०—ननु तत्त्वज्ञानस्य न साक्षादेव निःश्रेयसहेतुत्वम् । निःश्रेयसं तावद्द्विविधं परापरभेदात् । तत्रापरं जीवन्मुक्तिलक्षणं तत्त्वज्ञानानन्तरमेव, तदप्यवधारितात्मतत्त्वस्य नैरन्तर्याभ्यासापहृतमिथ्याज्ञानस्य प्रारब्धं कर्मोपभुञ्जानस्य । × परं तु क्रमेण । तत्र क्रमप्रतिपादनायेदं सूत्रमिति । दुःखादीनां मध्ये यदुत्तरोत्तरं तेषामपाये तदनन्तरस्य तत्संनिहितस्य पूर्वपूर्वस्यापायादपवर्गः । प्रयोजकत्वं प्रयोज्यत्वं वा पञ्चम्यर्थः । दण्डाभावाद्घटाभाव इतिवत्स्वरूपसंबन्धविशेष एव तत् । तदयमर्थः । तत्त्वज्ञानेन विरोधितयाऽपहृते मिथ्याज्ञाने कारणाभावाच्च निवृत्ते रागद्वेषात्मके दोषे तदभावाच्च

---

* विना परीक्षां तत्त्वनिर्णयायोगादनिर्णीतप्रयोजनसंबन्धानां लक्षणपरीक्षयोरवकाशाभावः । न च परीक्षां विना प्रयोजनसंबन्धनिर्णय इति तत्परीक्षणार्थं द्वितीयं सूत्रमारभ्यत इति बोध्यम् । + सदसतोः प्रमाणगम्यत्वं सारूप्यं क्रियागुणव्यपदेशस्तद्रहितता च विशेषः । अतश्च विशेषाग्रहात्सारूप्यग्रहाच्च विपर्ययः । आत्मानात्मनोरहंकारविषयत्वं सारूप्यमिच्छाद्याधारानाधारता च विशेषः । × निःश्रेयसमित्यर्थः ।

---

१ °राभावाद° इति न्यायसूत्रविवरणपाठः । २ ग. °मित्तं ज° ।

बुद्धिमान्सर्वसुखोच्छेदमचैतन्यमममुमपवर्गं रोचयेदिति । एतस्मान्मिथ्याज्ञानादनुकूलेषु रागः प्रतिकूलेषु द्वेषः । रागद्वेषाधिकाराच्चासूयेर्ष्यामायालोभादयो दोषा भवन्ति । दोषैः प्रयुक्तः शरीरेण प्रवर्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति । वाचाऽनृतपरुषसूचनासंबद्धानि । मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यं चेति । सेयं पापात्मिका प्रवृत्तिरधर्माय । अथ शुभा शरीरेण दानं परित्राणं परिचरणं च, वाचा सत्यं हितं प्रियं स्वाध्यायं चेति, मनसा दयामस्पृहां श्रद्धां चेति । सेयं धर्माय । अत्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ । यथाऽन्नसाधनाः प्राणाः ' अन्नं वै प्राणिनः प्राणाः ' इति । सेयं कुत्सितस्याभिपूजितस्य च जन्मनः कारणम् । जन्म पुनः शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः । तस्मिन्सति दुःखम् । तत्पुनः प्रतिकूलवेदनीयं बाधना पीडा ताप इति । त इमे मिथ्याज्ञानादयो * दुःखान्ता धर्मा अविच्छेदेनैव प्रवर्तमानाः संसार इति । यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति तदा मिथ्याज्ञानापाये दोषा अपयन्ति दोषापाये + प्रवृत्तिरपैति प्रवृत्त्यपाये जन्मापैति जन्मापाये दुःखमपैति

---

प्रवृत्तेर्धर्माधर्मात्मिकाया अनुत्पत्तौ तदभावाच्च जन्मनो विशिष्टशरीरसंबन्धस्याभावे दुःखाभावादपवर्गः । यद्यपि ज्ञानिनोऽपि रागादयस्तिष्ठन्ति तथाऽप्युत्कटरागाद्यभावे तात्पर्यम् । यद्यपि दोषाणां न धर्मादिजनकत्वं व्यभिचारात्तथाऽपि तत्तद्दोषाणां तत्तद्धर्मादिहेतुत्वाद्दोषापाये धर्माद्यपायः । वस्तुतो विनाऽपीच्छां गङ्गाजलसंयोगादितो धर्मादिसंभवाद्व्यभिचारः । तस्मान्मिथ्याज्ञानजवासनयैवात्र दोषः । तस्याश्च मिथ्याज्ञाननाशात्तत्कालीनतत्त्वज्ञानजवासनातो वा नाश इत्याशय इत्यपि वदन्ति । यद्यपि दुःखापायान्नापवर्गः किंतु स एव सः ।

---

* ननु सूत्रकारोक्तक्रमाद्विपरीतक्रमाभिधानं भाष्यकृद्भिः कस्मात्कृतमिति चेत् । अत्रोच्यते । दुःखादीनां मिथ्याज्ञानपूर्वकत्वेन मिथ्याज्ञानस्य च दुःखादिपूर्वकत्वेनोभयोरनादित्वं सूचयितुमिति बोध्यम् । + जन्मसाधनत्वात्प्रवृत्तिपदेन धर्माधर्मौ ग्राह्यौ । न क्रिया । तस्याः क्षणिकत्वात् ।

---

१ ख. °र्माश्चाति° ।

दुःखापाये चाऽऽत्यन्तिकोऽपवर्गो निःश्रेयसमिति । तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्ययेण व्याख्यातम्—आत्मनि तावदस्तीति, अनात्मन्यनात्मेति । एवं दुःखेऽनित्येऽत्राणे सभये जुगुप्सिते हातव्ये च [1] यथार्थविषयं वेदितव्यम् । प्रवृत्तावस्ति कर्मास्ति कर्मफलमिति । दोषेषु दोषनिमित्तोऽयं संसार इति । प्रेत्यभावे खल्वस्ति जन्तुर्जीवः सत्त्व आत्मा वा यः प्रेत्य भवेदिति निमित्तवज्जन्म निमित्तवाञ्जन्मोपरम इत्यनादिः प्रेत्यभावोऽपवर्गान्त इति नैमित्तिकः सन्प्रेत्यभावः प्रवृत्तिनिमित्त इति सात्मकः सन्देहेन्द्रियबुद्धिवेदनासंतानोच्छेदप्रतिसंधानाभ्यां प्रवर्तत इति । अपवर्गः शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमोऽपवर्गः । बहु च कृच्छ्रं घोरं पापकं लुप्यत इति कथं[3] बुद्धिमान्सर्वदुःखोच्छेदं सर्वदुःखासंविदं[2] अपवर्गं न रोचयेदिति । तद्यथा मधुविषसंपृक्तान्नमनादेयमिति, एवं सुखं * दुःखानुषक्तमनादेयमिति[4] ॥ २ ॥

इति सप्रयोजनाभिधेयप्रकरणम् ॥ १ ॥

---

तथाऽप्यभेद एव पञ्चम्यर्थः । अपवर्गपदं वा तद्व्यवहारपरम् । अनन्तरपदेन जन्मान्तरमेव परामृश्यत इति तु न व्याख्यानं दुःखपदवैयर्थ्यापत्तेः । दुःखानुत्पत्तेश्चरमदुःखध्वंसप्रयोजकत्वं कल्प्यत इत्याशयेनेदमित्यपि कश्चित् ॥ २ ॥

इति सूत्रवृत्तौ सप्रयोजनाभिधेयप्रकरणम् ॥ १ ॥

---

* अनुषङ्गो ह्यविनाभावः । यत्रैकं तत्रेतरदिति । अथवा समाननिमित्तताऽनुषङ्गः । यान्येव सुखसाधनानि तान्येव दुःखसाधनानीति । समानाधारता वाऽनुषङ्गः । यत्र सुखं तत्र दुःखमिति । समानोपलभ्यता वाऽनुषङ्गः । येन सुखमुपलभ्यते तेनैव दुःखमिति चतुर्धाऽनुषङ्गो बोध्यः ।

---

१ ख. °थायथं वे° । २ क. ख. 'दप° । ३ ख. 'ति । यद्य° । ४ ख. दुःखसंपृक्त° । ग. दुःखाक्त° ।

भा०—त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः, उद्देशो लक्षणं परीक्षा चेति। तत्र नामधेयेन पदार्थमात्रस्याभिधानमुद्देशः। तत्रोद्दिष्टस्यातत्त्वव्यवच्छेदको धर्मो लक्षणम्। लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा। तत्रोद्दिष्टस्य प्रविभक्तस्य लक्षणमुच्यते यथा प्रमाणानां प्रमेयस्य च। उद्दिष्टस्य लक्षितस्य च विभागवचनम्। यथा छलस्य—' वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ' ( १। २। ५१ ) ' तत्त्रिविधम् ' ( १। २। ५२ ) इति। अथोद्दिष्टस्य * विभागवचनम्—

**प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥**

अक्षस्याक्षस्य +प्रतिविषयं वृत्तिः प्रत्यक्षम्। वृत्तिस्तु संनिकर्षो ज्ञानं वा। यदा संनिकर्षस्तदा ज्ञानं प्रमितिः। यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः× फलम्। अनुमानम्। मितेन लिङ्गेन[२] लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानम्। ÷ उपमानं सारू[३]प्यज्ञानं यथा गौरेवं गवय इति। सारूप्यं तु सामान्ययोगः।

वृ०—अथ यथोद्देशं लक्षणस्यापेक्षितत्वात्प्रथमोद्दिष्टप्रमाणं लक्षयति विभजते च। तत्र तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानं प्रशब्दविशिष्टेन माधातुना प्रत्याय्यते। तत्करणत्वं प्रमाणत्वम्। ज्ञानं चात्रानुभवो विवक्षितस्तेन स्मृतिकरणे

* विभागस्याप्युद्देश एवान्तर्भावात्त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरित्यनेन सह न विरोधः। विभागेऽपि पदार्थमात्राभिधानेनोद्देशलक्षणसत्त्वात्। विभागकरणं च प्रमाणान्तरसत्त्वशङ्कानिवृत्त्यर्थम्। लक्षणेनेतरव्यावृत्तधर्मबोधनेऽपि प्रमाणान्तराभावबोधनस्याशक्यत्वादिति बोध्यम्। + प्रतिगतमक्षं प्रत्यक्षमिति प्रादिसमासः। भाष्यं तु फलितार्थकथनपरम्। अन्यथाऽव्ययीभावसमासाश्रयणेऽक्षस्येति षष्ठ्यनुपपत्तिः स्यात्। ' अभितःपरितः ' इति द्वितीयापत्तेरिति भावः। × संनिकर्षस्य व्यापारत्वे प्रमितिः फलम्। ज्ञानस्य व्यापारत्वे हानादिबुद्धयः फलमिति विवेक्तव्यम्। ÷ अत्र यत इत्यध्याहारः। तेनानुमितिकरणभूतलिङ्गपरामर्शाभिधानात्तस्य प्रमाणतोपपद्यते। अनुमित्यभिधाने तु प्रमाणता नोपपद्येत। हानादिबुद्धिकारणत्वादनुमितेरेव प्रमाणतेति यथाश्रुतमेव वा भाष्यं व्याख्येयम्।

१ ग. 'ष्टस्य त°'। २ क. ग. 'ङ्गेनार्थ°'। ३ ख. ग. सामीप्य°'। ४ ख. ग. सामीप्यं।

शब्दः, शब्द्यतेऽनेनार्थ इत्यभिधीयते ज्ञाप्यते । उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्याद्बोद्धव्यम् । प्रमीयतेऽनेनेति करणार्थाभिधानो हि प्रमाणशब्दः । तद्विशेषसमाख्याया अपि तथैव व्याख्यानम् । किं पुनः प्रमाणानि प्रमेयमभिसंप्लवन्ते, अथ प्रमेयं व्यवतिष्ठन्त * इति । उभयथा दर्शनम् । अस्त्यात्मेत्याप्तोपदेशात्प्रतीयते । तत्रानुमानम्—'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति' ( १ । १ । १० ) । प्रत्यक्षं युञ्जानस्य योगसमाधिजमात्ममनसोः संयोगविशेषादात्मा प्रत्यक्ष इति । अग्निराप्तोपदेशात्प्रतीयतेऽत्राग्निरिति । प्रत्यासीदता धूमदर्शनेनानुमीयते । प्रत्यासन्नेन च प्रत्यक्षत उपलभ्यते । व्यवस्था पुनरग्निहोत्रं जुहुयात्स्वर्गकाम इति । लौकिकस्य स्वर्गे न लिङ्गदर्शनं न प्रत्यक्षम् । स्तनयित्नुशब्दे श्रूयमाणे शब्दहेतोरनुमानम् । तत्र न प्रत्यक्षं नाऽऽगमः । पाणौ प्रत्यक्षत उपलभ्यमाने नानुमानं नाऽऽगम इति । सा चेयं प्रमितिः प्रत्यक्षपरा । जिज्ञासितमर्थमाप्तोपदेशात्प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते । लिङ्गदर्शनानुमितं च प्रत्यक्षतो दिदृक्षते । प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्तते । पूर्वोक्तमुदाहरणमग्निरिति । प्रमातुः प्रमातव्येऽर्थे प्रमाणानां संकरो[१]ऽभिसंप्लवः । असंकरो व्यव[२]स्थेति ॥ ३ ॥

इति त्रिसूत्रीभाष्यम् ।

---

नातिव्याप्तिः । लक्षितानां प्रमाणानां विभागः प्रत्यक्षानुमानोपमानशब्दा इति । विभागस्योद्देश एवान्तर्भूतत्वादयं विशेषोद्देशः । प्रत्येकलक्षणं तु वक्ष्यते ॥ ३ ॥

इति त्रिसूत्रीवृत्तिः समाप्ता ।

---

* एकैकस्मिन्प्रमेये बहूनां प्रमाणानां व्यापार एकैकस्यैव वेत्यर्थः ।

---

१ ग. संभवोऽ । २ ग. °संभवो व्य° ।

भा०—अथ विभक्तानां लक्षणवचनमिति—

इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

इन्द्रियस्यार्थेन संनिकर्षादुत्पद्यते यज्ज्ञानं * तत्प्रत्यक्षम् । न तर्हीदानीमिदं भवति ' आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेन ' इति । + नेदं कारणावधारणमेतावत्प्रत्यक्षे कारणमिति, किंतु विशिष्टकारणवचनमिति × । यत्प्रत्यक्षज्ञानस्य

---

वृ०—अथ विभक्तानि यथाक्रमं लक्षयितुमारभते । तत्र प्रतिगतमक्षं प्रत्यक्षमिति योगादिन्द्रियवाचकत्वात्प्रत्यक्षशब्दस्य प्रस्तुतत्वाच्च करणलक्षणस्य प्रमितिलक्षणं यद्यप्यनुचितं तथाऽपि यत इत्यध्याहारेण प्रत्यक्षप्रमाकरणलक्षणे वाच्ये तदेकदेशप्रमास्वरूपे ज्ञाते तत्करणत्वं सुज्ञेयमित्याशयेन वा संगमनीयम् । आत्ममनःसंयोगजन्यसुखादिवारणाय ज्ञानमिति । यद्यपि तज्जन्यत्वाज्ज्ञानमात्रेऽतिव्याप्तिरीश्वरप्रत्यक्षे चातिव्याप्तिस्तथाऽपि साक्षात्करोमीत्यनुव्यवसायसिद्धसाक्षात्त्वजात्यवच्छिन्ने ज्ञानमित्यन्तस्य तात्पर्यम् । यद्वेन्द्रियार्थसंनिकर्षोत्पन्नमिति सावधारणम् । इन्द्रियार्थसंनिकर्षातिरिक्तानुत्पन्नमतिरिक्तं चात्र ज्ञानं तेन ज्ञानाकरणकमित्यर्थः । भ्रमवारकमव्यभिचारीति भ्रमभिन्नमित्यर्थः ।

---

* अत्र यत इत्यध्याहृत्य यत्तदोर्नित्याभिसंबन्धात्तत्प्रत्यक्षमिति प्रमाणवाचि प्रत्यक्षपदं योजनीयम् । संनिकर्षस्तु षोढा भिद्यते । संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायः विशेषणविशेष्यभावश्चेति । द्रव्यप्रत्यक्षे संयोगः । द्रव्यगतरूपादिप्रत्यक्षे संयुक्तसमवायः । रूपादिगतसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः । शब्दप्रत्यक्षे समवायः । तद्गतसामान्यप्रत्यक्षे समवेतसमवायः । समवायाभावयोर्विशेषणविशेष्यभावः । + इन्द्रियार्थ संनिकर्षेति । × कारणावधारणं कारणान्तरव्यवच्छेदः । विशिष्टकारणमसाधारणकारणम् । आत्ममनःसंयोगस्य ज्ञानमात्रं प्रति कारणत्वाल्लक्षणेऽप्रवेश इति भावः । इन्द्रियमनःसंयोगस्य चेन्द्रियार्थसंनिकर्षकथनेनैवोक्तत्वान्मानसे सुखादिसाक्षात्कार इन्द्रियार्थसंनिकर्षसत्त्वेऽपीन्द्रियमनःसंनिकर्षाभावेनाव्यापकत्वाद्वाऽनुक्तिः । अत एव विषयप्रकाशसंयोगस्य विषयगतानां रूपमहत्त्वानेकद्रव्यत्वानामनुक्तिः । तेषामव्यापकत्वात् । संस्कारस्य चासाधारणत्वाभावात् ।

विशिष्टकारणं तदुच्यते, यत्तु समानमनुमानादिज्ञानस्य न तन्निवर्तेत इति । मनसस्तर्हीन्द्रियेण संयोगो वक्तव्यः । * भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यत इति + समानत्वान्नोक्त इति । यावदर्थं वै नामधेयशब्दास्तैरर्थसंप्रत्ययोऽर्थसंप्रत्ययाच्च व्यवहारः । तत्रेदमिन्द्रियार्थसंनिकर्षादुत्पन्नमर्थज्ञानं रूपमिति वा रस इत्येवं वा भवति । रूपरसशब्दाश्च विषयनामधेयम् । तेन व्यपदिश्यते ज्ञानं रूपमिति जानीते रस इति जानीते । नामधेयशब्देन व्यपदिश्यमानं सच्छाब्दं प्रसज्यतेऽत आह—अव्यपदेश्यमिति । यदिदमनुपयुक्ते शब्दार्थसंबन्धेऽर्थज्ञानं तन्नामधेयशब्देन [ न ] ÷ व्यपदिश्यते, × गृहीतेऽपि च शब्दार्थसंबन्धेऽस्यार्थस्यायं शब्दो नामधेयमिति । यदा तु सोऽर्थो गृह्यते तदा तत्पू-

---

इदं चाऽऽशिकभ्रमस्यालक्ष्यत्वेन । लक्ष्यत्वे तु तद्वति तत्प्रकारकत्वम् । निर्विक-

---

* चाक्षुषश्रावणादिभेदेन । + समानत्वं चाऽऽत्ममनःसंयोगेन । रूपज्ञानं रसज्ञानमिति विषयेणाभिलापवन्मनसाऽभिलापाभावात् । अतीन्द्रियवृत्तित्वाद्वा विषयावृत्तित्वाद्वा मनोवृत्तित्वाद्वेति भावः । ÷ अयमभिसंधिः सामानाधिकरण्येन शब्दात्मकत्वं रूपादीनामभिधीयमानं शब्दब्रह्मात्मकत्वमुच्यते श्रूयमाणगौरित्यादिपदभेदात्मकत्वं वा । न तावदाद्यः कल्पः । न खल्वस्मदादिसमस्तदर्शनपथातिवृत्तेन शब्दब्रह्मणा रूपादीनामस्ति सामानाधिकरण्यप्रतीतिर्लौकिकानां श्रूयमाणशब्दसामानाधिकरण्येन तु तादात्म्यप्रसाधनेऽनुपयुक्तशब्दसंबन्धस्य बालमूकादे रूपादिज्ञानेषु नास्ति श्रूयमाणशब्दगन्धोऽपि प्रागेव तु तत्सामानाधिकरण्यम् । न तु तेषामपि प्राग्भवीयशब्दभावनानुगमेन तत्सामानाधिकरण्यमिति सांप्रतम् । न खलु रूपाद्यात्मनः शब्दस्य रूपादिवैशद्येनावैशद्यं संभवति । युगपद्वैशद्यावैशद्यरूपविरुद्धधर्मयोगेण भेदप्रसङ्गात् । वैशद्ये तु व्युत्पन्नवदव्युत्पन्नोऽपि शब्दैर्व्यवहरेत् । न तु संबन्धग्रहणमपेक्षेत । न च तादात्म्यादन्यद्वाचकत्वं शब्दानां यत्र संबन्धग्रहापेक्षा भवेत् । न च तादात्म्येऽपि कल्पितभेदानां वाच्यवाचकभावः । तथा सति न सामानाधिकरण्यं स्यात् । न ह्यस्ति संभवो भेदकल्पना च सामानाधिकरण्यप्रथा चेति । तस्मादव्युत्पन्नानामस्ति शब्दरहितं रूपादिषु निर्विकल्पकं प्रत्यक्षमिति । × न केवलमव्युत्पन्नानामेव निर्विकल्पकं शब्दरहितं प्रत्यक्षं किंतु व्युत्पन्नानामप्यस्तीत्यभिप्रेत्याऽऽह गृहीतेऽपीत्यादि ।

वेस्मादर्थज्ञानान्न विशिष्यते तदर्थविज्ञानं तादृगेव भवति। तस्य त्वर्थज्ञानस्यान्यः समाख्याशब्दो नास्ति, येन प्रतीयमानो व्यवहाराय कल्प्येत। न चाप्रतीयमानेन व्यवहारः। तस्याज्ञेयस्यार्थस्य संज्ञाशब्देनेतिकरणयुक्तेन निर्दिश्यते रूपमिति ज्ञानं, रस इति ज्ञानमिति तदेवमर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते। व्यवहारकाले तु व्याप्रियते। तस्मादशाब्दमर्थज्ञानमिन्द्रियासंनिकर्षोत्पन्नमिति। ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा संनिकृष्यन्ते। तत्रेन्द्रियार्थसंनिकर्षादुदकज्ञानमुत्पद्यते। तच्च प्रत्यक्षं प्रसज्यत इत्यत आह— अव्यभिचारीति। यदतस्मिंस्तदिति तद्व्यभिचारि। यत्तु तस्मिंस्तदिति तदव्यभिचारि प्रत्यक्षमिति। दूराच्चक्षुषा ह्ययमर्थं पश्यन्नावधारयति धूम इति वा रेणुरिति वा वदेत्तदेतदिन्द्रियार्थसंनिकर्षोत्पन्नमनवधारणज्ञानं प्रत्यक्षं प्रसज्यत इत्यत आह— व्यवसायात्मकमिति। तच्चैतन्मन्तव्यम्, आत्ममनःसंनिकर्षजमेवानवधारणज्ञानमिति। चक्षुषा ह्ययमर्थं पश्यन्नावधारयति। तथा चेन्द्रियेणोपलब्धमर्थं मनसोपलभते। एवमिन्द्रियेणानवधारयन्मनसा नावधारयति। यच्चैतदिन्द्रियानवधारणपूर्वकं मनसाऽनवधारणं तद्विशेषापेक्षं विमर्शमात्रं संशयो न पूर्वमिति। सर्वत्र प्रत्यक्षविषयो ज्ञातुरिन्द्रियेण व्यवसायः पश्चान्मनसाऽनुव्यवसायः। उपहतेन्द्रियाणामनुव्यवसायाभावादिति। आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यम्, अनिन्द्रियार्थसंनिकर्षजं हि तदिति। इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्मभेदात्। भौतिकानीन्द्रियाणि नियतविषयाणि। सगुणानां चैषामिन्द्रियभाव इति। मनस्त्वभौतिकं * सर्वविषयं च नास्य

---

रूपकस्य लक्ष्यत्वे तदभाववति तत्प्रकारकत्वमर्थः। तस्य विभागोऽव्यपदेश्यं

---

* मनः सर्वविषयं स्मृतिकारणसंयोगाधारत्वादात्मवदित्यनुमानं बोध्यम्। सुखग्राहकसंयोगाधिकरणत्वात्समस्तेन्द्रियाधिष्ठातृत्वाच्चाऽऽत्मवदित्यपि बोध्यम्।

---

१ ख. नास्तीति ये°। २ ख. न चैत°। ३ ख. यथा। ४ क. °न्द्रियाणां चेति।

सगुणस्येन्द्रियभाव इति । सति चेन्द्रियार्थसंनिकर्षे संनिधिमसंनिधिं चास्य युगपज्ज्ञानानुत्पत्तिकारणं वक्ष्याम इति । मनसश्चेन्द्रियभावान्न वाच्यं लक्षणान्तरमिति । * तन्त्रान्तरसमाचाराच्चैतत्प्रत्येतव्यमिति । परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः । व्याख्यातं प्रत्यक्षम् ॥ ४ ॥

**+अथ ÷तत्पूर्वकं ×त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च ॥ ५ ॥**

भा०—तत्पूर्वकमित्यनेन लिङ्गलिङ्गिनोः संबन्धदर्शनं लिङ्गदर्शनं.

---

व्यवसायात्मकमिति । निर्विकल्पकं सविकल्पकं चेति द्विविधं प्रत्यक्षमित्यर्थः ॥ ४ ॥

वृ०—अनुमानं लक्षयति विभजते च । आनन्तर्यबोधकाथशब्दो हेतुहेतुमद्भावसं-

---

* शास्त्रान्तरेषु मनस इन्द्रियत्वमुक्तमत्र च न दूषितमतस्तस्य स्वमतेऽपीन्द्रियत्वमिष्टमित्यनुमीयत इति भावः । + अथेत्यानन्तर्ये । उक्तं प्रत्यक्षमनुमानस्य हेतुरितीदानीमनुमानं हेतुमद्व्युत्पाद्यत इत्यर्थः । ÷ अत्र विग्रहत्रयं बोध्यम् । तत् पूर्वं यस्य तदिदं तत्पूर्वकम् । ते पूर्वे यस्य तदिदं तत्पूर्वकम् । तानि पूर्वाणि यस्य तदिदं तत्पूर्वकमिति । तत्र यदा तानीति विग्रहस्तदा समस्तप्रमाणाभिसंबन्धात्सर्वप्रमाणपूर्वकत्वमनुमानस्य वर्णितं भवति । पारम्पर्येण पुनस्तत्प्रत्यक्ष एव व्यवतिष्ठत इति तत्पूर्वकत्वमुक्तं भवति । यदाऽपि विवेकात्ते पूर्वे यस्येति ते द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य तदिदं तत्पूर्वकं प्रत्यक्षमिति । ते च द्वे प्रत्यक्षे लिङ्गलिङ्गिसंबन्धदर्शनमाद्यं प्रत्यक्षं लिङ्गदर्शनं द्वितीयम् । बुभुत्सावतो द्वितीयाल्लिङ्गदर्शनात्संस्काराभिव्यक्त्युत्तरकालं स्मृतिः स्मृत्यनन्तरं च पुनर्लिङ्गदर्शनमयं धूम इति । तदिदमन्तिमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं परामर्शरूपमनुमानं भवति । यदा पुनस्तत्पूर्वं यस्य तदिदं तत्पूर्वकमिति तदा भेदस्याविवक्षितत्वाल्लिङ्गलिङ्गिसंबन्धदर्शनानन्तरं लिङ्गदर्शनसंबन्धस्मृतिभिर्लिङ्गपरामर्शो विशिष्यत इति तात्पर्यं बोध्यम् । अत्र पूर्वसूत्राज्ज्ञानपदमनुवर्तनीयं तेन प्रत्यक्षपूर्वकं ज्ञानमनुमानमिति लक्षणं पर्यवसन्नं तेन प्रत्यक्षजन्ये संस्कारे नातिव्याप्तिरिति बोध्यम् । × अत्र लिङ्गस्य प्रासिद्धसदसंदिग्धभेदेनानुमानस्य त्रैविध्यान्तरं बोध्यम् । प्रसिद्धं नाम पक्षे व्यापकम् । सन्नाम सजातीयेऽस्तीति । असंदिग्धं नाम सजातीयाविनाभावीति बोध्यम् ।

---

१ ख. 'तत्प्रतिपत्तव्य' ।

चाभिसंबध्यते। लिङ्गलिङ्गिनोः संबद्धयोर्दर्शनेन लिङ्गस्मृतिरभिसंबध्यते। स्मृत्या लिङ्गदर्शनेन चाप्रत्यक्षोऽर्थोऽनुमीयते। पूर्ववदिति। यत्र कारणेन कार्यमनुमी*यते यथा मेघोन्नत्या भविष्यति वृष्टिरिति। शेषवत्तत्। यत्र कार्येण कारणमनुमीयते। पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति। सामान्यतो दृष्टं, व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति। यथा चाऽऽदित्यस्य, तस्मादस्त्यप्रत्यक्षस्याप्यादित्यस्य + व्रज्येति। अथ वा

---

मतिसूचनाय। तत्पूर्वकं प्रत्यक्षपूर्वकम्। प्रत्यक्षं प्रत्यक्षविशेषो व्याप्त्यादिविषयकः। तेन व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वं लभ्यते। अनुमानम्। अनुमितिर्यत इत्यध्याहारेण च करणलक्षणम्। अथवा करणलक्षणमेवेदं

---

* कारणज्ञानेन कार्यानुमानं कारणसामानाधिकरण्येन वा कार्यानुमानं न विवक्षितं कारणज्ञानमात्रेणाव्यापककार्यज्ञानासंभवात्तयोर्व्यधिकरणत्वाच्च। किंतु कार्यं कारणविशेषणत्वेनोपयुक्तं गुणभूतमनुमीयत इति सूत्रार्थः। एवं शेषवदित्यत्रापि कार्यदर्शनेन कारणं कार्यस्याङ्गभूतमनुमीयत इति ज्ञेयम्। + आदित्यो देशान्तरप्राप्तिमान्द्रव्यत्वे सति क्षयवृद्धिप्रत्ययाविषयत्वे च सति प्राङ्मुखोपलभ्यत्वे च सति तदभिमुखदेशसंबन्धमुद्दिश्यानुत्पन्नपादविहारस्य परिवृत्त्य तत्प्रत्ययविषयत्वान्मण्यादिवदित्यनुमानं बोध्यम्। तत्प्रत्ययविषयत्वादित्युच्यमाने पुरःस्थिते स्थाणौ व्यभिचारः सोऽपि हि प्रत्यभिज्ञानविषयो भवति परं तु तत्रैव स्थितस्तन्निवृत्त्यर्थं परिवृत्त्येत्युक्तम्। तथाऽपि गुणादिषु व्यभिचारस्तन्निवृत्त्यर्थं द्रव्यत्वे सतीति। तथाऽपि प्रदीपप्रभासु व्यभिचारस्तन्निवृत्त्यर्थं क्षयवृद्धिप्रत्ययाविषयत्वे सतीति। तथाऽपि पृष्ठतोऽवस्थितया स्थूणया व्यभिचारस्तन्निवृत्त्यर्थं प्राङ्मुखोपलभ्यत्वे सतीति। उपलभ्यत्वं नाम, उपलब्धिकर्मता सा चेहातीता विवक्षिताऽन्यथा पूर्वापरजलधिवेलावगाहिना तुहिनशैलेन व्यभिचारः। यद्यप्ययमपि परावृत्त्य तत्प्रत्ययवतोऽतिपतितोपलब्धिकर्मभावस्तथाऽपि तदा नरान्तरस्योपलम्भः। मार्तण्डमण्डलं त्वस्तचूडावलम्बि न प्राच्यां कस्यचिदुपलम्भगोचर इति वैषम्यम्। तथाऽपि यदि दृष्टैव पुरोऽवस्थितस्य पश्चिमाभिमुखस्य प्रासादस्य स्वयमुपनिपत्य पृष्ठतो भवति तदोक्तलक्षणस्य हेतोरस्ति व्यभिचारस्तन्निवृत्त्यर्थमनुत्पन्नपादविहारस्येत्युक्तम्। स्वाभिमुखदेशमुद्दिश्यानुत्पन्नः पादविहारो यस्य स तथोक्तः। तमुद्दिश्य खल्वयं पद्भ्यां संचरमाणः प्रासादस्य पृष्ठतो भवतीति भावः।

---

१ क. ग. तथा।

पूर्ववदिति * यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानं यथा धूमेनाग्निरिति । शेषवन्नाम परिशेषः । स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः । यथा सदनित्यमित्येवमादिना । द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन्द्रव्यकर्मगुणसंशये न द्रव्यमेकद्रव्यत्वात्, न कर्म शब्दान्तरहेतुत्वात्, यस्तु शिष्यते सोऽयमिति शब्दस्य + गुणत्वप्रतिपत्तिः । सामान्यतो दृष्टं नाम यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः संबन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते यथेच्छादिभिरात्मा । इच्छादयो गुणाः, गुणाश्च द्रव्यसंस्थानाः, तद्य एषां स्थानं स आत्मेति ।

---

तत्रानुमानमिति करणल्युटाऽनुमितिकरणमिति समाख्याबलादेव लब्धम् । तच्च व्याप्तिज्ञानं प्रत्यक्षपूर्वकं सहचारप्रत्यक्षपूर्वकं विभजते त्रिविधमिति । पूर्वं कारणं तद्वत्तल्लिङ्गकं यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानम् । शेषः कार्यं तल्लिङ्गकं शेषवद्यथा नदीवृद्ध्या वृष्ट्यनुमानम् । सामान्यतो दृष्टं कार्यकारणभिन्नलिङ्गकं यथा पृथिवीत्वेन द्रव्यत्वानुमानम् । अथवा पूर्वमन्वयस्तद्वत्केव-

---

* पूर्वं तु मतुप्प्रत्ययं गृहीत्वा व्याख्यातमिदानीं तु वतिप्रत्ययं गृहीत्वा व्याख्यायत इति भावः । साध्यतावच्छेदकरूपपुरस्कारेण हेतुतावच्छेदकरूपपुरस्कारेण च यत्र व्याप्तिग्रहो भवति तत्पूर्ववदनुमानम् । पर्वते धूमेन वह्नौ साध्ये धूमत्ववह्नित्वपुरस्कारेणैव व्याप्तेर्गृहीतत्वात् । साध्यतावच्छेदकधर्मव्यापकधर्मपुरस्कारेण हेतुतावच्छेदकरूपव्यापकधर्मपुरस्कारेण च व्याप्तिग्रहे तु सामान्यतो दृष्टम् । यथा—इच्छादिभिरात्मनि साध्ये सति, इच्छात्वात्मत्वव्यापकाभ्यां गुणत्वद्रव्यत्वाभ्यां व्याप्तिग्रहः । शेषवदनुमानं तु प्रसिद्धे पक्षेऽसिद्धस्येतरभेदस्य साधकमनुमानं बोध्यम् । + इदं तु परिशेषस्योदाहरणं नाऽऽदरणीयम् । केवलव्यतिरेकिणो हि नामान्तरमिदं परिशेष इति । एष पुनरन्वयव्यतिरेकी । द्रव्यकर्मान्यत्वे सति सदाद्यभेदस्य सपक्षे रूपादौ सत्त्वाद्विपक्षे सामान्यादावभावात् । तस्मादात्मतत्त्वतासाधनमिच्छादीनां परिशेषोदाहरणं द्रष्टव्यम् ।

---

१ ख. °शयः । न । २ क. तद्येषां । ग. तद्यदेषां ।

विभागवचनादेव[1] त्रिविधमिति सिद्धे *त्रिविधवचनं महतो महाविषयस्य न्यायस्य लघीयसा सूत्रेणोपदेशात्परं वाक्यलाघवं मन्यमानस्यान्यस्मिन्वाक्यलाघवेऽनादरः। तथा चायमित्थंभूतेन वाक्यविकल्पेन प्रवृत्तः सिद्धान्ते छले शब्दादिषु च बहुलं समाचारः शास्त्र इति। + सद्विषयं च प्रत्यक्षम्। सदसद्विषयं चानुमानम्। कस्मात्। त्रैकाल्यग्रहणात्। त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते, भविष्यतीत्यनुमीयते भवतीति चाभूदिति च। असच्च खल्वतीतमनागतं चेति॥ ५॥

---

लान्वयीत्यर्थः। यथाऽभिधेयं प्रमेयत्वादित्यादि। शेषो व्यतिरेकस्तद्वत्केवलव्यतिरेकीत्यर्थः। यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादि। सामान्यतो दृष्टमन्वयव्यतिरेकि यथा वह्निमान्धूमादित्यादि॥ ५॥

---

* त्रिविधमिति नियमार्थम्। अनेकधा भिन्नस्यानुमानस्य त्रिविधेन पूर्ववदादिना संग्रह इति नियमं दर्शयति। कथमनेकधा भिन्नमिति चेदुच्यते। अन्वयव्यतिरेकि द्विधा सजातीये सदेव सदसच्च। अन्वय्यपि द्विधैव। एवं व्यतिरेक्येकरूपं सपक्षाभावात्। तदिदं पञ्चधा भिन्नमनुमानं कालभेदेन पञ्चदशधा भवति। तदपि पुनः पुरुषभेदानुविधानात्षष्टिभेदं भवति। तस्य त्वान्तर्गणिकोऽनन्तभेद इति बोध्यम्। क्रमेणोदाहरणानि प्रतिपाद्यन्ते। अनित्यः शब्दः कृतकत्वादिति सपक्षे सदेव। अनित्यः शब्दोऽस्मदादिप्रयत्ननान्तरीयकत्वादिति सपक्षेऽसदेव। यथा परमाण्वादयः कस्यचित्प्रत्यक्षाः प्रमेयत्वाद्घटादिवदिति तथा सपक्षे सदसत्। तथा तत्रैव साध्ये सत्त्वाद्घटादिवदिति। भूतभविष्यद्वर्तमानभेदैस्त्रैकाल्यं कालभेदः। पुरुषभेदस्तु प्रतिपन्नोऽप्रतिपन्नः संदिग्धो विपर्यस्तश्चेति वार्तिककाररहस्यम्। + सन्नाम वर्तमानम्। असन्नामातीतानागते। प्रत्यक्षं हि लौकिकं वर्तमानविषयमेव। अनुमानं तु त्रैकाल्यविषयम्। यद्यपि प्रत्यक्षमप्यतीतानागतयोः संप्रति निषेध्ययोर्निषेधे वर्तमानमसद्विषयं तथाऽपि न निषेध्ययोः प्रवर्तत इत्येतावतैव सद्विषयत्वमुक्तम्। अनुमानं तु तयोरपि प्रवर्तत इत्येतावताऽसद्विषयत्वमुक्तम्।

---

१ ग. 'देतत्त्रिवि°।

भा०—अथोपमानम्—

**प्रसिद्धसाधर्म्यात्साध्यसाधनमुप*मानम् ॥ ६ ॥**

प्रज्ञातेन सामान्यात्प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति । यथा गौरेवं गवय इति । किं पुनरत्रोपमानेन क्रियते । यदा खल्वयं गवा समानधर्मं प्रतिपद्यते तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति

---

वृ०-उपमानं लक्षयति । प्रसिद्धस्य पूर्वप्रमितस्य गवादेः साधर्म्यात्सादृश्या-त्तज्ज्ञानात्साध्यस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिरुपमानमुपमितिर्यत

---

* अत्र यत इत्यध्याहारः । साधनं नाम सिद्धिः । तथा च वाक्यार्थः—यतः प्रमाणात्साध्यस्य संज्ञासंज्ञिसंबन्धस्य साधनं सिद्धिर्निश्चयस्तदुपमानं प्रमाणम् । तत्र हेतुः प्रसिद्धसाधर्म्यादिति । अस्यार्थः—प्रसिद्धस्य पूर्वदृष्टस्य गवादेः साधर्म्यस्य सादृश्यस्य ज्ञानादिति । अत्रोपमानलक्षणे प्रसिद्धसाधर्म्यादित्यस्याभावे प्रत्यक्षादिसाधने सुखादि-साधने घटेऽतिव्याप्तिस्तन्निवृत्त्यर्थं तत् । यद्यपि प्रसिद्धसाधर्म्यमुपमानमित्युक्त्वोपमीयतेऽने-नेति करणव्युत्पत्त्या प्रमाणविशेषाभिधायिनोपमानपदेन सामानाधिकरण्यात्कारकत्वलाभस्त-थाऽपि तदाभासनिरासार्थं साध्यसाधनपदोपादानं बोध्यम् ।

अत्रेदं बोध्यम् । प्रसिद्धसाधर्म्यादित्यत्र श्रुतिमयी प्रत्यक्षमयी चेति प्रसिद्धिरुभयी बोध्या । तत्र श्रुतिमयी यथा—' यथा गौस्तथा गवयः ' इति । प्रत्यक्षमयी च यथा—' गोसादृश्यविशिष्टोऽयमीदृशः पिण्डः ' इति । तत्र प्रत्यक्षमयी प्रसिद्धिरागमाहितस्मृत्य-पेक्षा समाख्यासंबन्धप्रतिपत्तिहेतुः । यद्यपि यथा गौरेवं गवय इत्येतस्मादपि गोसादृश्यस्य गवयः समाख्येति शक्यमवगन्तुम् । न खलु प्रत्यक्ष एव समाख्याकर्म । समानजातीय-व्यवच्छिन्ने हि तद्भवति । तच्च यदि मानान्तरेणापि तथाऽवगम्यते कस्तत्र संज्ञाकर्म निवारयेत् । गोसादृश्येन चोपलक्षितः पिण्डो य इति सर्वनाम्ना परामृष्टः शक्यो घटा-दिभ्योऽसमानजातीयेभ्यो महिषादिभ्यश्च समानजातीयेभ्यो व्यवच्छिन्नोऽवगन्तुं गवयस्त-थाऽपि यावदयमसौ गवय इति साक्षात्प्रतीते संबन्धिनि संज्ञां न निवेशयति तावदयं परि-प्लुतमतिः प्रमाता कंचित्खलु द्रक्ष्यामि तादृशं पिण्डं यत्र गवयसंज्ञां प्रतिपत्स्य इति प्रोत्सुक एवोदीक्षेत । न चासौ वाक्यमात्रसहायोऽप्रत्यक्षीकृतगोसदृशपिण्डोऽयमसौ गव-याख्य इति प्रतिपत्तुमर्हति । तथा वाक्यं विना प्रत्यक्षमात्रादसौ गवयाख्य इति प्रति-पत्तुं नार्हति । तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानाख्यं प्रमाणमास्थेयमिति ।

समाख्यासंबन्धप्रतिपत्तिरुपमानार्थ इत्याह । यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्ममर्थमिन्द्रियार्थसंनिकर्षादुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसंबन्धं प्रतिपद्यत इति । यथा मुद्गस्तथा मुद्गपर्णी यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्त उपमानात्संज्ञासंज्ञिसंबन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाऽऽहरति । एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति ॥ ६ ॥

भा०—अथ शब्दः—

आप्तोपदेशः शब्दः ॥ ७ ॥

*आप्तः खलु +साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य[२] चिख्यापयि-

---

इत्यध्याहारेण च करणलक्षणम् । अथवा साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदम् । अत्र च वैधर्म्योपमितिमपि मन्यन्ते टीकाकृतः । यथा चातिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यज्ञानादुष्ट्रे करभपदवाच्यताग्रहः । एवमन्योऽप्युपमानस्य विषय इति भाष्यम् । तथा मुद्गपर्णीसदृश्योषधी विषं हन्तीत्यतिदेशवाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जात इयमोषधी विषहरणीत्युपमित्या विषयी क्रियत इत्यादि ॥ ६ ॥

वृ०—शब्दं लक्षयति । शब्द इति लक्ष्यकथनम् । तदर्थः प्रमाणशब्द इति ।

---

*आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवाननुरागादिवशादपि नान्यथावादी यः स इति पतञ्जलिः । + सुदृढेन प्रमाणेनावधारिता अर्था येन स साक्षात्कृतधर्मा । यथादृष्टस्येत्यनेन मत्सरितया विपरीतोपदेशो निवारितः । चिख्यापयिषयेत्यनेनाकृपालसकारिते निवारिते । प्रयुक्तो नामोत्पादितप्रयत्नः । अनेन चालसत्वं निवारितम् । तथाऽपि स्थानकरणपाटवाभावेन वर्णनिष्पादनासामर्थ्येनाऽऽप्तः प्रसज्येतेत्यत आह—उपदेष्टेति । स्थानकरणपाटववानित्यर्थः । ननु शब्दादुत्पन्नज्ञानस्य पुरुषस्य प्रवृत्तौ सत्यामर्थोपलम्भे सत्यर्थतथात्वनिश्चयेन बोधयितुराप्तत्वनिश्चयस्तस्मिन्सति गृहीतप्रमाणभावपुरुषवचनजनितबुद्धौ प्रमात्वग्रहेण प्रवृत्तिरित्यन्योन्याश्रय इति चेत् । अत्रोच्यते । वाक्यस्य वाक्यार्थज्ञानजननमात्रे सामर्थ्यात्प्रमात्वग्रहस्य परतस्त्वेऽप्यविरोधादिति नान्योन्याश्रयः ।

---

१ ग. °शाख्निसं° । २ क. ख. °स्य विख्या° ।

यथा प्रयुक्त उपदेष्टा । साक्षात्करणमर्थस्याऽऽप्तिस्तया प्रवर्तत इत्याप्तः । ऋष्यार्यम्लेच्छानां समानं लक्षणम् । तथा च सर्वेषां व्यवहाराः प्रवर्तन्त इति । एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते[1] नातोऽन्यथेति ॥ ७ ॥

स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥

भा०—यस्येह दृश्यतेऽर्थः स दृष्टार्थः, यस्यामुत्र प्रतीयते सोऽदृष्टार्थः। एवमृषिलौकिकवाक्यानां[2] *विभाग इति । किमर्थं पुनरिदमुच्यते । स न मन्येत दृष्टार्थ एवाऽऽप्तोपदेशः प्रमाणमर्थस्यावधारणादिति[3]। अदृष्टार्थोऽपि प्रमाणमर्थस्यानुमानादिति[4] ॥ ८ ॥

इति प्रमाणलक्षणप्रकरणम् ॥ २ ॥

---

आप्तोपदेश इति लक्षणम् । आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवांस्तस्योपदेश इत्यर्थः । प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्द इति फलितार्थः । अथवा, आप्तो यथार्थ उपदेशः शाब्दबोधो यस्मात् । शाब्दत्वं च जातिविशेषस्तथा च यथार्थशाब्दज्ञानकरणत्वमर्थः । अत्र च विशेष्यावृत्त्यप्रकारकत्वतद्वति तत्प्रकारकत्वादिप्रमालक्षणानामेकं लक्षणे परं च लक्ष्यतावच्छेदके निवेशनीयमतो नाभेदः ॥ ७ ॥

वृ०—विभजते । स प्रमाणशब्दः । शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थको दृष्टार्थकः । शब्दतदुपजीविप्रमाणमात्रगम्यार्थकोऽदृष्टार्थकः । तथा च दृष्टार्थकत्वादृष्टार्थकत्वभेदात्प्रमाणशब्दस्य द्वैविध्यमित्यर्थः ॥ ८ ॥

इति सूत्रवृत्तौ प्रमाणलक्षणप्रकरणम् ॥ २ ॥

---

* वक्ता प्रत्यक्षीकृतस्यार्थस्य प्रतिपादकस्तेनानुमितस्य वाऽर्थस्य प्रतिपादक इति द्विविध एवेति भावः ।

---

१ ग. °कल्प्यन्ते । २ ग. °वमपिलौ' । ३ ख. 'मायाम' । ४ ख. °ति । इति प्रमाणभाष्यम् ॥ ८ ॥

भा०—किं पुनरनेन * प्रमाणेनार्थजातं[1] प्रमातव्यमिति तदुच्यते—

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रे-
त्यभावफलदुःखापवर्गास्तु+ प्रमेयम् ॥ ९ ॥**

तत्राऽऽत्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता ÷ सर्वज्ञः सर्वानुभावी। तस्य भोगायतनं शरीरम्। भोगसाधनानीन्द्रियाणि। भोक्तव्या इन्द्रियार्थाः। भोगो बुद्धिः। सर्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्वविषयमन्तःकरणं मनः। शरीरेन्द्रियार्थबुद्धिसुखेदुःखवेदनानां निर्वृत्तिकारणं प्रवृत्ति × दोषाश्च। नास्येदं शरीरमपूर्वमनुत्तरं च। पूर्वशरीराणामादिर्नास्ति, उत्तरेषामपवर्गोऽन्त इति

---

वृ०—प्रमेयं विभजते लक्षयति च। अत्र तुशब्दः पुनरर्थे। तथा चैतेषां पुनः प्रमेयत्वं न तु प्रमाविषयत्वेन संयोगादीनामपि। प्रमेयशब्दो हि वादादिशब्दवत्परिभाषाविशेषेण द्वादशसु प्रवर्तते। तत्र च प्रकृष्टं मेयं प्रमेयमिति योगार्थः। प्रकर्षश्च संसारहेतुमिथ्याज्ञानविषयत्वं मोक्षहेतुधीविषयत्वं वा। रूढ्या च तावदन्यान्यत्वमर्थः। लक्षणमपि तदेव। प्रमेयं किमित्याकाङ्क्षायामात्मादयो दर्शिता इत्यतो वचनभेदेऽपि नानन्वयः। वेदाः प्रमाणमित्यादावप्येवम्।

---

* जात्यभिप्रायेणैकवचनं प्रकृते हि प्रमेये यथायथं प्रमाणानामुपयोगादिति बोध्यम्।
+ सूत्रे तुशब्द एवार्थकः। आत्मादय एव प्रमेया इत्यर्थः। अत्र प्रमेयपदं न प्रमेयमात्रे वर्तते किंतु यत्तत्त्वतो ज्ञायमानमपवर्गसाधनं तस्मिन्। तच्चाऽऽत्मादयेवेति युक्तोऽन्ययोगव्यवच्छेदः। यथा पार्थ एव धनुर्धर इत्यत्र। ÷ सर्वस्य द्रष्टा सर्वस्य भोक्तेत्यत्रोभयत्रापि सुखस्य दुःखस्येत्यादिः। अप्राप्तस्य ज्ञानाभावेन सर्वज्ञत्वानुपपत्तेराह—सर्वानुभावीति। अनुभवः प्राप्तिः। × चन 'शरीरेन्द्रियार्थबुद्धिसुखवेदनानां निर्वृत्तिकारणम्' इत्यस्य सबन्ध इति सूच्यते। यद्यपि दोषाः प्रवृत्तः कारणभूतास्तथाऽपि परम्परया शरीरेन्द्रियादीनां निर्वृत्तिकारणं भवन्त्येवेति प्रवृत्तिदोषयोरेकमेव स्वरूपमुक्तम्। उभयोरपि पार्थक्येन स्वरूपं (१७) (१८) सूत्रयोः स्पष्टमेव। नास्येदमित्यारभ्य—अपवर्गोऽन्त इत्यनेन प्रेत्यभावस्य स्वरूपं प्रतिपाद्यते तत्र नास्येदं शरीरमपूर्वमनुत्तरं चेत्यनेन स्वरूपमुक्त्वा तस्यैव स्पष्टतया प्रतिपादनं क्रियते पूर्वशरीराणामित्यादिना। अस्य नामाऽऽत्मतत्त्वमविदुष आत्मनः। अपूर्वं नामाविद्यमानं पूर्वं शरीरं यस्य शरीरस्य तदपूर्वम्।

---

१ क. °र्थज्ञानंप्र°। २ क. ग. °खवे°। ३ ख. °त्तरोत्तरेषा°। ४ क. ख. °वर्ग इ°।

प्रेत्यभावः । ससाधनसुखदुःखोपभोगः फलम् । दुःखमिति । नेदमनुकूलवेदनीयस्य सुखस्य प्रतीतेः प्रत्याख्यानं किं तर्हि जन्मन एवेदं ससुखसाधनस्य दुःखानुषङ्गाद्दुःखेनाविप्रयोगाद्विविधबाधनायोगाद्दुःखमिति । समाधिभावनमुपदिश्यते समाहितो भावयति भावयन्निर्विद्यते निर्विण्णस्य वैराग्यं विरक्तस्यापवर्ग *इति जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाणमपवर्ग इति । अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयं तद्भेदेन चापरिसंख्येयम् । अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात्संसार इत्यत एतदुपदिष्टं विशेषेणेति ॥ ९ ॥

भा०–तत्राऽऽत्मा तावत्प्रत्यक्षतो न गृह्यते स किमाप्तोपदेशमात्रादेव प्रतिपद्यते । नेत्युच्यते । + अनुमानाच्च प्रतिपत्तव्य इति । कथम्–

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञाना-**
**न्यात्मनो लिङ्गमिति ॥ १० ॥**

× यज्जातीयस्यार्थस्य संनिकर्षात्सुखमात्मोपलब्धवांस्तज्जाती-

---

अन्यथाऽऽत्मसूत्रे विगतिः स्यात्तथा च वक्ष्यते । प्रमेयत्वेनैक्यमिति प्रतिपादनायान्यतमाज्ञानेऽपि नापवर्ग इति प्रतिपादनाय वा प्रमेयमित्येकवचनमित्यन्ये । तच्चिन्त्यम् । अत्रापि आत्मा च शरीरं चेन्द्रियाणि चार्थाश्च बुद्धिश्च मनश्च प्रवृत्तिश्च दोषाश्च प्रेत्यभावश्च फलं च दुःखं चापवर्गश्चेति यथावचनं विग्रहं वर्णयन्ति । अत्र प्राधान्यात्कारणरूपषट्कमभिधाय कार्यरूपप्रमेयषट्कमभिहितम् । तत्र पूर्वपूर्वस्य प्राधान्यात्प्रथममुद्देश इति वदन्ति ॥ ९ ॥

वृ०–तत्र प्रथमोद्दिष्टमात्मानं लक्षयति । अत्र चाऽऽत्मनः प्रत्यक्षत्वाल्लिङ्गकथ-

---

*सूत्रे सुखानुक्तिर्न तदभावेन । अपि तु तस्य दुःखत्वेन भावनायामनभिरतिलक्षणवैराग्यसिद्धय इति भावः । + अनुमानेनावधारितस्याऽऽगमेन प्रतीतौ संवादज्ञानेनाऽऽगमेऽप्रामाण्यशङ्का निवर्तत इति भावः । × यज्जातीयस्येत्यनेन व्याप्तिस्मृतिकथनं बोध्यम् । तज्जातीयं पश्यन्नित्यनेन पक्षधर्मोपनयः । तस्मादयं सुखहेतुरित्यनुमायाऽऽदातुमिच्छति । सेयमित्यनेन व्याप्तिग्रहणतत्स्मरणपक्षधर्मताग्रहणानुमानेच्छानामेककर्तृकत्वं सूचयति । भेदे प्रतिसंधानाभावेन तदनुपपत्तेः । यश्चासावेकोऽनुभविता च स्मर्ता चानुमाता चेषिता स एवाऽऽत्मा । न च शरीरमेवं भवितुमर्हति । तस्य बाल्यकौमारयौवनवार्धकभेदेनान्यत्वात् । नेन्द्रियम् । इन्द्रियान्तरगृहीतस्येन्द्रियान्तरेण प्रतिसंधानप्रसङ्गात् । नापि मनः । तस्य करणत्वेनैवानुमानादिति बोध्यम् ।

---

१ ख. °न च प° ।

यमेवार्थं पश्यन्नुपादातुमिच्छति । सेयमादातुमिच्छैकस्यानेकार्थदर्शिनो दर्शनप्रतिसंधानाद्भवति लिङ्गमात्मनः । नियतविषये हि बुद्धिभेदमात्रे न संभवति देहान्तरवदिति । एवमेकस्यानेकार्थदर्शिनो दर्शनप्रतिसंधानाद्दुःखहेतौ द्वेषः । यज्जातीयो यस्यार्थः सुखहेतुः प्रसिद्धस्तज्जातीयमर्थं पश्यन्नादातुं प्रयतते । सोऽयं प्रयत्न एकमनेकार्थदर्शिनं दर्शनप्रतिसंधातारमन्तरेण न स्यात् । नियतविषये बुद्धिमात्रे न संभवति देहान्तरवदिति । एतेन दुःखहेतौ प्रयत्नो व्याख्यातः । सुखदुःखस्मृत्या चायं तत्साधनमाददानः सुखमुपलभते दुःखमुपलभते, सुखदुःखे वेदयते पूर्वोक्त एव हेतुः । बुभुत्समानः खल्वयं विमृशति, किंस्विदिति । विमृशञ्जानीत इदमिति । तदिदं ज्ञानं बुभुत्साविमर्शाभ्यामभिन्नकर्तृकं गृह्यमाणमात्मलिङ्गं, पूर्वोक्त एव हेतुरिति । तत्र देहान्तरवदिति विभज्यते । यथाऽनात्मवादिनो देहान्तरेषु नियतविषया बुद्धिभेदा न प्रतिसंधीयन्ते तथैकदेहविषया अपि न प्रतिसंधीयेरन्नविशेषात् । सोऽयमेकसत्त्वस्य समाचारः स्वयं दृष्टस्य स्मरणं नान्यदृष्टस्येति[1] । एवं खलु नानासत्त्वानां समाचारोऽन्यदृष्टमन्ये न स्मरन्तीति । तदेतदुभयमशक्यमनात्मवादिना व्यवस्थापयितुमिति । एवमुपपन्नमस्त्यात्मेति ॥ १० ॥

---

नमसंगतम् । न च शरीरातिरिक्तात्मव्युत्पादनार्थं तदिति वाच्यम् । अग्रिमपरीक्षावैयर्थ्यापत्तेः । लक्षणाकथनेन न्यूनत्वं चेति चेन्न । तल्लिङ्गपदस्य लक्षणार्थत्वात् । न च लिङ्गमित्येकवचनेन मिलितानां लक्षणत्वं प्रतीयते तथायुक्तं वैयर्थ्यादिति वाच्यम् । किं लक्षणमित्याकाङ्क्षायामिच्छादीनामभिधानान्मिलितं लक्षणमिति प्रत्यायकाभावात् । तथा च प्रत्येकमेव लक्षणम् । अत्र ज्ञानेच्छाप्रयत्नानामात्ममात्रस्य लक्षणत्वं सुखदुःखद्वेषाणां संसारिणो लक्षणत्वमिति ॥ १० ॥

---

१ ख. 'दृष्टस्य नादृष्टस्ये' ।

भा०—तस्य * भोगाधिष्ठानम्—

चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥

कथं चेष्टाश्रयः । ईप्सितं जिहासितं[1] चार्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा सा यत्र वर्तते तच्छरीरम् । कथमिन्द्रियाश्रयः । यस्यानुग्रहेणानुगृहीतान्युपघाते चोपहतानि स्वविषयेषु साध्वसाधुषु वर्तन्ते स एषामाश्रयस्त+च्छरीरम् । कथमर्थाश्रयः । यस्मिन्नायतन इन्द्रियार्थसंनिक-

---

वृ०—क्रमप्राप्तं शरीरं लक्षयति । अत्र चेष्टादीनां मिलितानामाश्रयत्वं न लक्षणं वैयर्थ्यात् । अपि त्वाश्रयपदस्य प्रत्येकमन्वयाच्चेष्टाश्रयत्वादिलक्षणत्रये तात्पर्यम् । चेष्टात्वं च प्रयत्नजन्यतावच्छेदको जातिविशेषः । न च शरीरावयवेऽतिव्याप्तिः । अन्त्यावयवित्वेन विशेषणात् । न च निष्क्रियशरीरेऽतिव्याप्तिः । तादृशे मानाभावात् । अत एवाऽऽह—इन्द्रियाश्रय इति । इन्द्रियाश्रयत्वं चावच्छेदकताख्यस्वरूपसंबन्धविशेषेण । चक्षुष्मान्देवदत्तोऽयमित्यादिप्रतीतेः । अर्थाश्रयत्वमित्यत्रार्थशब्दो न रूपादिपरः । तदाश्रयत्वस्य घटादावतिव्याप्तेः । किंतु सुखदुःखान्यतरपरः । अत एव भाष्यम्—यस्मिन्नायतने सुखदुःखयोः प्रतिसंवेदनं प्रवर्तते स एषामाश्रयस्तच्छरीरमिति । वस्तुतस्त्वन्यतराश्रयत्वमपि न लक्षणम् । किंतु सुखाश्रयत्वं दुःखाश्रयत्वं चेति लक्षणद्वये तात्पर्यम् ।

---

* आत्मनो दुःखनिदानानामिन्द्रियादीनां सर्वेषां साक्षात्पारम्पर्येण वा शरीरमाश्रित्य तन्निदानत्वमिति तदेवास्य दुःखमूलकारणमित्यनन्तरं शरीरं लक्षयति चेष्टेत्यादिना । + ननु कार्यभूतानां त्वगादीनां स्वावयवाश्रितत्वाच्छ्रोत्रमनसोश्च नित्यत्वेनानाश्रितत्वादिन्द्रियाश्रितत्वं शरीरस्य कथमिति चेत् । सत्यम् । शरीरानुविधानमिन्द्रियाश्रयत्वमिति स्वीकारान्न दोषः । इन्द्रियाणि हि शरीरानुग्रहेणानुगृह्यन्ते तदुपघाते चोपहन्यन्त इति शरीराश्रितानीत्युच्यन्त इति बोध्यम् । एवमेवार्थाश्रयत्वमुपपादनीयम् । गन्धाद्युपलम्भनिमित्तकसुखादेः शरीरे सति भावादसति चाभावात् । न च वृक्षे दारुयन्त्रे च चेष्टाश्रयत्वेनातिव्याप्तिरिति वाच्यम् । चेष्टाया हिताहितप्राप्तिपरिहारफलकत्वेन मूर्तान्तरप्रयोज्यत्वेन च विशेषणात् । वृत्तिकारास्तु वृक्षे शरीरत्वं स्वी कुर्वन्त्येव ।

---

१ ख. ग. °तं वाऽर्थ° ।

षादुत्पन्नयोः सुखदुःखयोः प्रतिसंवेदनं प्रवर्तते स एषामाश्रयस्तच्छरीरमिति ॥ ११ ॥

भा०—भोगसाधनानि पुनः—

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि * भूतेभ्यः ॥ १२ ॥**

जिघ्रत्यनेन घ्राणं गन्धं गृह्णातीति । रसयत्यनेनेति रसनं रसं गृह्णातीति । चष्टेऽनेनेति चक्षुः । रूपं पश्यतीति । स्पृशत्यनेनेति स्पर्शनं त्वक्स्थानमिन्द्रियं त्वक् तदुपचारः स्थानादिति । शृणोत्यनेनेति श्रोत्रं शब्दं गृह्णातीति । एवं समाख्यानिर्वचनसामर्थ्याद्बोध्यं स्वविषयग्रहणलक्षणानीन्द्रियाणीति । भूतेभ्य इति ।

---

शरीरस्य तदाश्रयत्वमवच्छेदकतासंबन्धेन । हस्तादेरलक्ष्यत्वे त्वन्त्यावयवित्वेन विशेषणीयम् । स्वर्गिशरीरे नारकिशरीरे वृक्षादौ च सुखदुःखस्वीकारान्नातिव्याप्तिः । न च तच्छून्यखण्डशरीरेऽव्याप्तिः । सुखाद्याश्रयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । तादृशजातिश्च मनुष्यत्वचैत्रत्वादिः । कल्पभेदेन नरसिंहशरीराणां भेदान्नरसिंहत्वजातिमादाय नरसिंहशरीरे लक्षणसमन्वय इति ॥ ११ ॥

वृ०—इन्द्रियं विभजते लक्षयति च । यद्यपि मनसोऽपीन्द्रियत्वमस्त्येव तथाऽपि घ्राणेत्यादेरुपलक्षणपरत्वान्न दोषः । वस्तुतस्त्विन्द्रियाणीत्यस्य बहिरिन्द्रियाणीत्यर्थः । तेन भूतेभ्य इत्यस्य नासंगतिः । अत्र चैतानीन्द्रियाणीति वदता घ्राणाद्यन्यान्यत्वं लक्षणमिति सूचितम् । प्रत्यक्षजनकतावच्छेदकतयेन्द्रियत्वमखण्डोपाधिरूपमित्यन्ये । घ्राणत्वादिकं जातिविशेषरूपं कर्णशष्कुल्यवच्छिन्नं नभः

---

* ननु श्रोत्रस्याऽऽकाशादभिन्नत्वेन तद्विषये भूतेभ्य इति पञ्चम्यर्थो न संगच्छत इति चेत् । अत्रोच्यते । कर्णशष्कुलीसंयोगोपाधिना श्रोत्रस्य नभसः कथंचिद्भेदं विवक्षित्वा पञ्चम्यर्थो व्याख्येयः । अत्रेदं बोध्यम् । घ्राणादिपदेषु जिघ्रत्यनेनेत्यादियोगार्थाश्रयणेनैकसूत्रत्वेन पठितानि पञ्च लक्षणसूत्राणि । भूतेभ्य इति तु गन्धादिग्रहणनियमप्रदर्शनाय । अत्र चेदमनुमानं बोध्यम् । विमतं घ्राणेन्द्रियं पार्थिवं रूपादीनां पञ्चानां मध्ये गन्धस्यैवाभिव्यञ्जकत्वादिति ।

---

१ ग. प्रस्पृ° । २ ग. द्बोद्धव्यम् । स्व° । ३ छ. 'प्यव्याप्यजा° ।

नानाप्रकृतीनामेषां सतां विषयनियमो नैकप्रकृतीनां, सति च विषयनियमे स्वविषयग्रहणलक्षणत्वं भवतीति ॥ १२ ॥

भा०—कानि पुनरिन्द्रियकारणानि—

पृथिव्यापस्तेजो वायुराकाश-
मिति *भूतानि ॥ १३ ॥

संज्ञाशब्दैः पृथगुपदेशो भूतानां विभक्तानां सुवचं[1] कार्यं भविष्यतीति ॥ १३ ॥

---

श्रोत्रम् । घ्राणादीनि किंप्रकृतिकानीत्याकाङ्क्षायामाह—भूतेभ्य इति । तेनेन्द्रियाणामहंकारप्रकृतिकत्वं नेति मन्तव्य व्युत्पादयिष्यते चेदं तृतीयाध्याये । अत्र घ्राणादीनां चतुर्णां पृथिव्यादिजन्यत्वं संभवति । श्रोत्रस्य कर्णशष्कुल्यवच्छिन्नाकाशस्य कर्णशष्कुल्या + जन्यत्वादेव जन्यत्वव्यपदेशः । अथवाऽभिन्नानीति पूरयित्वा भूताभिन्नानीति व्याख्येयम् । घ्राणादीत्यस्योपलक्षणपरत्वे तु भूतेभ्य इति बहिरिन्द्रियपरम् ॥ १२ ॥

वृ०—भूतान्येव कानीत्याकाङ्क्षायामाह । आरम्भे परस्परानपेक्षत्वसूचनायासमासकरणम् । भूतत्वं तु बहिरिन्द्रियग्रहणयोग्यविशेषगुणवत्त्वम् । पृथिव्यादयस्तु जातिविशेषा इति ॥ १३ ॥

---

* अत्र केचित्—कानि पुनरिन्द्रियकारणानीति प्रश्नस्योत्तररूपम् ‘ पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ’ इति भाष्यमेव न सूत्रम् । प्रमाणादिष्वनुक्रान्तेषु प्रमाणलक्षणविभागतद्विशेषलक्षणसूत्राणि प्रणीय प्रमेयानात्मशरीरेन्द्रियार्थादीनभिधाय तत्रोद्दिष्टानामात्मशरीरेन्द्रियाणां लक्षणेऽभिहितेऽर्थस्वरूपज्ञापनस्यैव क्रमप्राप्तत्वाद्वार्तिके तात्पर्यटीकायां वा पूर्वसूत्रेषु सूत्रमिदमित्यभिधानवदस्य सूत्रत्वेनानभिधानात् । घ्राणरसनेत्यादिसूत्रस्य व्याख्यानं कृत्वा गन्धरसेत्यादेरेव वार्तिके सूत्रत्वेनोक्तेरिति । वृत्याद्यालोचनात्सूत्रमेवेति परे ।

+ अयं भावः—श्रोत्रं नाम कर्णशष्कुल्यवच्छिन्नं नभः । तच्च नित्यं, तथा च पृथिव्यादिभ्यस्तस्य जन्यत्वं न संभवतीति लक्षणया श्रोत्रस्य जन्यत्वव्यपदेशः । तथा हि भूतेभ्यः कर्णशष्कुल्या उत्पन्नत्वेन तदवच्छिन्नश्रोत्रस्यापि भूतजन्यत्वव्यवहारान्नानुपपत्तिः ।

---

१ क. वचनमितिपाठान्तरम् ।

भा०—इमे तु खलु—

गन्धरसरूपस्पर्शशब्दाः पृथि-
व्यादिगु*णास्तदर्थाः ॥ १४ ॥

पृथिव्यादीनां यथाविनियोगं गुणा इन्द्रियाणां यथाक्रममर्था विषया इति ॥ १४ ॥

भा०—अचेतनस्य करणस्य बुद्धेर्ज्ञानं वृत्तिः, चेतनस्याकर्तुरुपलब्धि-रिति युक्तिविरुद्धमर्थं प्रत्याचक्षाणक इवेदमाह—

बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्त+रम् ॥ १५ ॥

नाचेतनस्य करणस्य बुद्धेर्ज्ञानं भवितुमर्हति । तद्धि चेतनं स्यात् ।

---

वृ०—क्रमप्राप्तमर्थं विभजते लक्षयति च । वैशेषिकाणां द्रव्यगुणकर्मस्वर्थशब्दा-भिधेयत्वमतः पञ्चानां गन्धादीनामेव कथं तत्त्वमित्याशङ्कानिरासाय तदर्था इत्युक्तम् । तेषामिन्द्रियाणामर्था विषया उद्दिष्टा अपि त एवेत्याशयः । इत्थं च तदर्थत्वं लक्षणमिति मन्तव्यम् । तच्छब्देन बहिरिन्द्रियाणि परामृश्यन्ते । तथा चैकबहिरिन्द्रियमात्रग्राह्यविशेषगुणत्वं बहिरिन्द्रियग्राह्यबहिरिन्द्रियाग्राह्यगु-णत्वं वा तदर्थः । पृथिव्यादिगुणा इति लक्ष्यनिर्देशः । ते के गुणा इत्याका-ङ्क्षायां गन्धेत्यादि । पृथिव्यादीनां गुणा इति षष्ठीसमासो भाष्यादिसंमतस्तेन गुणगुणिनोरभेदो नेति सूचितम् ॥ १४ ॥

वृ०—बुद्धिं लक्षयितुमाह । अनर्थान्तरं समानार्थकं न तु सांख्यानामिव बुद्धित-

---

* अत्र पृथिव्यादयश्च गुणाश्चेति द्वंद्वसमासः । तेन पृथिव्यादीनामपि चक्षुरादीन्द्रिय-विषयत्वरूपं तदर्थत्वं संगृहीतं भवति । षष्ठीतत्पुरुषाश्रयणे तु न संगृह्येत । किं च गन्धा-दीनामन्यगुणत्वाभावेन व्यावर्त्यासंभवाद्विशेषणवैयर्थ्यं स्यात् । पृथिव्यादिग्रहणेन पृथिव्य-तेजांसि बाह्येन्द्रियग्राह्याण्यपदिश्यन्ते । गुणग्रहणेन च सर्वे आश्रितोऽनाश्रितश्च गुणो ग्राह्य इति संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहवेगकर्मसामान्यविशेषा आश्रिता गृह्य-न्ते । तथाऽनाश्रितश्च समवायस्तद्धर्मत्वाद्गुण इति सोऽपि गृह्यते । गन्धरसरूपस्पर्श-शब्दानां पृथगभिधानं त्विन्द्रियविशेषनियमज्ञापनार्थम् । नियमश्च—इन्द्रियाणि गन्धरसरूप-स्पर्शशब्देषु तत्सामान्येषु नियतान्यन्यत्रानियतानीति । तत्र पृथिव्यप्तेजांसि द्वीन्द्रियग्राह्याणि शेषश्च गुणराशिः । सत्तागुणत्वे च सर्वेन्द्रियग्राह्ये समवायोऽभावश्च । अत्र विशेषो रेखो-परेखादिर्नेत्वन्यस्तस्यातीन्द्रियत्वात् । + केचिद्बुद्धिवृत्तिर्ज्ञानमात्मवृत्तिरुपलब्धिरिति वदन्ति तन्निराकरणार्थं समानार्था एते शब्दाः प्रयुज्यन्ते । तेन च बुद्धिवृत्तिः पृथङ्निराकृता भवतीति भावः ।

एकश्चायं चेतनो देहेन्द्रियसंघातव्यतिरिक्त इति प्रमेयलक्षणार्थस्य वाक्यस्यान्यार्थप्रकाशनमुपपत्तिसामर्थ्यादिति ॥ १५ ॥

भा०—स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि तेषु सत्स्वियमपि—

युगपज्ज्ञानानुत्पत्तिर्मनसो +लिङ्गम् ॥ १६ ॥

अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्तीति । युगपच्च खलु घ्राणादीनां गन्धादीनां च संनिकर्षेषु

---

त्वस्य महत्तत्त्वापरपर्यायस्य परिणामविशेषो ज्ञानं यथा चैतत्तथा वक्ष्यते । तथा च बुद्ध्यादिपदवाच्यत्वमनुभवसिद्धज्ञानत्वजातिरेव वा लक्षणमिति भावः ॥ १५ ॥

वृ०—मनो लक्षयति। युगपदेककाल एकात्मनीति पूरणीयं ज्ञानानामनुत्पत्ति-

---

* प्रमेयगणपठिताया अपि बुद्धेर्विषयत्वप्राप्तावपि विषयत्वमुपपत्त्या सिद्धमिति भावः । +ननु युगपज्ज्ञानानुत्पत्तिर्ज्ञानगता मनोधर्मत्वाभावात्कथं मनसोऽनुमापिकेति चेत् । अत्रोच्यते । रूपादिज्ञानानि चक्षुरादिव्यतिरेकेणाधिष्ठायकान्तरापेक्षाण्ययुगपदुत्पत्तेः । यथाऽनेकशिल्पप्रवीणस्य रथकारस्यानेकं वास्यादि संनिधावुपस्थितं न युगपदनेकरथादिक्रियां निर्वर्तयति हस्तरूपाधिष्ठायकान्तरापेक्षत्वात् । तथा चक्षुरादि न युगपदनेकज्ञानं करोति तस्मात्तदप्यधिष्ठायकान्तरमपेक्षते । तथाचानुमानं चक्षुरादीन्द्रियाण्यात्मप्रवृत्तावधिष्ठायकान्तरापेक्षाण्ययुगपत्प्रवृत्तेर्वास्यादिवदिति । नन्वेवमप्येकेन्द्रियग्राह्याणां नीलपीतादीनां कुतो न युगपज्ज्ञानद्वयं मनःसंनिधानस्य तत्र सत्त्वात् । न च संबन्धिभेदादेकदा विषयेन्द्रियसंनिकर्षरूपकारणाभावेन निर्वाहः । चक्षुःसंयुक्तगवादिगतगुणक्रिययोरेकदा ज्ञानद्वयापत्तेरवारणात् । न च फलबलेन ज्ञानेच्छायाः सहकारित्वमाश्रित्य तदभावान्न ज्ञानद्वयं तत्सत्त्वे तु समूहालम्बनात्मकस्यैकस्यैव ज्ञानस्योत्पत्तेर्नैयमापत्तिरिति वाच्यम् । मनसोऽसिद्धिप्रसङ्गात् । बुभुत्साया अभावेनैव भिन्नेन्द्रियग्राह्याणामपि युगपज्ज्ञानद्वयापत्तेर्वारयितुमशक्यत्वादिति चेन्मैवम् । करणत्वेनैव हेतुना युगपदनेकक्रियाकारित्वाभावसिद्धेः । वास्यादौ युगपदनेकक्रियाकारित्वाभावस्य दृष्टत्वात् । आत्मनोऽधिष्ठातृत्वेऽपि तस्य विभुतया सर्वेन्द्रियसंबन्धस्य सर्वदा सत्त्वेन मनःस्वीकारं विनाऽनुपपत्तिपरिहारासंभवादिति भावः ।

---

१ क. वाक्यार्थस्या° । २ ख. °त्वादेः प्र° ।

सत्सु युगपज्ज्ञानानि नोत्पद्यन्ते तेनानुमीयतेऽस्ति तत्तदिन्द्रियसंयोगि सहकारिनिमित्तान्तरमव्यापि यस्यासंनिधेर्नोत्पद्यते ज्ञानं संनिधेश्चोत्पद्यत इति । मनःसंयोगानपेक्षस्य हीन्द्रियार्थसंनिकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन्ज्ञानानीति ॥ १६ ॥

भा०—क्रमप्राप्ता तु—

प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति ॥ १७ ॥

मनोऽत्र बुद्धिरित्यभिप्रेतम् । बुध्यतेऽनेनेति बुद्धिः सोऽयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च * दशविधः । तदेतत्कृतभाष्यं द्वितीयसूत्र इति ॥ १७ ॥

---

र्यतः स एव धर्मो ज्ञानकरणाणुत्वं मनसो लिङ्गं लक्षणमित्यर्थः । तथा हि चक्षुरादिषु विषयसंबद्धेष्वपि यस्यासत्यभावादेकं न ज्ञानं जनयति । यत्संबन्धादपरं च ज्ञानं जनयति तदेव चाणु निखिलज्ञानजनकं सुखादिसाक्षात्कारासाधारणकारणं तदेकमेव लाघवात्सिद्धं मन इत्यर्थः । एवमव्याख्याने च लक्षणप्रकरणे प्रमाणोपन्यासोऽसंगतः स्यादिति । अन्ये तु सति धर्मिणि लक्षणचिन्तेत्यतो मनःसाधनाय युगपदिति सूत्रम् । इत्थं च मनःसिद्धौ निःस्पर्शाणुत्वादिकं लक्षणं सुकरमित्याशय इति वदन्ति ॥ १६ ॥

वृ०—प्रवृत्तिं लक्षयति विभजते च । अत्र प्रवृत्तित्वं रागजन्यतावच्छेदको जातिविशेषः । स एव लक्षणम् । ईश्वरकृतेरपि लक्ष्यत्वे यत्नत्वमेव तथा । जीवनयोनियत्ने निवृत्तौ च मानाभावात् । तत्सद्भावेऽपि प्रवृत्तित्वं नित्ययत्नसाधारणं तद्व्यावृत्तं वा तथा । द्वंद्वानन्तरश्रुतारम्भपदस्य प्रत्येकमन्वयाद्वागारम्भादिभेदेन त्रिविधा प्रवृत्तिः । बुद्धिशब्देनात्र मनोऽभिप्रेतमिति । शरीरशब्दश्च चेष्टावत्त्वेन हस्तादिसाधारणः । तथा च वचनानुकूलो यत्नो वागारम्भः । शरीरगोचरो यत्नश्चेष्टानुकूलयत्नो वा शरीरारम्भः । एतद्द्वयभिन्नो यत्नो बुद्ध्यारम्भः । स च ध्यानोदयादेव दर्शनाद्यनुकूलः पर्यवस्यति । प्राञ्चस्तु सामान्यविशेषलक्षणे चादृष्टजनकत्वं निवेशयन्ति । इयं च कारणरूपा प्रवृत्तिः । कार्यरूपा तु धर्माधर्मात्मिकेति ॥ १७ ॥

---

* कायेन परित्राणं परिचरणं दानं च । वाचा सत्यं हितं प्रियं स्वाध्यायश्च । मनसा दयाऽस्पृहा श्रद्धा चेति । पापोऽप्यारम्भो दशविध एव । शरीरेण हिंसा स्तेयं प्रतिषिद्धमैथुनं चेति । वाचाऽनृतं परुषं सूचनाऽसंबद्धं च । मनसा परद्रोहं परद्रव्याभीप्सा नास्तिक्यं चेति ।

---

१ ख. °पज्ज्ञाना° ।

प्रवर्तनालक्षणा दोषाः ॥ १८ ॥

भा०—प्रवर्तना प्रवृत्तिहेतुत्वम् । ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वा । यत्र मिथ्याज्ञानं तत्र रागद्वेषाविति । *प्रत्यात्मवेदनीया हीमे दोषाः कस्माल्लक्षणतो निर्दिश्यन्त इति । कर्मलक्षणाः खलु रक्तद्विष्टमूढाः । रक्तो हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा भजते । तथा द्विष्टस्तथा मूढ इति । रागद्वेषमोहा इत्युच्यमाने बहुनोक्तं भवतीति ॥ १८ ॥

+पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥

भा०—उत्पन्नस्य क्वचित्सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः । उत्पन्नस्य संबद्धस्य संबन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः । पुनरुत्पत्तिः पुनर्देहादिभिः संबन्धः । पुनरित्यभ्यासाभिधानम् । यत्र क्वचित्प्राणभृन्निकाये वर्तमानः पूर्वोपात्तान्दे-

---

वृ०—दोषं लक्षयति । दोषा इति बहुवचनं रागद्वेषमोहात्मकलक्ष्यत्रयज्ञापनाय । प्रवर्तना प्रवृत्तिजनकत्वं तदेव लक्षणं येषाम् । यद्यपीदं शरीरादृष्टेश्वरेच्छादावतिव्याप्तं तथाऽपि लौकिकप्रत्यक्षसाविषयत्वे सतीति विशेषणीयम् । यागादिगोचरप्रमावारणाय प्रमाजन्यत्वे सतीति विशेषयन्ति ॥ १८ ॥

वृ०—प्रेत्यभावं लक्षयति । प्रेत्य मृत्वा भावो जननं प्रेत्यभावः । तत्र पुनरित्यनेनाभ्यासकथनात्प्रागुत्पत्तिस्ततो मरणं तत उत्पत्तिरिति । प्रेत्यभावोऽयमनादिरपवर्गान्तः । एतज्ज्ञानं च वैराग्य उपयुज्यत इति प्रेत्येति न व्यर्थम् ।

---

* स्वशरीरावच्छिन्नात्मनि प्रत्यक्षाः परशरीरे तु प्रवृत्त्याऽनुमेयाः । + पुनर्ग्रहणं संसारानादित्वसूचनार्थम् । द्वितीयसूत्रे गृहीतानां दुःखादीनां मिथ्याज्ञानपर्यन्तानामविच्छेदेन कार्यकारणभावरूपः संसारो ह्यनादिः । न हि शरीरसंबन्धमन्तरेण दुःखं संभवति । न च शरीरसंबन्धो धर्माधर्मौ विना भवति । न च धर्माधर्मौ रागद्वेषावृते समुत्पद्येते । न च रागद्वेषावज्ञानं विना । न चाज्ञानं शरीरं विहाय समुत्पद्यत इति सोऽयं संसारः क्रियामधिकृत्य मनसः । उपभोगमधिकृत्याऽऽत्मनः । संसारकारणभूताज्ञाने मनसोऽसाधारणकारणत्वादात्मनश्च तज्जनितदुःखरूपफलभोक्तृत्वात् ।

---

१ ख. यथा । २ ग. हुलोक्तं । ३ °त्तिः सा प्रे° ।

हादीञ्जहाति तत्प्रैति यत्तत्रान्यत्र वा देहादीनन्यानुपादत्ते तद्भवति प्रेत्यभावो मृत्वा पुनर्जन्म । सोऽयं जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति ॥ १९ ॥

***प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥**

भा०—सुखदुःखसंवेदनं फलम् । सुखविपाकं कर्म दुःखविपाकं च । तत्पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतम् । तथा हि प्रवृत्तिदोषजनितोऽर्थः फलमेतत्सर्वं भवति । तदेतत्फलमुपात्तमुपात्तं[1] हेयं त्यक्तं[2] त्यक्तमुपादेयमिति । नास्य हानोपादानयोर्निष्ठा + पर्यवसानं वाऽस्ति । न खल्वयं फलस्य हानोपादानस्रोतसोह्यते लोक इति ॥ २० ॥

---

तदीयमरणं च तदीयजीवनादृष्टनाशस्तदीयचरमप्राणसंयोगध्वंसस्तदीयप्राणध्वंसो वा । तदीयोत्पत्तिस्तु तदीयविजातीयशरीराद्यप्राणसंयोग इति ॥ १९ ॥

वृ०—फलं लक्षयति । अत्र च मुख्यं फलं सुखदुःखोपभोगः । तथा च भाष्यम् । सुखदुःखसंवेदनं फलम् । तत्र च धर्माधर्मात्मकप्रवृत्तेः प्रयोजकत्वात्तत्र च दोषस्य हेतुत्वात्प्रवृत्तिदोषजनितेत्युक्तम् । लक्षणं तु सुखदुःखान्यतरसाक्षात्कार इति । गौणं फलं तु शरीरादिकं सर्वमेव । तथा च भाष्यं—तत्पुनर्देहेन्द्रियबुद्धिषु सतीषु भवतीति । सह देहेन्द्रियादिभिः फलमभिप्रेतम् । तथा हि प्रवृत्तिदोषजनितोऽथः फलमेतत्सर्वं भवतीति । इत्थं च जन्यत्वमेव फलत्वम् । प्रवृत्तिदोषजनित इति तु निर्वेदोपयोगादुक्तम् ॥ २० ॥

---

* ननु दोषेभ्यः प्रवृत्तिरुत्पद्यते प्रवृत्तिश्च धर्माधर्मद्वारा सुखदुःखे जनयतीति कार्यकारणभावस्य सत्त्वात्प्रवृत्तिजनितोऽर्थः फलमित्येव वक्तव्ये दोषग्रहणं किमर्थमिति चेत् । अत्रोच्यते । न केवलं प्रवृत्तिं प्रत्येव दोषाणां हेतुभावः । अपि तु प्रवृत्तिकार्ये सुखदुःखे प्रत्यपीति बोधनार्थं दोषग्रहणम् । दोषसलिलावसिक्तायां खल्वात्मभूमौ धर्माधर्मात्मके बीजे सुखदुःखे जनयतो नान्यथा । + निष्ठा नाम समाप्तिः सा च प्रलयेऽप्यस्तीत्यत उक्तं पर्यवसानमिति । प्रलये ह्यवसानमात्रमस्ति न पुनः परितः । पुनरपि त्यागोपादानयोर्भावादित्यर्थः ।

---

१ क. ग. पात्तं हे° । २ क. त्यक्तत्य° ।

भा०—अथैतदेव—

**बाधनालक्षणं *दुः[1]खमिति ॥ २१ ॥**

बाधना पीडा ताप इति । तयाऽनुविद्धमनुषक्तमविनिर्भागेण वर्तमानं दुःखयोगाद्दुःखमिति । सोऽयं सर्वं[2] दुःखेनानुविद्धं बृहन्तमिति पश्यन्दुःखं[3] जिहासुर्जन्मानि दुःखदर्शी निर्विद्यते । निर्विण्णो विरज्यते । विरक्तो विमुच्यते ॥ २१ ॥

भा०-यत्र तु निष्ठा यत्र तु पर्यवसानं सोऽयम्—

**तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥**

+ तेन दुःखेन जन्मनाऽत्यन्तं[4] विमुक्तिरपवर्गः । कथम् । उपात्तस्य जन्मनो हानमन्यस्य चानुपादानमेतामवस्थामपर्यन्ताम[5]-

---

वृ०-दुःखं लक्षयति । बाधना पीडा तदेव लक्षणं स्वरूपं यस्य । तथा चानुभवसिद्धदुःखत्वजातिरेव लक्षणम् । शरीरेन्द्रियार्थेषु दुःखसाधनत्वात्सुखे च दुःखानुषङ्गाद्दुःखव्यवहारो गौण इति । अत एवाग्रिमसूत्रे तत्पदेन मुख्यदुःखपरामर्शः ॥ २१ ॥

वृ०—अपवर्ग लक्षयति । तस्य दुःखस्यात्यन्तविमोक्षः स्वसमानाधिकरणदुःखासमानकालीनो ध्वंसः । तस्य च जन्मापायादेव संभव इत्याशयेन दुःखेन

---

* शरीरादेर्बाधनानुषङ्गेण गौणं दुःखत्वं प्रतिकूलवेदनीये भावे तु मुख्यम् । शरीरे दुःखनिमित्तत्वादिन्द्रियविषयबुद्धीनां तत्साधनत्वात्सुखे च दुःखविनाभावात् । न च सुखं दुःखाभावमात्रमेवेति वाच्यम् । प्रत्यक्षसिद्धत्वेन तथा वक्तुमशक्यत्वात् । सुखप्राप्त्यर्थं कश्चित्प्रवर्तते दुःखपरिहारार्थं च कश्चिदिति प्रवृत्तिद्वैविध्यदर्शनाच्च । सुखाभावमेव दुःखमित्यपि वक्तुं शक्यत्वेन निश्चायकाभावादुभयसिद्धेश्चेति बोध्यम् । + तच्छब्देन गौणमुख्यभेदाभिन्नं द्विविधमपि दुःखं परामृश्यते । मुख्यमेव दुःखं परामृश्यत इति भ्रमवारणार्थं जन्मनेत्युच्यते । एवं च दुःखशब्देन सर्वे जायमानाः शरीरादय उच्यन्त इति भावः ।

---

१ ङ. दुःखं ॥ २१ ॥ बा° । २ ग. सर्वदुःखेनावि° । ३ ख. दुःखजि° । ४ ग. °त्यन्तावि° । ५ ख. °मेनाम° ।

पवर्गं वेदयन्तेऽपवर्गविदः। * तदभयमजरममृत्युपदं ब्रह्म क्षेमप्राप्तिरिति। नित्यं सुखमात्मनो महत्त्ववन्मोक्षे व्यज्यते तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति केचिन्मन्यन्ते। तेषां प्रमाणाभावादनुपपत्तिः। न प्रत्यक्षं नानुमानं नाऽऽगमो वा विद्यते नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यत इति।

नित्यस्याभिव्यक्तिः संवेदनं तस्य हेतुवचनम्। नित्यस्याभिव्यक्तिः संवेदनं ज्ञानमिति तस्य हेतुर्वाच्यो यतस्तदुत्पद्यत इति।[1]

सुखवन्नित्यमिति चेत्संसारस्थस्य मुक्तेनाविशेषः। यथा मुक्तः[2] सुखेन तत्संवेदनेन च सन्नित्येनोपपन्नस्तथा संसारस्थोऽपि प्रसज्यत इति। + उभयस्य नित्यत्वात्।

अभ्यनज्ञाने[3] च धर्माधर्मफलेन साहचर्यं यौगपद्यं गृह्येत। यदिदमुत्पत्तिस्थानेषु धर्माधर्मफलं सुखं दुःखं वा संवेद्यते पर्यायेण तस्य च[4] नित्यं स्वसंवेदनस्य च सहभावो यौगपद्यं गृह्येत[5]। न सुखाभावो नानभिव्यक्तिरस्ति। उभयस्य × नित्यत्वात्।

अनित्यत्वे हेतुवचनम्। अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यं यत उत्पद्यते स हेतुर्वाच्यः।

---

* अभयमित्यनेन मोक्षप्राप्तौ सत्यां पुनः संसाराभावः सूच्यते। अभयं वै ब्रह्मेति श्रुतेः। ये तु नामरूपप्रपञ्चात्मना ब्रह्मैव परिणमत इति वदन्ति तन्मतनिराकरणार्थमाह—अजरमिति। अयं भावः—किं ब्रह्म सर्वात्मना परिणमत आहोस्विदेकदेशेन। नाऽऽद्यः। सर्वात्मना ब्रह्मणः परिणामे ब्रह्मणः सर्वात्मनाऽन्यथात्वेन विनाशप्रसङ्गात्। नान्त्यः। एकदेशपरिणामे हि सावयवत्वेन घटादिवदनित्यत्वप्रसङ्गादिति। वैनाशिका वदन्ति प्रदीपस्येव निर्वाणं मोक्षस्तस्य चेतस इति। तान्प्रत्याह—अमृत्युपदमिति। + सुखं तत्संवेदनं चेत्यनयोरित्यर्थः। × सुखस्य तद्विषयकज्ञानस्य च नित्यत्वे संसारदशायामपि मोक्षादविशेषप्रसङ्गः। इष्टापत्तौ तु धर्माधर्माभ्यां जनितयोः सुखदुःखयोरुपलब्धिकालेऽपि नित्यसुखस्य तज्ज्ञानस्य सर्वदा सत्त्वेन यौगपद्यप्रसङ्ग इति भावः।

---

१ क. °दुपपद्य° २ ग. मुक्तेः सु°। ३ ग. 'नेन च। ४ ख. नित्यसुखसं°। ५ ग. त। तेन।

आत्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वम् । आत्ममनःसंयोगो हेतुरिति चेत् । एवमपि तस्य सहकारि निमित्तान्तरं वचनीयमिति ।

धर्मस्य कारणवचनम् । यदि धर्मो निमित्तान्तरं तस्य हेतुर्वाच्यो यत उत्पद्यत *इति ।

योगसमाधिजस्य कार्यावसायविरोधात्प्रलये[1] +संवेदननिवृत्तिः। यदि योगसमाधिजो धर्मो ÷हेतुस्तस्य कार्यावसायविरोधात्प्रलये[2] संवेदनमत्यन्तं निवर्तयति[3] ।

असंवेदने चाविद्यमानेनाविशेषः[4] । यदि धर्मक्षयात्संवेदनोपरमो नित्यं सुखं न संवेद्यत इति, किं विद्यमानं न संविद्यतेऽथाविद्यमानमिति नानुमानं विशिष्टेऽस्तीति ।

अप्रक्षयश्च धर्मस्य निरनुमानं[5] उत्पत्तिधर्मकत्वात्[6] । योगसमाधिजो धर्मो न क्षीयत इति नास्त्यनुमानमुत्पत्तिधर्मकमनित्यमिति । विपर्ययस्य त्वनुमानम् । यस्य तु संवेदनोपरमो नास्ति तेन संवेदनेन हेतुर्नित्य इत्यनुमेयम् । नित्ये च मुक्तसंसारस्थयोरविशेष इत्युक्तम् । यथा मुक्तस्य नित्यं सुखं तत्संवेदनहे×तुश्च, संवेदनस्य तूपरमो नास्ति कारणस्य नित्यत्वात्, तथा संसारस्थस्यापीति । एवं सति धर्माधर्मफलेन सुखदुःखसंवेदनेन साहचर्यं गृह्येतेति ।

---

* संसारावस्थायां तावदयमात्ममनःसंयोगो धर्मं निमित्तमपेक्षमाणः सुखज्ञानमकार्षीत् । यदि तु मुक्त्यवस्थायां तदनपेक्ष एव सुखज्ञानं करोति हन्त रूपादिज्ञानेष्विन्द्रियाण्यपि नापेक्षेतेति भावः । + योगसमाधिजस्य धर्मस्य कार्यत्वेन समाप्तौ नाशे सति तज्जनितायाः संवेदनायाः कारणाभावे कार्यस्थित्यङ्गीकारेऽनुभवविरोधान्निवृत्तिरभावः प्राप्नोति । तथा च मोक्षदशायां सर्वदा सुखानुभवाभ्युपगमो न सिध्यतीत्यर्थः । ÷ तस्येत्यस्य प्रलयेऽन्वयः । विरोधादिति निवृत्तावन्वेति । × अत्र हेतुपदं कारणस्य नित्यत्वादित्यत्र कारणपदं च प्रयोजकपरम् । नित्ययोः कार्यकारणभावासंभवात् । प्रयोज्यप्रयोजकभावस्य तु धूमाभाववह्न्यभावयोरिवाभ्युपगमसंभवात् ।

---

१ ख. प्रक्षये । २ क. ख. प्रक्षये । ३ ख. °र्ततेति । ४ क. °माना° । ५ क. ग. °नमुत्प° । ६ ग. °त्तिकध° ।

शरीरादिसंबन्धः प्रतिबन्धहेतुरिति चेन्न शरीरादीनामुपभोगार्थत्वाद्विपर्ययस्य चाननुमानात् । स्यान्मतं संसारावस्थशरीरादिसंबन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धकस्तेनाविशेषो नास्तीति । एतच्चायुक्तम् । शरीरादय उपभोगार्थास्ते भोगप्रतिबन्धं करिष्यन्तीत्यनुपपन्नम्* । न चास्त्यनुमानमशरीरस्याऽऽत्मनो भोगः कश्चिदस्तीति ।

इष्टाधिगमार्था प्रवृत्तिरिति चेन्नानिष्टोपरमार्थत्वात् । इदमनुमानमिष्टाधिगमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणामिति । नेष्टमनिष्टेनाननुविद्धं संभवतीतीष्टमप्यनिष्टं संपद्यते । अनिष्टहानाय घटमान इष्टमपि जहाति, विवेकहानस्याशक्यत्वादिति ।

दृष्टातिक्रमश्च देहादिषु तुल्यः । यथा दृष्टमनित्यं सुखं परित्यज्य नित्यं सुखं कामयत एवं देहेन्द्रियबुद्धीरनित्या दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रियबुद्धयः कल्पयितव्याः । साधीयश्चैवं मुक्तस्य चैकात्म्यं कल्पितं भवतीति ।

उपपत्तिविरुद्धमिति चेत्समानम् । देहादीनां नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति समानं सुखस्यापि नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति ।

आत्यन्तिके च संसारदुःखाभावे सुखवचनादागमेऽपि सत्यविरोधः । यद्यपि कश्चिदागमः स्यान्मुक्तस्याऽऽत्यन्तिकं सुखमिति, सुखशब्द आत्यन्तिके दुःखाभावे प्रयुक्त इत्येवमुपपद्यते । दृष्टो हि +दुःखाभावे सुखप्रयोगो बहुलं लोक इति ।

---

* उपभोगार्थमेवाऽऽरब्धानां शरीरादीनामुपभोगप्रतिबन्धकत्वमुपपत्तिविरुद्धमित्यर्थः । सुखाद्युपभोगं प्रति शरीरादेः प्रयोजकत्वस्य लोके दृष्टत्वेन दृष्टानुसारित्वाच्च कल्पनाया मुक्तावपि शरीराद्यङ्गीकारे कैवल्यानुपपत्तिरनङ्गीकारे च सुखानुभवानुपपत्तिर्योगसमाधिजनितशरीरस्य नित्यत्वाभ्युपगमश्च यज्जन्यं तदनित्यमित्यनुमानविरुद्ध इति भावः । + भाराद्यपगमे हि सुखी संवृत्तोऽहमिति प्रसिद्धो लोकानुभव इति भावः ।

---

१ ग. इच्छाऽधि° । २ ख. °ति । इष्टा° । ३ ख. सुखमपवृक्तस्य नित्यं कल्प्यत एवं देहादयोऽपि परिकल्पयितव्याः सा° । ४ क. °स्य कैवल्यं क° ।

नित्यसुखरागस्याप्रहाणे मोक्षाधिगमाभावो रागस्य बन्धनसमाज्ञानात् । * यद्ययं मोक्षे नित्यं सुखमभिव्यज्यत इति नित्यसुखरागेण मोक्षाय घटमानो न मोक्षमधिगच्छेन्नाधिगन्तुमर्हतीति बन्धनसमाज्ञातो[1] हि रागः । न च बन्धने सत्यपि कश्चिन्मुक्त इत्युपपद्यत इति ।

प्रहीणनित्यसुखरागस्याप्रतिकूलत्वम् । अथास्य नित्यसुखरागः प्रहीयते[2] । तस्मिन्प्रहीणे नास्य नित्यसुखरागः + प्रतिकूलो भवति । यद्येवं मुक्तस्य नित्यं सुखं भवति, अथापि न भवति, नास्योभयोः पक्षयोर्मोक्षाधिगमो विकल्पत इति ॥२२॥

इति प्रमेयलक्षणप्रकरणम् ॥ ३ ॥

---

जन्मनाऽत्यन्तं विमुक्तिरपवर्ग इति भाष्यम् । दुःखेन दुःखानुषङ्गिणेत्यर्थः ॥ २२ ॥

इति सूत्रवृत्तौ प्रमेयलक्षणप्रकरणम् ॥ ३ ॥

---

* नित्यसुखरागेण मुमुक्षूणां मोक्षे प्रवृत्तौ रागस्यानिवृत्त्या रागराहित्यरूपहेतोरभावान्मोक्षानुपपत्तिरिति भावः । अत्र मोक्षाय घटमान इत्यनन्तरं भवेदित्याहृत्य वाक्यं समापनीयम् । न मोक्षं गच्छेदित्यनेन तत्र दूषणमुच्यते तस्यैव विवरणं नाधिगन्तुमित्यादिना । बन्धनसमाज्ञातो नाम बन्धन इति समाज्ञातोऽङ्गीकृत इत्यर्थः । + यदि च दुःखं हास्यामीति संकल्प्य द्वेषान्मोक्षे प्रवर्तेत इत्युच्यते तथाऽपि न मुच्येत 'रागद्वेषौ हि बन्धनम्' इत्युक्तेर्द्वेषस्यापि बन्धनत्वेनैवाङ्गीकारात् । अत्रायं सिद्धान्तः—मुमुक्षोर्दुःखहानमप्रतिकूलं भवति । न चायं मुमुक्षुर्दुःखं द्वेष्टि । अद्विषंश्चायं प्रवर्तमानोऽप्रतिकूलं दुःखहानमधिगच्छतीति ।

---

१ क. °ज्ञानो हि । २ क. ख. °ते प्र° ।

भा०—* स्थानवत एव तर्हि संशयस्य लक्षणं वाच्यमिति तदुच्यते—

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः + संशयः॥२३॥**

समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति। स्थाणु-

---

वृ०—क्रमप्राप्तं संशयं लक्षयति। संशय इति लक्ष्यनिर्देशः। विमर्श इत्यत्र

---

* प्रमेयानन्तरमुद्दिष्टस्य संशयस्य प्रमाणलक्षणोत्तरमेव संशयलक्षणस्य स्थानं नाम क्रमो विद्यत इति भावः। तथा च स्थानवत इत्यस्य क्रमप्राप्तस्येत्यर्थः।

+ भाष्यकारमते हि पञ्चविधं संशयकारणमिति टिप्पण्यामनुपदमेव स्पष्टी करिष्यते। वार्तिककाराणां त्वयमाशयः—विमर्शः संशय इति संशयसामान्यलक्षणं बोध्यम्। तत्र संशय इत्यनेन लक्ष्यस्य निर्देशः क्रियते। विमर्श इति तु लक्षणबोधकम्। एकस्मिन्धर्मिणि विरोधिनानाधर्मावगाहिज्ञानं विमर्शः। समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरित्याभ्यां पदाभ्यां त्रीणि विशेषलक्षणानि प्रतिपाद्यन्ते। तथा हि समानधर्मोपपत्तेरित्येकं लक्षणम्। अनेकधर्मोपपत्तेरिति द्वितीयम्। विप्रतिपत्तेरिति तृतीयम्। त्रिष्वपि लक्षणेषु 'उपलब्ध्यनुपलब्ध्यव्यवस्थातः, विशेषापेक्षः, विमर्शः, संशयः' इति चतुर्णामपि पदानां संबन्धो बोध्यः। तथा च समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इति प्रथमं लक्षणं संपन्नम्। अनेकधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इति द्वितीयम्। विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इति तृतीयम्। तत्र प्रथमलक्षण उपलब्ध्यनुपलब्ध्यव्यवस्थात इत्यस्याभावे वृक्षोऽयमिति विशेषनिश्चये सत्यपि पुरुषगतसमानधर्मस्य महत्त्वादेरुपलब्धिरस्तीति संशयः स्यादतस्तत्। तस्यार्थस्तु एकतरधर्मप्रकारकनिश्चयहेत्वभावे धर्मान्तराभावप्रकारकनिश्चयहेत्वभावे च सतीति। ततश्च वृक्षत्वप्रकारकनिश्चयहेतो पुरुषत्वाभावप्रकारकनिश्चयहेतोश्चाभावोऽप्यपेक्षितः। प्रकृते च स नास्तीति न संशयः। यदि च समानधर्मोपपत्तेरिति नोच्यते तर्ह्यनुगतधर्मज्ञानाभावेऽपि विशेषनिश्चयहेत्वभावमात्रेण संशयः स्यादतस्तत्। विशेषापेक्ष इत्यस्याभावे नौकया गच्छन्नारोहपरिणाहवन्तं पदार्थमात्रं पश्यन्वृक्ष इति निश्चायकं न गज इति निश्चायकं च हेतुमनुपलभमानोऽप्यनुपादित्सितेऽजिहासिते चोदासीने वस्तुनि न संदिग्धे बुभुत्साविरहात्। बुभुत्समानस्तु संदिग्धे तत्र बुभुत्साभावेऽपि संशयः स्यादतस्तत्। विशेषं नाम बुभुत्सामपेक्षतेऽसौ विशेषापेक्ष इति तदर्थः। एवमेवाग्रिमलक्षणद्वयेऽप्यूह्यम्।

पुरुषयोः समानं धर्मारोहपरिणाहौ पश्यन्पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः किंस्विदित्यन्यतरन्नावधारयति तदनवधारणं ज्ञानं संशयः । समानमनयोर्धर्ममुपलभे विशेषमन्यतरस्य नोपलभ इत्येषा बुद्धिरपेक्षा संशयस्य प्रवर्तिका वर्तते, तेन विशेषापेक्षो विमर्शः संशयः । अनेकधर्मोपपत्तेरिति समानजातीयमसमानजातीयमनेकम् । तस्यानेकस्य धर्मोपपत्तेर्विशेषस्योभयथा दृष्टत्वात् । समानजातीयेभ्योऽसमानजातीयेभ्यश्चार्था विशिष्यन्ते । * गन्धवत्त्वात्पृथिव्यबादिभ्यो विशिष्यते गुणकर्मभ्यश्च ।

---

विशब्दो विरोधार्थः । मृशिर्ज्ञानार्थः । एकस्मिन्धर्मिणीति पूरणीयम् । तेनैकधर्मिणि विरोधेन भावाभावप्रकारकं ज्ञानं संशयः । तत्र कारणमुखेन विशेषलक्षणान्याह—समानेत्यादि । उपपत्तिर्ज्ञानम् । तथा च समानस्य विरुद्धकोटिद्व-

---

* गन्धवत्त्वात्पृथिवीत्यादिना संशयस्य प्रत्युदाहरणं प्रतिपाद्यते । अस्ति च शब्द इत्यनेन संशयस्योदाहरणमुच्यते तस्यायं भावः—सत्तासंबन्धेन सामान्यविशेषसमवायाभावेभ्यो भेदेन शब्दे ज्ञाते सति द्रव्ये शब्दातिरिक्ते गुणे कर्मणि चादृष्टं शब्दे चोपलभ्यमानं विभागजत्वं द्रव्यत्वादिविशेषनिश्चायकहेत्वभावेन संशायकं भवतीति । ननु शब्दो गुणो विभागजत्वाद्विभागवत् । विभागे हि विभागजत्वं गुणत्वं च दृष्टम् । एवं च शब्दे गुणत्वं सिध्यतीति चेन्न । विभागजविभागानङ्गीकारात् । शब्दमात्रनिष्ठस्य विभागजविभागासमवायिकारणकत्वस्य संशयहेतुत्वेन च तदुपपत्तेः । अत्र समानधर्मोपपत्तिः संशयकारणं भवतीत्यस्योदाहरणं दूरादारोहपरिणाहवद्वस्तुदर्शनम् । तत्र ह्यारोहपरिणाहौ पुरुषवृक्षसाधारणौ प्रतीयमानौ संशयहेतू । अनेकधर्मोपपत्तेस्तूदाहरणं शब्द उपलभ्यमानं विभागजत्वं संशयकारणमिति । तत्र हि शब्दव्यतिरिक्ते द्रव्यादित्रये विभागजत्वं नास्त्येवेति समानत्वाभावान्न पूर्वेण गतार्थता । अनेकधर्मोपपत्तेरित्यस्यासाधारणधर्मोपलब्धेरित्यर्थः । अनेकधर्म इत्यस्यानेकस्माद्विशेषको धर्म इत्यर्थः । एवं च गृह्यमाणव्यभिचारस्य साधारणधर्मस्य वा तादृशस्यासाधारणधर्मस्य ज्ञानं संशयकारणम् । गृह्यमाणाव्यभिचारस्य च तस्य ज्ञानं निर्णयहेतुरिति सिद्धम् । समानधर्मोपपत्तेरित्यनेन विधीयमानव्यभिचार उपदिश्यते विभागजत्वादित्यनेन प्रतिषिध्यमानव्यभिचार इत्येतावता पृथगभिधानम् । तथा चैतद्द्वयं ज्ञातृगतं संशयकारणम् । विप्रतिपत्तिस्तु वक्तृगता संशयकारणमिति भेद इत्याकरे स्पष्टम् ।

---

१ क. °कावियते ।

अस्ति च शब्दे विभागजत्वं विशेषः । तस्मिन्द्रव्यं गुणः कर्म वेति संदेहः । विशेषस्योभयथा दृष्टत्वात् । किं द्रव्यस्य सतो गुणकर्मभ्यो विशेष आहोस्विद्गुणस्य सत इति, अथ कर्मणः सत इति विशेषापेक्षाऽन्यतमस्य व्यवस्थापकं धर्मं नोपलभ इति बुद्धिरिति । विप्रतिपत्तेरिति व्याहतमेकार्थदर्शनविप्रतिपत्तिः । व्याघातो विरोधोऽसहभाव इति । अस्त्यात्मेत्येकं दर्शनम् । नास्तीत्यपरम् । न च सद्भावासद्भावौ सहैकत्र संभवतः । न चान्यतरसाधको हेतुरुपलभ्यते । तत्र तत्त्वानवधारणं संशय इति । * उपलब्ध्यव्यवस्थातः खल्वपि[1] सच्चोदकमुपलभ्यते तडा-

---

यसाधारणधर्मस्य ज्ञानादित्यर्थः । अनेकधर्मोऽसाधारणधर्मस्तज्ज्ञानादित्यर्थः । तथा च साधारणधर्मवद्धर्मिज्ञानजन्योऽसारणधर्मवद्धर्मिज्ञानजन्यश्चेत्यर्थः । विप्र-

---

* अत्रेदं बोध्यम् । भाष्यकाराः पञ्चविधं संशयकारणं मन्यन्ते । तथा हि समानधर्मोपपत्तिः, अनेकधर्मोपपत्तिः, विप्रतिपत्तिः, उपलब्ध्यव्यवस्था, अनुपलब्ध्यव्यवस्था, चेति । तत्र 'तत्र तत्त्वानवधारणं संशय इति' इत्यन्तेन समानधर्मेत्यादीनां त्रयाणां व्याख्यानं कृतम् । इदानीमन्त्यद्वयं व्याख्यायते । खल्वपीत्यस्यानन्तरं 'संशयो भवति' इति शेषः । उपलब्ध्यव्यवस्थातः कथं संशयो भवतीत्येतदेवोपपादयति सच्चोदकमित्यादिना । अयं भावः—उपलब्धिर्नाम ज्ञानं तस्याव्यवस्थेत्यर्थः । द्विविधा ह्युपलब्धिर्भवति विषये विद्यमानेऽविद्यमाने च । यथा तडागादिषु विद्यमानमुदकमुपलभ्यते तथा मरीचिष्वविद्यमानमप्युदकम् । एवं च द्विविधोपलब्धेः प्रसिद्धत्वात्क्वचिदरण्यादावुपलभ्यमाने वस्तुनि विशेषधर्मनिश्चायकप्रमाणाभावात्किं विद्यमानमिदं वस्तूपलभ्यत आहोस्विदविद्यमानमिति संशयो भवति । अन्त्यं संशयकारणं व्याख्यायतेऽनुपलब्ध्यव्यवस्थात इति । अत्रापि 'संशयो भवति' इति शेषः । संशयः कथं भवतीत्येतदेव प्रतिपादयति सच्च नोपलभ्यत इत्यादिना । अयं भावः—अनुपलब्धिर्नाम ज्ञानाभावः । सोऽपि द्विधा विद्यमाने वस्तुन्यविद्यमाने च । यथा विद्यमानमपि मूलकीलकोदकं नोपलभ्यते । सर्वे हि पदार्थाः पाञ्चभौतिकाः । एवं च मूले कीलके चोदकमस्त्येव परंतु नोपलभ्यते । तथाऽविद्यमानं वस्तु नोपलभ्यते । अविद्यमानं च द्विविधमनुत्पन्नं निरुद्धं च । एवं चानुपलब्धिद्वैविध्यस्य प्रसिद्धत्वात्क्वचिदनुपलभ्यमाने वस्तुनि संशयो भवति किमिदं वस्तु विद्यमानमुपलभ्यत आहोस्विदविद्यमानमिति । वार्तिककारास्तु त्रीण्येव संशयकारणानीति मन्यन्ते ।

---

[1] क. 'पि स्वच्छोदं' ।

गादिषु मरीचिषु वाऽविद्यमानमुदकमित्यतः क्वचिदुपलभ्य[2]-
माने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्य-
तेऽथासदिति संशयो भवति । अनुपलब्ध्यव्यवस्थातः सच्च नोप-
लभ्यते मूलकीलकोदकादि । असच्चानुत्पन्नं विरुद्धं वा । ततः
क्वचिदनुपलभ्यमाने संशयः । किं सन्नोपलभ्यत उतासदिति
संशयो भवति । विशेषापेक्षा पूर्ववत् । पूर्वः समानोऽनेकश्च धर्मो
ज्ञेयस्थः । उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे । एतावता विशेषेण
पुनर्वचनम् । समानधर्माधिगमात्समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो
विमर्श इति ॥ २३ ॥

भा०—स्थानवतां लक्षणमिति समानम्—

**यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥ २४ ॥**

* यमर्थमाप्तव्यं हातव्यं वाऽध्यवसाय तदाप्तिहानोपायमनुतिष्ठति
तत्प्रयोजनम् । तद्वेदितव्यं प्रवृत्तिहेतुत्वात् । इममर्थमाप्स्यामि

---

तिपत्तिर्विरुद्धकोटिद्वयोपस्थापकः शब्दस्तस्मादित्यर्थः । यद्यपि शब्दस्य न संशा-
यकत्वं तथाऽपि शब्दात्कोटिद्वयोपस्थितौ मानसः संशय इति वदन्ति । उपल-
ब्धेर्ज्ञानस्यानुपलब्धेर्व्यतिरेकज्ञानस्य याऽव्यवस्था सद्विषयकत्वानिर्धारणं प्रामा-
ण्यसंशय इति फलितोऽर्थः । अन्ये तूपलब्ध्यव्यवस्था प्रामाण्यसंशयः । अनुप-
लब्धिरुपलब्धिविरोधिभ्रमत्वं तदव्यवस्था तत्संशय इत्याहुः । वस्तुतस्तु
प्रामाण्यसंशयस्य न संशयहेतुत्वं किंत्वगृहीताप्रामाण्यकज्ञानस्य विरोधितया
सति प्रामाण्यसंशये तज्ज्ञानस्याविरोधितया साधारणधर्मदर्शनादित एव संश-
योत्पत्तिरित्युपलब्धीत्यादिकं तादृशस्थले संशयो भवतीत्येतावन्मात्रपरम् ।
चकारो व्याप्यसंशयस्य व्यापकसंशयहेतुत्वं समुच्चिनोतीति वदन्ति । विशेषा-
पेक्षः कोटिस्मरणसापेक्षः । वस्तुतस्तु संशयधारावाहिकत्वं स्यादत आह—विशे-
षेति । विशेषं विशेषदर्शनमपेक्षते निवर्तकत्वेन तथा च विशेषदर्शननिवर्त्यत्व-
कथनमुखेन विशेषादर्शनजन्यसंशय इत्युक्तम् ॥ २३ ॥

वृ०—क्रमप्राप्तं प्रयोजनं लक्षयति । अधिकृत्य, उद्दिश्य । तथा च प्रवृत्तिहेत्वि-

---

* अत्रार्थशब्देन गौणमुख्ययोरुभयोरपि ग्रहणं बोध्यम् । तत्र सुखाप्तिदुःखपरिहारौ मुख्यं फलम् । तत्साधनं तु गौणं बोध्यम् ।

---

१ ख. °षु चावि° । २ ग. °भ्यते त° ।

हास्यामि वेति व्यवसायोऽर्थस्याधिकारः । एवं व्यवसीयमानोऽर्थोऽधिक्रियत इति ॥ २४ ॥

लौकिकपरी*क्षकाणां यस्मिन्नर्थे
बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥

भा०—लोकसाम्यमनतीता लौकिका नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्ताः, तद्विपरीताः परीक्षकास्तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति । यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि सोऽर्थो दृष्टान्तः । दृष्टान्तविरोधेन हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्ति । दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीया भवन्तीति । अवयवेषु चोदाहरणाय कल्पन्त + इति ॥ २५ ॥

इति सूत्रवृत्तौ न्यायपूर्वाङ्गप्रकरणम् ॥ ४ ॥

---

च्छाविषयत्वं प्रयोजनत्वम् । विषयत्वं साध्यताख्यविषयताविशेषः । तेन ज्ञानसुखत्वादिवारणम् । प्रवृत्तिहेतुत्विति स्वरूपकथनम् । तक्षकचूडामणिसुमेर्वादिप्राप्तिवारकं तदिति केचित् । अत्र निरुपाधीच्छाविषयत्वात्सुखदुःखाभावयोर्मुख्यप्रयोजनत्वम् । तदुपायस्य तु तदिच्छाधीनेच्छाविषयत्वाद्गौणप्रयोजनत्वम् ॥ २४ ॥

वृ०—क्रमप्राप्तं दृष्टान्तं लक्षयति । लौकिकोऽप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षः । प्रतिपाद्य इति फलितोऽर्थः । परीक्षकः शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः । प्रतिपादक इति फलितोऽर्थः । तथा च प्रतिपाद्यप्रतिपादकयोरिति पर्यवसन्नम् । बहुवचनं कथाबहुत्वमभिप्रेत्य । बुद्धेः साध्यसाधनोभयविषयिण्यास्तदभावविषयिण्या वा साम्यमविरोधो यस्मिन्नर्थे सोऽर्थो दृष्टान्तः । वादिप्रतिवादिनोः साध्यसाधनोभयप्रकारकतदभावद्वयप्रकारकान्यतरनिश्चयविषयो दृष्टान्त इति पर्यवसितोऽर्थः ॥ २५ ॥

इति न्यायपूर्वाङ्गप्रकरणम् ॥ ४ ॥

---

* अत्र लौकिकानां परीक्षकाणां चेति कोटिद्वयस्वीकारादलौकिकस्याऽऽकाशस्यापि दृष्टान्तत्वासिद्धिः । + नन्वयं दृष्टान्तः सारूप्यव्युत्पत्त्यर्थं आहोस्विदसिद्धसाधनार्थः । नाऽऽद्यः । यदि सारूप्यव्युत्पत्त्यर्थस्तर्हि नोपमानाद्भिद्यत इति प्रमाणेऽन्तर्भूतः । नान्त्यः । यद्यसिद्धसाधनार्थस्तर्ह्युदाहरणान्न भिद्यत इति तस्यावयवेऽन्तर्भावो बोध्यः । एवं च पदार्थेषु तन्निर्देशोऽयुक्त इति चेत् । अत्रोच्यते । सारूप्यव्युत्पत्त्यर्थमुपमानं न भवतीति सिद्धान्तान्न तत्रान्तर्भावः । नापि दृष्टान्तेन साधनस्य साध्येन सहाविनाभावोऽसिद्धः साध्यत इति ।

भा०—अथ सिद्धान्तः । * इदमित्थंभूतं चेत्यभ्यनुज्ञायमानमर्थजातं सिद्धं सिद्धस्य संस्थितिः सिद्धान्तः । संस्थिति+रित्थंभावव्यवस्था, धर्मनियमः । स खल्वयम्—

तन्त्राधिकरणाभ्युपगमसं-
स्थितिः ×सिद्धान्तः ॥ २६ ॥

तन्त्रार्थसंस्थितिस्तन्त्रसंस्थितिः । तन्त्रमितरेतराभिसंबद्धस्यार्थसमूहस्योपदेशः शास्त्रम् । अधिकरणानुषक्तार्था संस्थितिर-

---

वृ०—क्रमप्राप्तं सिद्धान्तं लक्षयति । तन्त्रं शास्त्रं तदेवाधिकरणं ज्ञापकतया यस्य तादृशस्य योऽभ्युपगमस्तस्य समीचीनतयाऽसंशयरूपतया स्थितिः । तथा च ÷ शास्त्रितार्थनिश्चयः सिद्धान्तः । अत्र चाभ्युपगम्यमानोऽर्थः सिद्धान्त इति भाष्यम् । अभ्युपगमः सिद्धान्त इति वार्तिकटीका । न चात्र विरोधः शङ्कनीयः । आचार्यैः परिहृतत्वात् । तथा च त्रिसूत्रीनिबन्धः । अर्थाभ्युपगमयोर्गुणप्रधानभावस्य विवक्षातन्त्रत्वादर्थाभ्युपगमोऽभ्युपगम्यमानो वाऽर्थः सिद्धान्तस्तेन सूत्र-

---

* अत्रेदं बोध्यम्—सर्वत्र सूत्रं पठित्वैव तस्य व्याख्यानं क्रियते । अत्र तु पठिष्यमाणं तन्त्राधिकरणेति सूत्रं मनसि निधाय सिद्धान्तस्य व्याख्यानं क्रियत इदमित्थमित्यादिना । + सामान्योपक्रमस्याभ्युपगमस्य प्रमाणतो विशेषपरिसमाप्तिरित्यर्थः । × नन्विदं सूत्रं लक्षणार्थमाहोस्विद्विभागार्थम् । नाऽऽद्यः । लक्षणार्थत्वे हि तन्त्राधिकरणग्रहणं त्यक्त्वा 'अभ्युपगमव्यवस्था सिद्धान्तः' इत्येतावदेव सूत्रं कुर्यात् । नान्त्यः । विभागार्थत्वे सर्वतन्त्रप्रतितन्त्रग्रहणं कर्तव्यं स्यात् । लक्षणार्थं च सूत्रान्तरं वक्तव्यं स्यात् । किं च सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावादिति सूत्रस्यान्योऽर्थो वक्तव्यः स्यात् । न च सर्वतन्त्रेति सूत्रं विभागार्थमिति वाच्यम् । पूर्वसूत्रस्य वैयर्थ्यापत्तेः । न च विभक्तानां पुनर्विभाग इति वाच्यम् । त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरिति व्याहन्येत । पुनर्विभागवचनं नियमार्थमिति चेत् । आद्येन सूत्रेण गतार्थत्वान्न प्रयोजनम् । तस्मात्पूर्वमुत्तरं वा सूत्रमनार्षमिति चेत् । अत्रोच्यते । आद्यं सूत्रं लक्षणार्थमुत्तरं च विभागार्थम् । आद्यस्य लक्षणार्थत्वं कथमिति चेत् । शृणु । तन्त्रं नाम शास्त्रं सूत्रमिति यावत्, अधिकरणं येषामर्थानां भवति ते तन्त्राधिकरणाः । तेषामभ्युपगमः । तस्य संस्थितिरित्थंभावव्यवस्था सिद्धान्तो बोध्यः । एवं च योऽर्थो न सूत्रितस्तस्याभ्युपगमो न सिद्धान्त इति भावः । ÷ सूत्रितार्थनिश्चय इति यावत् ।

---

१ छ. ग. 'षक्तार्था' ।

धिकरणसंस्थितिः । अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहः । तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः ॥ २६ ॥

भा०—तन्त्रभेदात्तु खलु चतुर्विधः—

सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपग-
[१]मसंस्थित्यर्थान्तरभावात् ॥ २७ ॥

तत्रैताश्चतस्रः स्थितयोऽर्थान्तरभूताः ॥ २७ ॥

भा०—तासाम्—

सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः
सर्वतन्त्रसिद्धान्तः ॥ २८ ॥

यथा घ्राणादीनीन्द्रियाणि *गन्धादय इन्द्रियार्थाः पृथिव्यादीनि भूतानि प्रमाणैरर्थस्य ग्रहणमिति+ ॥ २८ ॥

---

भाष्यवार्तिकटीकासु न विरोधः । अत्र च भाष्यानुसारात्सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तान्यतमः सिद्धान्त इति सूत्रार्थ इति तु न युक्तम् । अग्रिमसूत्रानुत्थानापत्तेः । तन्त्रसिद्धान्तत्वेन द्वयमनुगमय्य तन्त्राधिकरणाभ्युपगमान्यतमः सिद्धान्त इति कश्चित् ॥ २६ ॥

वृ०—विभजते । स चतुर्विध इति शेषः । सर्वतन्त्रादिसंस्थितीनामर्थान्तरभावाद्भेदादित्यर्थः ॥ २७ ॥

वृ०—सर्वतन्त्रसिद्धान्तं लक्षयति । सर्वतन्त्राविरुद्धः सर्वशास्त्राभ्युपगत इति बहवः । वस्तुतो यथाश्रुत एवार्थः । अन्यथा तन्त्रेऽधिकृत इत्यस्य वैयर्थ्यापत्तेरत एव जात्यादेरसदुत्तरत्वमपि सर्वतन्त्रसिद्धान्तः । न च तन्त्रेऽधिकृत इति स्पष्टार्थं लक्षणे तु न देयमेवेति वाच्यम् । मनस इन्द्रियत्वस्यापि सर्वतन्त्रसिद्धान्ततापत्तेः । नव्यास्तु सूत्रस्योपलक्षणमात्रत्वाद्वादिप्रतिवाद्युभयाभ्युपगतः कथानुकूलोऽर्थः स इति वदन्ति ॥ २८ ॥

---

* यद्यपि घ्राणादिषु भौतिकत्वं न वेति विप्रतिपत्तिः । तत्र सांख्यादयोऽहंकारादेवेन्द्रियाणामुत्पत्तिं मन्यन्ते । नैयायिकास्तु भौतिकत्वं ब्रुवन्ति । तथाऽपि नेन्द्रियत्वविषये विप्रतिपत्तिरिति घ्राणादीन्द्रियाणीति सर्वतन्त्रसिद्धान्तो बोध्यः । + ननु सर्वतन्त्रसिद्धान्ते दृष्टान्तात्को भेद इति चेत् । उच्यते । दृष्टान्तो हि वादिप्रतिवादिभ्यामेव निश्चितो भवति । न पुनरेवं सर्वतन्त्रसिद्धान्तः । किं च दृष्टान्तोऽनुमानागमयोराश्रयो भवति । नैवं सर्वतन्त्रसिद्धान्त इति बोध्यम् ।

---

१ ख. 'मलक्षण इति । सं' ।

**समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥**

भा०—यथा नासत आत्मलाभः, न सत आत्महानं निरतिशया-श्चेतनाः, देहेन्द्रियमनस्सु विषयेषु च विशेष इति सांख्यानां 'पुरुष-कर्मनिमित्तो भूतसर्गः, कर्महेतवो दोषाः प्रवृत्तिश्च, स्वगुणविशि-ष्टाश्चेतनाः, असदुत्पद्यते, उत्पन्नं निरुध्यत इति योगानाम्॥२९॥

**यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥ ३० ॥**

भा०—यस्यार्थस्य सिद्धावन्येऽर्था अनुषेज्जन्ते न तैर्विना सोऽर्थः सिध्यति तेऽर्था यदधिष्ठानाः सोऽधिकरणसिद्धान्तः, यथा देहेन्द्रियव्यतिरिक्तो ज्ञाता, 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' (३।१।१) इति । अत्रानुषङ्गिणोऽर्था इन्द्रियनानात्वं नियतविषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसा-

---

वृ०—प्रतितन्त्रसिद्धान्तं लक्षयति । समानशब्द एकार्थस्तेनैकतन्त्रसिद्ध इत्यर्थः । स्वतन्त्रसिद्ध इति पर्यवसितोऽर्थः । तथा च वादिप्रतिवाद्येकतरमात्रा-भ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्त इति फलितार्थः । यथा मीमां-सकानां शब्दनित्यत्वम् ॥ २९ ॥

वृ०—अधिकरणसिद्धान्तं लक्षयति । यस्यार्थस्य सिद्धौ जायमानायामेवा-न्यस्य प्रकरणस्य प्रस्तुतस्य सिद्धिर्भवति सोऽधिकरणसिद्धान्त इत्यर्थः । यथा तद्व्यणुकादिकं पक्षीकृत्योपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वे साध्यमाने सर्वज्ञत्वमीश्वरस्य । एवं हेतुबलादपि यथा दर्शनस्पर्शनाभ्यामेकार्थ-ग्रहणादिन्द्रियादिव्यतिरिक्त आत्मनि साधित इन्द्रियनानात्वं तथा च यदर्थ-सिद्धिं विना योऽर्थः शब्दादनुमानाद्वा न सिध्यति सोऽधिकरणसिद्धान्त इति । वस्तुतस्तु शब्दत्वमनुमानत्वं चाविवक्षितं प्रमाणमात्रमपेक्षितम् । अत एव प्रत्यक्षेण स्थूलत्वसाधनानन्तरमुक्तमात्मतत्त्वविवेके सोऽयमधिकरणसिद्धान्त-

---

१ ग. °नां निर्धर्मकाः । य° । २ क. ख. °षज्यन्ते ।

धनानि गन्धादिगुणव्यतिरिक्तं द्रव्यं गुणाधिकरणम्, अनियत-विषयाश्चेतना इति पूर्वार्थसिद्धावेतेऽर्थाः सिध्यन्ति, न तैर्विना सोऽर्थः संभवतीति ॥ ३० ॥

अपरीक्षिताभ्युपगमात्तद्विशेषपरी-
क्षणमभ्युपगमः सिद्धान्तः ॥३१॥

भा०—यत्र किंचिदर्थजातमभ्युपगम्यतेऽस्ति द्रव्यं शब्दः, स तु नित्योऽथानित्य इति द्रव्यस्य सतो नित्यताऽनित्यता वा तद्विशेषः परीक्ष्यते सोऽभ्युपगमसिद्धान्तः स्वबुद्ध्यतिशयचिख्याप-यिषया परबुद्ध्यवज्ञानाच्च प्रवर्तत इति ॥ ३१ ॥

इति न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ॥ ५ ॥

———

न्यायेन स्थूलत्वसिद्धौ क्षणभङ्गभङ्ग इति । तत्र च वाक्यार्थसिद्धौ तदनुषङ्गी यो यः सोऽधिकरणसिद्धान्त इति वार्तिकफक्किकां लिखित्वा येन केनापि प्रकारेण वाक्यार्थसिद्धौ जन्यमानायां योऽन्यार्थः सिध्यति स तथेत्यर्थ इति व्याख्यातं दीधितिकृता । एवं हेतुरीदृशः पक्षश्च वाक्यार्थ इति टीकावचने चोपलक्षणमेतदित्युक्तं तत्र तत्र विशिष्यैव लक्षणं कार्यम् । यत्तु जनकीभूत-व्यापकताज्ञाने व्यापककोटावेव विषयः प्रकृतानुमित्या व्यापककोटौ विषयी-कृतः शाब्दजनकपदार्थज्ञानविषयत्वे सति शाब्दविषयश्चेति द्वयमधिकरणसि-द्धान्त इति तन्न । इन्द्रियनानात्वादौ भाष्याद्युदाहृतेऽव्याप्तेरिति ॥ ३० ॥

वृ०—अभ्युपगमसिद्धान्तं लक्षयति । अपरीक्षितस्य साक्षादसूत्रितस्य विशेष-परीक्षणं विशेषधर्मकथनम् । अभ्युपगमादिति ज्ञापकत्वे पञ्चमी । अभ्युपगम-ज्ञापकमित्यर्थः । विशेषपरीक्षणाज्ज्ञायते सूत्रकृतोऽभ्युपगतमिदमिति । तथा च साक्षादसूत्रिताभ्युपगमोऽभ्युपगमसिद्धान्तः । यथा मनस इन्द्रियत्वमिति ॥३१॥

इति सूत्रवृत्तौ न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ॥ ५ ॥

———

१ क. तेऽस्तु द्र° ।

भा०—अथावयवाः—

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः *॥ ३२ ॥**

दशावयवानेके नैयायिका वाक्ये संचक्षते । जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति । ते कस्मान्नोच्यन्त इति । तत्राप्रतीयमानेऽर्थे + प्रत्ययार्थस्य प्रवर्तिका जिज्ञासा । अप्रतीयमानमर्थं कस्माज्जिज्ञासते । तं तत्त्वतो ज्ञातं हास्यामि वोपादास्य उपेक्षिष्ये वेति । तावता हानोपादानोपेक्षाबुद्धयस्तत्त्वज्ञानस्यार्थस्तदर्थमयं जिज्ञासते सा खल्वियमसाधनमर्थस्येति । जिज्ञासाधिष्ठानं संशयश्च व्याहतधर्मोपसंघातात्[3]तत्त्वज्ञाने प्रत्यासन्नः । व्याहतयोर्हि धर्मयोरन्यतरत्तत्त्वं भवितुमर्हतीति स पृथगुपदिष्टोऽप्यसाधनमर्थस्येति । प्रमातुः प्रमाणानि प्रमेयाधिग-

---

वृ०—क्रमप्राप्तानवयवांल्लक्षयितुं विभजते । अनेन विभागेन प्रतिज्ञाद्यन्यतमत्वमवयवत्वमिति लक्षणं सूचितम् । अत्र च प्रतिज्ञादीनां पञ्चानामवयवत्वकथनाद्दशावयववादो निरस्त इति मन्तव्यम् । ते च यथा दर्शिता भाष्ये जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासश्चेति । एते प्रतिज्ञादिसहिता दश । व्याख्याताश्च ते तात्पर्यटीकायाम् । प्रयोजनं हानादिबुद्धयः । तत्प्रवर्तिका

---

* दशावयवा इति केचिन्नैयायिकाः । प्रतिज्ञाहेतूदाहरणानि—उदाहरणोपनयनिगमनानि वा त्रयोऽवयवा इति वेदान्तिनः । अवयवा नाम ये परप्रतिपादका वाक्ये संभूयेतरेतरप्रत्यायितेनार्थेनार्थवन्तो वाक्याङ्गतामुपयान्ति ते । एवं चावयवत्वं नाम वाक्याङ्गत्वम् । वाक्यं नाम यस्य प्रतिज्ञादिभिरुपस्कृतस्य विशेषरूपापन्नमर्थस्तत् । संहत्यैते वाक्यार्थं निष्पादयन्तीत्यवयवा इत्युच्यन्ते । जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयव्युदासा हि परप्रतिपादका न भवन्त्यतो न वाक्यस्यावयवास्ते । निश्चितत्वाच्च । निश्चितो हि साधयिता भवति । न तस्य जिज्ञासासंशयौ स्तः । प्रयोजनमपि साधनादेव गम्यते शक्यप्राप्तिश्च । न ह्यशक्यमप्रयोजनं वा कश्चित्साधयति । एवं च दशावयवा वा त्रयोऽवयवा इतिमतनिराकरणार्थमिदं सूत्रमिति भावः । + प्रत्ययो नाम वस्तुनस्तत्त्वतो ज्ञानं तस्यार्थो नाम प्रयोजनं हानोपादानोपेक्षाबुद्धयस्तासां प्रवर्तिका जिज्ञासा भवतीति भावः । तदेवाऽऽह—प्रतीयमानमर्थमित्यादि ।

---

१ ग. °सा प्र° । २ ङ. 'मस्ये° । ३ ङ. °तात्क ज्ञा° ।

मोऽर्थानि सा शक्यप्राप्तिर्न साधकस्य वाक्यस्य भागेन युज्यते प्रतिज्ञावदिति। प्रयोजनं तत्त्वावधारणमर्थसाधकस्य वाक्यस्य फलं नैकदेश इति[२]। संशयव्युदासः प्रतिपक्षोपवर्णनम्। तत्प्रतिषेधेन तत्त्वज्ञानाभ्यनुज्ञानार्थं न त्वयं साधकवाक्यैकदेश इति। प्रकरणे तु * जिज्ञासादयः[३] समर्था अवधारणीयार्थोपकारात्[४]। अर्थसाधकभावात्तु प्रतिज्ञादयः साधकवाक्यस्य भागा[५] एकदेशा अवयवा इति ॥ ३२ ॥

भा०—तेषां तु यथाविभक्तानाम्—

साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥

प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य ÷ परिग्रहवचनं प्रतिज्ञा। साध्यनिर्देशोऽनित्यः शब्द इति ॥ ३३ ॥

---

जिज्ञासा तज्जनकः संशयः। शक्यप्राप्तिः प्रमाणानां ज्ञानजननसामर्थ्यम्। संशयव्युदासस्तर्कः। अयमेवार्थो निबन्धे निष्टङ्कितः। जिज्ञासा विप्रतिपत्तिरिति कश्चित्। एतेषां च न न्यायावयवत्वं न्यायाघटत्वात्। न च न्यायजन्यबोधानुकूलत्वेनैवावयवत्वम्। एकदेशस्यापि तत्त्वप्रसङ्गात्प्रयोजनेऽव्याप्तेश्च ॥ ३२ ॥

वृ०—प्रतिज्ञां लक्षयति। साधनीयस्यार्थस्य यो निर्देशः स प्रतिज्ञा। साधनीयश्च वह्निमत्त्वादिना पर्वतादिः। तथा च पर्वतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधकशब्द इत्यर्थः। निगमनवारणाय च साध्यांशे साध्यतावच्छेदकातिरिक्ताप्रकारकत्वं वाच्यम्। तदर्थश्च साध्यतावच्छेदकप्रकारताविलक्षणप्रकारताशून्यत्वं तेन प्रमेयवतः साध्यत्वे नासिद्धिः। उदासीनवाक्यवारणाय च न्यायान्तर्गतत्वे सतीति विशेषणीयम्। न्यायान्तर्गतत्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबोधाजनकत्वे सति प्रकृतपक्षे प्रकृतसाध्यबोधजनकत्वं तत्। प्रतिज्ञात्वावयवत्वादिकं परिभाषाविशेषविषयत्वरूपं तत्तद्व्यक्तित्वरूपं चेत्यपि वदन्ति ॥ ३३ ॥

---

* जिज्ञासादीनन्तरेण प्रकरणस्योत्थानं नास्तीति प्रकरणोत्थापकत्वेन जिज्ञासादयः प्रकरणे समर्था इत्युच्यन्ते न तु वाक्यैकदेशाः। परप्रतिपादकत्वाभावात्। प्रतिज्ञादीनां तु परप्रतिपादकत्वेन वाक्यावयवत्वं बोध्यम्। ÷परिगृह्यतेऽनेनेति परिग्रहः। स च तद्वचनं चेति विग्रहः। सिषाधयिषितस्यार्थस्य वचनमित्यर्थः।

---

१ ग. °मार्थोनिराश°। २ ग. °ति। प्रक°। ३ ग. °यः साधकवा°। ४ क. °काराः। अ°। ख. °कारास्तत्र सा°। ५ क. भाग ए°।

उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ॥ ३४ ॥

भा०—उदाहरणेन सामान्यात्साध्यस्य धर्मस्य साधनं प्रज्ञापनहेतुः साध्ये प्रतिसंधाय धर्ममुदाहरणे च प्रतिसंधाय तस्य साधनतावचनं हेतुः, उत्पत्तिधर्मकत्वादिति । उत्पत्तिधर्मकमनित्यं दृष्टमिति ॥ ३४ ॥

भा०—किमेतावद्धेतुलक्षणमिति नेत्युच्यते किं तर्हि—

तथा वैधर्म्यात् ॥ ३५ ॥

*उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुः । कथम् । अनित्यः शब्द उत्पत्तिधर्मकत्वात् । अनुत्पत्तिधर्मकं नित्यं यथाऽऽत्मादिद्रव्यमिति ॥ ३५ ॥

साध्यसाधर्म्यात्तद्धर्मभावी
दृष्टान्त उदाहरणम् ॥ ३६ ॥

भा०—साध्येन साधर्म्यं समानधर्मता साध्यसाधर्म्यात्कारणात्,

---

वृ०—क्रमप्राप्तं हेतुं लक्षयति विभजते च सूत्राभ्याम् । अत्र साध्यसाधनं हेतुरिति सामान्यलक्षणम् । साध्यसाधनं साध्यसिद्ध्यनुकूलज्ञापकत्वबोधक इत्यर्थः । तथा च साध्यतावच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधकः साध्यान्वितस्वार्थबोधको वाऽवयव इति फलितार्थः । तस्य द्वैविध्यमाह—उदाहरणसाधर्म्यात्तथा वैधर्म्यादिति । साधर्म्यमन्वयः । वैधर्म्यं व्यतिरेकः । तादृशव्याप्तिरिति फलितार्थः । उदाहरणसाधर्म्यमुदाहरणबोध्यान्वयव्याप्तिस्ततोऽन्वयी हेतुर्ज्ञातव्यः । उदाहरणेति स्पष्टार्थम् । तथा च ज्ञातान्वयव्याप्तिकहेतुबोधको हेत्ववयवः । अज्ञातव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयव इति फलितार्थः । एवमप्रतीतान्वयव्यतिरेकव्याप्तिहेतुबोधको हेत्ववयवो व्यतिरेकी हेतुः । इत्थमेव प्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवोऽन्वयव्यतिरेकीत्यपि सूचितमिति वदन्ति ॥ ३४ ॥ ३५ ॥

वृ०—क्रमप्राप्तमुदाहरणं लक्षयति । दृष्टान्त उदाहरणमिति लक्षणम् । दृष्टान्तो

---

* ननु यद्यस्मिन्सूत्रे वैधर्म्यादित्युच्यते तर्हि सकलकेसरादिमत्पदार्थान्पक्षीकृत्याश्वत्वं साध्यते सविशेषणत्वाद्धेतोरित्यत्र पक्षवैधर्म्यमस्तीति हेतुः स्यादित्याशङ्कयाऽऽह—उदाहरणवैधर्म्यादिति । विपक्षेण वैधर्म्यादित्यर्थः ।

---

१ ग. °र्मसा° । २ क. ख. °पनं हे° । ३ ख. धर्मानुदा° । ४ ख. °रणं च । ५ ग. °त्माद्र° ।

तद्धर्मभावी दृष्टान्त इति तस्य धर्मस्तद्धर्मः, तस्य साध्यस्य, साध्यं च द्विविधम्–धर्मिविशिष्टो वा धर्मः, शब्दस्यानित्यत्वम्। धर्मविशिष्टो वा धर्मी, अनित्यः शब्द इति। इहोत्तरं* तद्ग्रहणेन गृह्यत इति। कस्मात्। पृथग्धर्मवचनात् तस्य धर्मस्तद्धर्मस्तस्य भावस्तद्धर्मभावः स यस्मिन्दृष्टान्ते वर्तते स दृष्टान्तः साध्यसाधर्म्यात्तद्धर्मभावी भवति स चोदाहरणमिष्यते×। तत्र यदुत्पद्यते तदुत्पत्तिधर्मकं तच्च भूत्वा न भवति आत्मानं जहाति निरुध्यत इत्यनित्यम्। एवमुत्पत्तिधर्मकत्वं साधनम्, अनित्यत्वं साध्यं सोऽयमेकस्मिन्द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद्व्यवस्थित उपलभ्यते तं दृष्टान्त उपलभमानः शब्देऽप्यनुमिनोति शब्दोऽप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवत्युदाह्रियते तेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम् ॥ ३६ ॥

---

दृष्टान्तवचनं दृष्टान्तकथनयोग्यावयव इत्यर्थः। तेन दृष्टान्तस्य सामयिकत्वेनासार्वत्रिकत्वेऽपि न क्षतिः। योग्यतावच्छेदकं त्ववयवान्तरार्थानन्वितार्थकावयवत्वम्। तच्च द्विविधम्—अन्वयव्यतिरेकिभेदात्। तत्रान्वय्युदाहरणं लक्षयति—साध्यसाधर्म्यात्तद्धर्मभावीति। अन्वय्युदाहरणमिति शेषः। परे तु संपूर्णसूत्रमन्वय्युदाहरणमेव सामान्यलक्षणं तूक्तमित्याहुः। साध्यसाधर्म्यात्साध्यसहचरितधर्मात्मकतसाधनादित्यर्थः। तं साध्यरूपं धर्मं भावयति तथा च साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोऽवयवः साध्यसाधनव्याप्त्युपदर्शकोदाहरणमिति यावत् ॥ ३६ ॥

---

* 'धर्मविशिष्टो वा धर्मी' इत्याकारकं यद्द्वितीयं साध्यमुक्तं तत् 'तद्धर्मभावी' इत्यत्र तच्छब्देन गृह्यत इति भावः। × अत्र साध्यसाधर्म्यग्रहणेन यत्साधनविकलं स्यात्तदुदाहरणं नेति सूचितम्। यथा नित्यः शब्दोऽमूर्तत्वात्परमाणुवदिति। तद्धर्मभावीत्यनेन च साध्यविकलं परास्तम्। यथा नित्यः शब्दोऽमूर्तत्वात्कर्मवदिति। एवं चोभयविकलमपि निरस्तम्। यथा नित्यः शब्दोऽमूर्तत्वाद्घटवदिति। पञ्चम्यन्तोपादानेन च यत्र वचने साध्यसाधर्म्यप्रयुक्तं तद्धर्मभावित्वं प्रदर्श्यते तदेवोदाहरणं नान्यदिति ध्वनितम्। प्रयोजकत्वं च साध्यसाधर्म्यस्य हेतोः स्वाभाविकः संबन्धो व्याप्यत्वं बोध्यम्। प्रयोज्यत्वं च साध्यधर्मस्य व्यापकत्वमेव। तेनाप्रदर्शितान्वयस्य विपरीतप्रदर्शितान्वयस्य च नोदाहरणत्वमिति बोध्यम्। तत्राऽऽद्योदाहरणमनित्यः शब्द उत्पत्तिमत्त्वाद्घटवदिति। अन्त्योदाहरणं तु यो योऽनित्यः स स उत्पत्तिमान्यथा घट इति भावः।

## तद्विपर्ययाद्वा विपरीतम् ॥ ३७ ॥

भा०—दृष्टान्त उदाहरणमिति प्रकृतम् । साध्यवै*धर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणमिति । अनित्यः[२] शब्द[३] उत्पत्तिधर्मकत्वात् । अनुत्पत्तिधर्मकं नित्यमात्मादि सोऽयमात्मादिर्दृष्टान्तः । साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी, योऽसौ साध्यस्य धर्मोऽनित्यत्वं स तस्मिन्न भवतीति । अत्राऽऽत्मादौ दृष्टान्त उत्पत्तिधर्मकत्वस्याभावादनित्यत्वं न भवतीत्युपलभमानः शब्दे विपर्ययमनुमिनोत्युत्पत्तिधर्मकत्वस्य भावादनित्यः शब्द इति । साधर्म्योक्तस्य हेतोः साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् । वैधर्म्योक्तस्य हेतोः साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणम् । पूर्वस्मिन्दृष्टान्ते यौ तौ धर्मौ साध्यसाधनभूतौ पश्यति साध्येऽपि तयोः साध्यसाधनभावमनुमिनोति । उत्तरस्मिन्दृष्टान्ते ययोर्धर्मयोरेकस्याभावादितरस्याभावं पश्यति तयोरेकस्याभावादितरस्याभावं साध्येऽनुमिनोतीति । तदेतद्धेत्वाभासेषु न

---

वृ०—व्यतिरेक्युदाहरणं लक्षयति—तद्विपर्ययात् । साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात् । तथा च साध्यसाधनव्यतिरेकव्याप्त्युपदर्शकोदाहरणं व्यतिरेक्युदाहरणम् । यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् । यन्नैवं तन्नैवं

---

* अयं भावः—सात्मकत्वरूपेण जीवच्छरीरे साध्ये तेन सह घटादेर्दृष्टान्तस्य वैधर्म्यं नाम सात्मकत्वसाधर्म्यविरहादित्यर्थः । अतद्धर्मभावीति । तस्य साध्यस्य जीवच्छरीरस्य धर्मः प्राणादिमत्त्वं तद्धर्मः स एव भावस्तद्धर्मभावः सोऽस्यास्तीति तद्धर्मभावी न तद्धर्मभाव्यतद्धर्मभावी प्राणादिरहितो घटादिरिति यावत् । एवं च यत्र घटादौ साध्यधर्माभावप्रयुक्तसाधनधर्माभावः स घटादिर्वैधर्म्यदृष्टान्तः । तद्विषयः शब्द उदाहरणमिति तात्पर्यम् । वैधर्म्योदाहरणस्य व्यतिरेकविषयत्वात्सूत्रस्थो वाशब्दः समुच्चयार्थको बोध्यः । भाष्यस्थमुदाहरणं त्ववयवव्यतिरेकितया पूर्वेणैव गतार्थमिति केवलव्यतिरेक्युदाहरणमेतद्बोध्यमिति ।

---

१ ख. °यादित° । २ ग. °दिर्द° । ३ ख. °दि द° । ४ ग. °त्वात्तद्ध° । ५ घ. नित्यं स । ६ क. °स्मिन् भ° । ७ ग. °त्वस्य भा° । ८ छ. °व्याप्त्यप° ।

संभवतीत्यहेतवो हेत्वाभासाः। तदिदं हेतूदारणयोः सामर्थ्यं परमसूक्ष्मं दुःखबोधं पण्डितरू*पवेदनीयमिति ॥ ३७ ॥

## उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥

भा०—उदाहरणापेक्ष उदाहरणतन्त्र उदाहरणवशः। वशः सामर्थ्यम्। साध्यसाधर्म्ययुक्त उदाहरणे स्थाल्यादिद्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टं तथा शब्द उत्पत्तिधर्मक इति+ साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते। साध्यवैधर्म्ययुक्ते पुनरुदाहरेण आत्मादिद्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टं न च तथा शब्द इति। अनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते।

---

यथा घट इति। × वाकारः प्रयोगमपेक्ष्य तथा चान्वय्युदाहरणं व्यतिरेक्युदाहरणं वा प्रयोक्तव्यमित्यर्थः ॥ ३७ ॥

वृ०—क्रमप्राप्तमुपनयं लक्षयति। साध्यस्य ÷ पक्षस्य। उदाहरणापेक्ष उदाहरणानुसारी य उपसंहार उपन्यासः। प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्टपक्षविषयकबोधजनको न्यायावयव इत्यर्थः। निगमनं हेतुविशिष्टत्वेन न पक्षबोधकं किं तु पक्षवृत्तिहेतुबोधकमिति तद्व्युदासः। अत्र चान्वयव्यतिरेकव्याप्त्योरन्यतरत्वादिनाऽनुगमः कार्यः। उदाहरणोपदर्शितेति तु परिचायकमात्रमिति तु न वाच्यम्। उदाहरणविपरीतव्याप्त्युपदर्शकोपनयवारकत्वात्। वस्तुतोऽवयवपदेनैव तद्व्युदासः। स चोपनयो द्विविधोऽन्वयव्यतिरेकिभेदात्। तथेति साध्यस्योपसंहारोऽन्वय्युपनयः। न तथेति साध्यस्योपसंहारो व्यतिरे-

---

* प्रशस्ताः पण्डिताः पण्डितरूपास्तैर्वेदनीयमित्यर्थः। + ननु हेतोरुपसंहार एवोपनये कर्तव्यस्तथा च साध्यस्योपसंहार इत्ययुक्तमित्याशङ्क्याऽऽह—साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमिति। उदाहरणसिद्धव्याप्तिकहेतुमत्तया साध्यमुपसंह्रियते न तु स्वरूपेणेति भावः। अत्रोदाहरणापेक्ष उपसंहार उपनय इति सामान्यलक्षणं तथा न तथेति च सामान्यलक्षणापेक्षे विशेषलक्षणे बोध्ये। × वाशब्द इत्यर्थः। ÷ वह्निमत्त्वादिना पक्षः साध्यो भवतीति बोध्यम्।

---

१ क. °ण्डितैर्वं°। २ ख. ग. °रणमात्मा°।

तदिदमुपसंहारद्वैतमुदाहरणद्वैताद्भवति । उपसंह्रियतेऽनेनेति चोपसंहारो वेदितव्य इति ॥ ३८ ॥

भा०—द्विविधस्य पुनर्हेतोर्द्विविधस्य चोदाहरणस्योपसंहारद्वैते च * समानम्—

हेत्वपदेशात्प्रतिज्ञायाः + पुनर्वचनं निगमनम् ॥ ३९ ॥

साधर्म्योक्ते वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम् । निगम्यन्तेऽनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनं, निगम्यन्ते समर्थ्यन्ते संबध्यन्ते । तत्र साधर्म्योक्ते तावद्धेतौ वाक्यम् । अनित्यः शब्द इति प्रतिज्ञा । उत्पत्तिधर्मकत्वादिति हेतुः । उत्पत्तिधर्मकं स्थाल्यादि द्रव्यमनित्यमित्युदाहरणम् । तथा चोत्पत्तिधर्मकः शब्द इत्युपनयः । तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम् । वैधर्म्योक्तेऽपि—अनित्यः शब्द उत्पत्तिधर्मकत्वात् । अनुत्पत्तिधर्मकमात्मादि द्रव्यं नित्यं दृष्टम् । न च तथाऽनुत्पत्तिधर्मकः शब्दः । तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति । अवयवसमुदाये च वाक्ये संभूयेतरेतराभिसंबन्धात्प्रमाणान्यर्थं साधयन्तीति संभवस्तावच्छब्दविषया प्रतिज्ञा । आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसंधानादनृषेश्च स्वातन्त्र्यानुपपत्तेः । अनु-

---

नयुपनयः । अत्र च तथाशब्दप्रयोगावश्यकत्वे न तात्पर्यं किंतु व्याप्तिविशिष्टवत्त्वबोधे । तथा च वह्निव्याप्यधूमवांश्चायमिति वा तथा चायमिति वोपन्यासः । एवं व्यतिरेकिण्यपि वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवांश्चायमिति वा न तथेति वोपन्यासः ॥ ३८ ॥

वृ०—निगमनं लक्षयति । हेतोर्व्याप्तिविशिष्टपक्षधर्मस्य । अपदेशः कथनम् । प्रतिज्ञायाः प्रतिज्ञार्थस्य साध्यविशिष्टपक्षस्य वचनं निगमनम् । तथा च व्याप्ति-

---

* उपसंहारद्वैते सत्यपि समानमेव निगमनं भवतीति भावः । + ननु साध्यनिर्देशः प्रतिज्ञा सिद्धस्य निर्देशो निगमनमिति प्रतिज्ञानिगमनयोर्भेदे प्रसिद्धे सति पुनर्वचनमिति नोपपद्यत इति चेत् । अत्रोच्यते । यस्यैव प्रतिज्ञायां साध्यत्वमासीत्तस्यैव निगमने सिद्धत्वमित्यवस्थावन्तमेकमाश्रित्य समानविषयतया निगमनं प्रतिज्ञेत्युपचर्यते । तथा च पुनर्वचनमित्युपपन्नं भवतीति भावः ।

मानं हेतुः। उदाहरणे संशयप्रतिपत्तेः। तथोदाहरणं भाष्ये व्याख्यातम्। प्रत्यक्षविषयमुदाहरणं दृष्टेनादृष्टसिद्धेः। उपमानमुपनयस्तथेत्युपसंहारात्। न च तथेत्युपमानधर्मप्रतिषेधे विपरीतधर्मोपसंहारसिद्धेः। सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं निगमनमिति। इतरेतराभिसंबन्धोऽप्यसत्यां प्रतिज्ञायामनाश्रया हेत्वादयो न प्रवर्तेरन्। असति हेतौ कस्य साधनभावः प्रदर्श्येत। उदाहरणे साध्ये च कस्योपसंहारः स्यात्। कस्य चापदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनं स्यादिति। असत्युदाहरणे केन साधर्म्यं वैधर्म्यं वा साध्यसाधनमुपादीयेत। कस्य वा साधर्म्यवशादुपसंहारः प्रवर्तेत। उपनयनं चान्तरेण साध्येऽनुपसंहृतः साधको धर्मो नार्थं साधयेत्। निगमनाभावे चानभिव्यक्तसंबन्धानां प्रतिज्ञादीनामेकार्थेन प्रवर्तनं तथेति प्रतिपादनं कस्येति।
अथावयवार्थः—साध्यस्य धर्मस्य धर्मिणा संबन्धोपादानं प्रतिज्ञार्थः। उदाहरणेन समानस्य विपरीतस्य वा धर्मस्य साधकभाववचनं हेत्वर्थः। धर्मयोः साध्यसाधनभावप्रदर्शनमेकत्रोदाहरणार्थः। साधनभूतस्य धर्मस्य साध्येन धर्मेण सामानाधिकरण्योपपादानमुपनयार्थः। उदाहरणस्थयोर्धर्मयोः साध्यसाधनभावोपपत्तौ साध्ये *विपरीतप्रसङ्गप्रतिषेधार्थं निगमनम्। न चैतस्यां हेतूदारणपरिशुद्धौ सत्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिनिग्रहस्थानबहुत्वं प्रक्रमते। अव्यवस्थाप्य खलु साध्यसाधनभावमुदाहरणे जातिवादी प्रत्यवतिष्ठते। व्यवस्थिते तु खलु धर्मयोः साध्यसाधनभावे दृष्टान्तस्थे गृह्यमाणे

---

* निगमनाभावे हि साधने प्रतिपक्षे वा साध्यविपरीतप्रसङ्गः स्यादिति सोऽयं प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणमूलावयवोपपत्तौ सत्यां प्रतिज्ञेयार्थस्य सिद्धतया पुनर्वचनेन निगमनेन प्रतिबध्यते। न च प्रतिज्ञावचनादेव तत्सिद्धमिति वाच्यम्। प्रतिज्ञावचनस्य साध्यपरत्वात्। न च तस्याः साध्यपरत्वेऽप्याक्षेपात्सिद्धिरिति वक्तव्यम्। हेत्वादिप्रयोगवैयर्थ्यप्रसङ्गात्। प्रतिज्ञात एव सर्वेषामाक्षेपात्। तस्माद्रूपद्वयप्रतिपादनार्थं निगमनं बोध्यम्।

---

१ क. °माने हे°। ख. °मानहे°। २ ङ. °थेति चोप°। ३ ग. °त्तौ सामर्थ्यप्रतिपत्तौ सा°। ४ ख. °र्शने नि°। ५ ग. °नं वाऽन्त°। ६ क. ग. °वे वाऽन°। ७ ग. °स्थानं ब°।

साधनभूतस्य धर्मस्य हेतुत्वेनोपादानं न साधर्म्यमात्रस्य वैधर्म्य-मात्रस्य वेति ॥ ३९ ॥

इति न्यायस्वरूपप्रकरणम् ॥ ६ ॥

---

भा०—अत ऊर्ध्वं तर्को लक्षणीय इति अथेदमुच्यते—

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तित-
स्तत्त्वज्ञानार्थमूहः*स्तर्कः ॥ ४० ॥

अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते जानीयेममर्थ-मिति । अथ जिज्ञासितस्य वस्तुनो[2] व्याहृतौ[3] धर्मौ विभागेन

---

विशिष्टपक्षधर्महेतुकथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः । व्याप्तपक्षधर्महेतुज्ञाप्यसाध्यविशिष्टपक्षबोधकस्तादृशसाध्यबोधको वा न्यायावयवो निगमनमिति । अस्य त्वन्वयिव्यतिरेकिभेदान्न भेद इत्याशयः । व्यतिरेकिणि तु तस्मान्न तथेत्येवाऽऽकार इत्यपरे ॥ ३९ ॥

इति न्यायस्वरूपप्रकरणम् ॥ ६ ॥

---

वृ०—क्रमप्राप्तं तर्कं लक्षयति । तर्क इति लक्ष्यनिर्देशः । कारणोपपत्तित ऊह इति लक्षणम् । अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनं कारणं व्याप्यं

---

* यद्यत्रोहस्तर्क इति तत्त्वज्ञानार्थमूहस्तर्क इति वोच्येत तर्हि विज्ञाततत्त्वेऽपि पुनस्तत्त्वज्ञानार्थं यदा पूर्वानुभवपरिच्छेदात्मोहो जायते सोऽपि तर्कः स्यादतोऽविज्ञाततत्त्व इति वक्तव्यम् । ननु कारणोपपत्तित इत्येतस्मादप्ययमर्थो गम्यत एवेति चेन्न । कारणोपपत्तेरेवंरूपत्वं नाविज्ञाततत्त्वमन्तरेण संभवति । तथा हि—अधिगतपरिच्छेदात्माऽप्यूहः कारणस्योपपत्त्यसंभवेन जायते । कारणासंभवे कार्यस्यासंभवात् । न त्वसावविज्ञाततत्त्व इति ततो व्यवच्छेदः । तथा च सति प्रमाणमपि तर्कः स्यादत उक्तं कारणोपपत्तित इति । उक्ते सति प्रयोजनानुसरणं न त्विह लाघवादरः सूत्रकारस्येति भावः ।

---

१ ङ. यस्तर्क इ° । २ ख. °नो ध° । ३ क. व्याहतौ ।

विमृशति * किंस्विदित्थमाहोस्विन्नेत्थमिति । विमृश्यमानयोर्धर्मयोरेकं कारणोपपत्त्याऽनुजानाति संभवत्यस्मिन्कारणं प्रमाणं हेतुरिति । कारणोपपत्त्या + स्यादेवमेतन्नेतरदिति । तत्र निदर्शनं योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते तं च भो जानीयेति जिज्ञासा । स किमुत्पत्तिधर्मकोऽनुत्पत्तिधर्मक इति विमर्शः । विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति । यद्ययमनुत्पत्तिधर्मकस्ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणम्, उत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्यातां संसारापवर्गौ । उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम् । उत्पन्नः खलु ज्ञाता देहेन्द्रियबुद्धिवेदनाभिः संबध्यत इति नास्येदं स्वकृतस्य कर्मणः फलम् । उत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति, तदेवमेकस्यानेकशरीरयोगः शरीरवियोगश्चात्यन्तं न स्यादिति ।

---

तस्योपपत्तिरारोपस्तस्मादूह आरोपोऽर्थाद्व्यापकस्य । तथा च व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्याऽऽहार्यारोपाद्यो व्यापकस्याऽऽहार्यारोपः स तर्कः ।

---

* यद्यपि संशयस्य पश्चादेव जिज्ञासा जायते तथाऽपि जिज्ञासायाः पश्चादपि संशयो भवति स एवात्र विवक्षितः । तर्कप्रवृत्त्यङ्गत्वात् । तर्केण हि प्रसङ्गापरनाम्ना द्वयोः पक्षयोरेकतरनिषेधेनैकतरः प्रमाणविषयतयाऽभ्यनुज्ञातव्य इति विषयप्रत्यासत्त्या तर्कप्रवृत्तिं प्रत्यङ्गता संशयस्येति बोध्यम् । + अत्रेदं बोध्यम्—कारणोपपत्तिर्नाम कारणसंभवः । अनुज्ञा ह्येवमेतन्नेतरदित्याकारिका तथा च यस्मिन्विषये प्रमाणं प्रवर्तितुमुद्यतं भवति तद्विपर्ययाशङ्कायां न तत्प्रवर्तते यावदनिष्टापत्त्या विपर्ययशङ्का नापनीयते । तदपनये च सति प्रमाणस्य स्वविषये संभवो भवति । अत उपपत्तिरित्याख्यायते । तया च प्रमाणस्य विषये विशोधिते सति प्रमाणं निष्प्रत्यूहं प्रवर्तते । न चोपपत्तिरेव निश्चयहेतुरस्तु कृतं प्रमाणेनेति वाच्यम् । स्वतन्त्राया उपपत्तेराश्रयासिद्धत्वेन स्वतो निश्चयायोगादिति ।

---

१ ख. °दित्यमा° । ग. °दित्येवमा° । २ ग. °स्विदित्यमि° । ३ ख. °न्नेदमि° । ४ ग. °त्त्या तु जा° । ५ ख. तं तत्त्वतो जा° । ६ ग. °मुत्पद्य° । ७ ख. °श्च मूला न । ८ ग. °त्वा भू° । ९ ग. °ति य° १० ख. °योगाः श° ।

यत्र कारणमनुपपद्यमानं पश्यति तन्नानुजानाति । सोऽयमेवं-
लक्षण ऊहस्तर्क इत्युच्यते । कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्व-
ज्ञानमेवेति । अनवधारणात् । अनुजानात्ययमेकतरं धर्मं कारणो-
पपत्त्या न त्ववधारयति, न व्यवस्यति, न निश्चिनोति, एवमेवेद-
मिति । कथं तत्त्वज्ञानार्थ इति । तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणो-
नुग्रहोद्भावि*तात्प्रसन्नादनन्तरं प्रमाणसामर्थ्यात्तत्त्वज्ञानमुत्पद्यत
इत्येव तत्त्वज्ञानार्थ इति । सोऽयं तर्कः प्रमाणानि प्रतिसं-

---

यथा निर्वह्नित्वारोपान्निर्धूमत्वारोपो निर्वह्निः स्यान्निर्धूमः स्यादित्यादि । ह्रदो
निर्वह्निः स्यान्निर्धूमः स्यादित्यादिवारणाय व्यापकाभाववत्त्वेन निर्णीत इति ।
निर्वह्निः स्यादद्रव्यं स्यादित्यादिवारणाय व्याप्यस्येति । तद्व्याप्यारोपाधीन-
स्तदारोप इत्यर्थलाभाय व्यापकेति । न चानुमानादितोऽर्थसिद्धेस्तर्को व्यर्थ
इति वाच्यम् । अप्रयोजकत्वादिशङ्काकलङ्कितेन हेतुनाऽर्थस्य साधयितुमश-
क्यत्वात्तदेतदुक्तमविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति तत्त्वनिर्णयार्थमित्यर्थः । यत्र
नाप्रयोजकत्वाद्याशङ्का तत्र नापेक्ष एवेति भावः । परे तूह इत्येव लक्षणम् ।
ऊहत्वं च मानसत्वव्याप्यो जातिविशेषस्तर्कयामीत्यनुभवसिद्धः । तर्कः किं
स्वत एव निर्णायकः परम्परया वेत्यत आह -कारणेति । कारणस्य व्याप्तिज्ञाना-
देरुपपादनद्वारेत्यर्थः । तथा च धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न
स्यादित्यनेन व्यभिचारशङ्कानिरासे निरङ्कुशेन व्याप्तिज्ञानेनानुमितिरिति पर-
म्परयैवास्योपयोग इत्याहुः । स चायं पञ्चविधः । आत्माश्रयान्योन्याश्रयचक्र-
कानवस्थातदन्यबाधितार्थप्रसङ्गभेदात् । स्वस्य स्वापेक्षित्वेऽनिष्टप्रसङ्ग आत्मा-
श्रयः । स चोत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा । यथा यद्ययं घट एतद्घटजन्यः
स्यात्तदैतद्घटानधिकरणक्षणोत्तरवर्ती न स्यात् । यद्ययं घट एतद्घटवृत्तिः
स्यादेतद्घटव्याप्यो न स्यात् । यद्ययं घट एतद्घटज्ञानाभिन्नः स्याज्ज्ञानसा-
मग्रीजन्यः स्यादेतद्घटभिन्नः स्यादिति वा सर्वत्राऽऽपाद्यम् । तदपे-
क्ष्यापेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गोऽन्योन्याश्रयः । सोऽपि पूर्ववत्त्रेधा । तदपे-

---

* उद्भावितान्नाम चिन्तितादित्यर्थः । प्रसन्नादित्यस्याबाधितादित्यर्थः । प्रमाणसाम-
र्थ्यादित्यनेन हि तत्त्वज्ञानविषये तर्कस्य स्वातन्त्र्यं नेति सूचयति ।

---

१ ख. घ. णादूहाद्भा° । २ क. ग. च. °न्तरप्र° ।

दधानः प्रमाणाभ्यनुज्ञानात्प्रमाणसहितो वाद उपदिष्ट इत्यविज्ञाततत्त्वमनुजानाति यथा सोऽर्थो भवति तस्य यथाभावस्तत्त्वमविपर्ययो याथातथ्यम् ॥ ४० ॥

भा०—एतस्मिंश्च तर्कविषये—

**विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ ४१ ॥**

स्थापना साधनम्। प्रतिषेध उपालम्भः। तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ व्यतिषक्तानुबन्धेन प्रवर्तमानौ पक्षप्रतिपक्षावित्युच्येते। तयोरन्यतरस्य निवृत्तिरेकतरस्यावस्थानमवश्यंभावि। यस्यावस्थानं[3] तस्यावधारणं निर्णयः। नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं संभवतीति। * एको हि प्रतिज्ञातमर्थं हेतुतः

---

स्यापेक्ष्यपेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गश्चक्रकम्। चतुष्कक्षादावपि स्वस्य स्वापेक्ष्यापेक्ष्यपेक्षित्वसत्त्वाभाऽऽधिक्यम्। अस्यापि पूर्ववत्त्रैविध्यम्। अव्यवस्थितपरम्परारोपाधीनानिष्टप्रसङ्गोऽनवस्था। यथा यदि 'घटत्वं घटजन्यत्वव्याप्यं स्यात्कपालसमवेतत्वव्याप्यं न स्यात्। तदन्यबाधितार्थप्रसङ्गस्तु धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादिः। प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवगौरवादिकं तु प्रसङ्गानात्मकत्वान्न तर्कः किंतु प्रमाणसहकारित्वरूपसाधर्म्यात्तथा व्यवहार इति संक्षेपः ॥ ४० ॥

वृ०—क्रमप्राप्तं निर्णयं लक्षयति—विमृश्य संदिह्य। पक्षप्रतिपक्षाभ्यां साध-

---

*एको हीत्यादि निर्णय इत्यन्तं नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं संभवतीत्यस्योपपादनं बोध्यम्। तस्यायमर्थः—एको नाम वादी प्रतिज्ञातमर्थं हेतुतः स्थापयति। प्रतिषिद्धं नाम वाद्युक्तस्य हेतोर्यत्प्रतिवादिना दूषणमुक्तं तत्। उद्धरति नाम दूषणाभासी करोतीत्यर्थः। द्वितीयस्य नाम वादिनः। द्वितीयेन नाम प्रतिवादिना। स्थापनाहेतुः प्रतिषिध्यते नाम वाद्युक्तस्य हेतोः स्थापनाहेतुत्वं निषिध्यते। तस्यैव नाम वादिनः। प्रतिषेधहेतुर्नाम प्रतिवाद्युक्तदूषणप्रतिषेधहेतुरित्यर्थः। उद्ध्रियते नाम प्रतिवादिना निषिध्यते। स निवर्तते नाम वाद्युक्तहेतुः प्रतिवाद्युक्तदूषणस्य यो वाद्युक्तप्रतिषेधहेतुः स च निवर्तत इत्यर्थः। तस्मिन्निवृत्ते योऽवतिष्ठत एकस्तेनार्थनिर्णयो भवति। तस्मात्पक्षप्रतिपक्षावित्ययुक्तम्। न हि संशयविषये निर्णये वादिप्रतिवादिनौ स्तः। अपि तु निश्चितयोरेव तयोः प्रवृत्तिरिति।

---

१ ग. ङ. वादे प्रादि°। २ ख. 'वित्वावस्या°। ग. ङ. °पि तस्या°। ३ ग. स्थापनं।

स्थापयति प्रतिषिद्धं चोद्धरतीति[1]। द्वितीयस्य द्वितीयेन स्थापनाहेतुः प्रतिषिध्यते तस्यैव प्रतिषेधहेतुश्चोद्ध्रियते स निवर्तते तस्य निवृत्तौ योऽवतिष्ठते तेनार्थावधारणं निर्णय इति उभा*भ्यामेवार्थावधारणमित्याह । कथा युक्त्यैकस्य संभवो द्वितीयस्यासंभवः । तावेतौ संभवासंभवौ विमर्शं सह निवर्तयत उभयसंभवे + । उभयासंभवे त्वनिवृत्तौ विमर्श इति । विमृश्येति विमर्शं कृत्वा । सोऽयं विमर्शः पक्षप्रतिपक्षाववद्योत्य न्यायं प्रवर्तयतीत्युपादीयत इति । तच्च विरुद्धयोरेकधर्मिस्थयोर्बोद्धव्यम् । यत्र तु धर्मिसामान्यगतौ विरुद्धौ धर्मौ हेतुतः संभवतस्तत्र समुच्चयः । हेतुतोऽर्थस्य तथाभावोपपत्तेः[2] । यथा क्रियावद्द्रव्यमिति लक्षणवचने यस्य द्रव्यस्य क्रियायोगो[3] हेतुतः संभवति तत्क्रियावत् । यस्य न संभवति तदक्रियमिति । एकधर्मिस्थयोश्च विरुद्धयोर्धर्मयोरयुगपद्भाविनोः कालविकल्पः । यथा तदेव द्रव्यं क्रियायुक्तं क्रियावत्, अनुत्पन्नोपरतक्रियं पुनराक्रियमिति । नचायं निर्णये नियमो विमृश्यैव[4] पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति किंत्विन्द्रियार्थसंनिकर्षोत्पन्नप्र-

---

नोपलम्भाभ्याम् । उपालम्भः परपक्षदूषणम् । अर्थस्यावधारणं तदभावाप्रकारकं तत्प्रकारकं ज्ञानम् । यद्यप्येतावदेव निर्णयसामान्यलक्षणं तथाऽपि विमृश्येत्यादिकं जल्पवितण्डास्थलीयनिर्णयमधिकृत्य तदुक्तं भाष्ये शास्त्रे वादे च

---

* अभ्युपेत्यवादेन परिहरति—उभाभ्यामिति । वादिनः साधनस्य संभवः प्रतिवादिन उपालम्भस्यासंभवः । ताभ्याम् । तथा प्रतिवादिनः साधनस्य संभवो वादिन उपालम्भस्यासंभवस्ताभ्यामित्यर्थः । अयं भाव—एकस्मिन्विषये द्वयोरवधारणं प्रत्यहेतुत्वेऽपि विषयभेदेन द्वयोरवधारणं प्रति हेतुत्वं नानुपपन्नमिति । अवद्योत्य नामानियमेन विषयीकृत्येत्यर्थः । + एतच्च निवर्तयत इत्यनेन सहान्वेति । विषयभेदेनोभयसंभव इत्यर्थः । उभयासंभवे त्वनिवृत्तो विमर्श इति । एकस्मिन्विषये द्वयोरसंभवे विमर्शो निवृत्तो न भवतीत्यर्थः । अयं भावः—साधनमात्रनिर्देशे प्रतिवाद्युक्तदूषणानुद्धरणेन सत्प्रतिपक्षितत्वाद्दूषणानुद्भावनेऽपि दूषणसंभावनामात्रेणापि संशयावस्थितिसंभवात् । परीक्षायाः संशयपूर्वकत्वेन संशयकारणतयोपस्थितकोटिद्वयमध्य एकतरकोटेरबाधने प्रतिज्ञामात्रेण संशयानिवृत्तेरसंभवादिति ।

---

१ ग. °ति । द्वितीये° । २ ग. तत्त्वाभा° । ३ ख. °क्रियाव° । ४ ग. °मृश्य प° ।

त्यक्षेऽर्थावधारणं निर्णय इति । परीक्षाविषये तु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः । शास्त्रे * वादे च विमर्शवर्जम् ॥ ४१ ॥

इति न्यायोत्तराङ्गप्रकरणम् ॥ ७ ॥

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य प्रथममाह्निकम् ॥ १ ॥

---

भा०—तिस्रः + कथा भवन्ति वादो जल्पो वितण्डा चेति । तासाम्—

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥**

एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावादस्त्यात्मा नास्त्यात्मेति । नानाधिकरणौ विरुद्धौ न पक्षप्रति-

---

विमर्शवर्जमिति । एवं प्रत्यक्षतः शब्दाच्च निर्णये न विमर्शपक्षप्रतिपक्षापेक्षेति ॥ ४१ ॥

इति न्यायोत्तराङ्गप्रकरणम् ॥ ७ ॥

इति श्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ प्रथमाध्यायस्य प्रथमाह्निकम् ॥ १ ॥

---

वृ०—प्रथमाह्निकेन सपरिकरे न्याये लक्षिते वादादिलक्षणाय द्वितीयाह्नि-

---

* शास्त्रमत्र वेदशास्त्रयोरुभयोरपि बोधकम् । वादस्तु प्रमाणतर्कसाधनेत्यादिना सूत्रेणोक्तः कथाविशेषः । तत्र विमर्शवर्जं निर्णयलक्षणं बोध्यम् । विमर्शो नाम संशयः । न ह्यागमेन ज्योतिष्टोमादीनां निर्णये कर्तव्ये विमर्शोऽस्ति । शास्त्रस्योदाहरणं तु द्वितीयाध्याये वृत्तौ स्पष्टम् । नापि वादजल्पवितण्डासु विमर्शः । निश्चितयोरेव वादिप्रतिवादिनोस्तत्र प्रवृत्तेरिति भावः । + नानाप्रवक्तृकत्वे सति तद्विचारवस्तुविषया वाक्यसंदृब्धिः कथा । तस्यां कथायां तिस्र एवेत्ययं नियमः । एतच्च पक्षप्रतिपक्षपरिग्रह इति सूत्रावयवेन सूचितम् । तत्र गुर्वादिभिः सह वादः । विजिगीषुणा सह जल्पवितण्डे इति बोध्यम् ।

पक्षौ यथा नित्य आत्माऽनित्या बुद्धिरिति । परिग्रहोऽभ्युपगम-व्यवस्था । सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः । तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भः । प्रमाणैस्तर्केण च साधनमुपालम्भ-

---

कारम्भः । छलपरीक्षा च प्रसङ्गाद्भविष्यति । तथा च च्छलपरीक्षासहितवादा-दिलक्षणं द्वितीयाह्निकार्थः । तत्र चत्वारि प्रकरणानि—आदौ कथाप्रकरणं ततो हेत्वाभासप्रकरणं छलप्रकरणं दोषलक्षणप्रकरणं चेति । अत्र कथासामा-न्यस्यायं विशेषो वादादिस्तथा च त्रिभिः सूत्रैरेकं कथाप्रकरणम् । अन्यथैं-कसूत्रस्य प्रकरणभावाभावादसंगतिः स्यादित्याशयेनोक्तं भाष्यकृता—तिस्रः खलु कथा भवन्ति वादो जल्पो वितण्डा चेति । तत्र तत्त्वनिर्णयविजयान्यत-रस्वरूपयोग्यो न्यायानुगतवचनसंदर्भः कथा । लौकिकविवादवारणाय न्यायें-त्यादि । यत्रैकेन न्यायः प्रयुक्तोऽपरेण तु मतपरिग्रहोऽपि न कृतस्तद्वारणायाऽऽद्यं विशेषणमिति । कथाधिकारिणस्तु तत्त्वनिर्णयविजयान्यतराभिलाषिणः सर्व-जनसिद्धानुभवानपलापिनः श्रवणादिपटवोऽकलहकारिणः कथौपयिकव्यापार-समर्था इति ।

तत्र वादं लक्षयति । अत्र च वाद इति लक्ष्यनिर्देशः । पक्षप्रतिपक्षौ विप्रतिपत्तिकोटी तयोः परिग्रहस्तत्साधनोद्देश्यकोक्तिप्रत्युक्तिरूपवचनसंदर्भः । तावन्मात्रं च कथान्तरसाधारणमत आह—प्रमाणेत्यादि । प्रमाणतर्काभ्यां तद्रू-पेण ज्ञाताभ्यां साधनोपालम्भौ यत्र स तथा । उभयत्रापि प्रमाणादिसद्भावे कोटिद्वयस्यापि सिद्धिः स्यादतस्तद्रूपेण ज्ञाताभ्यामिति । ज्ञानमनाहार्यं विवक्षि-तम् । उपालम्भो दूषणम् । जल्पादौ तु प्रमाणाभासत्वादिना ज्ञाताभ्यामपि साधनोपलम्भौ भवत इति तद्वारणं तथा । इतरथा तु तद्धेतोरेव दुष्टत्वम् । इत्थं च प्रमाणाभासत्वप्रकारकज्ञानविषयकरणकसाधनोपलम्भयोग्यान्यत्वे सतीत्यर्थः । तेन तादृशजल्पाविषये नातिव्याप्तिः । तत्र च निग्रहस्थानविशेषनियमार्थं सिद्धान्तेत्यादिविशेषणद्वयम् । अन्ये तु तदपि लक्षणघटकमेव तदर्थश्च तावन्मा-त्रनिग्रहस्थानयोग्यत्वं तावदतिरिक्तानिग्रहस्थानोपन्यासायोग्यत्वं वा निग्रहस्थानं प्रतिज्ञाहान्यादीनामेकैकं धृत्वा तदुपन्यासायोग्यत्वमिति निष्कर्षः । तेनोक्तज-ल्पविशेषवारणमित्याहुः । सिद्धान्ताविरुद्ध इत्यनेनापसिद्धान्तोद्भावनम् । पञ्चावयवोपपन्न इत्यनेन न्यूनाधिकोद्भावने, अवयवाभासस्य दृष्टान्तासिद्ध्या-देश्चोद्भावनम् । प्रमाणेत्यनेन च प्रमाणाभासत्वेन हेत्वाभासानां तर्काभासस्य चोपन्यासो नियम्यते । तथा चात्र हेत्वाभासन्यूनाधिकापसिद्धान्तरूपनिग्रह-

अस्मिन्निति*यत इति । साधनं स्थापना । उपालम्भः प्रतिषेधः । तौ साधनोपालम्भावुभयोरपि पक्षयोर्व्यतिषक्तावनुबद्धौ च । यावदेको निवृत्त एकतरो व्यवस्थित इति निवृत्तस्योपालम्भो व्यवस्थितस्य साधनमिति । जल्पे निग्रहस्थानविनियोगाद्वादे तत्प्रतिषेधः । प्रतिषेधे कस्यचिदभ्यनुज्ञानार्थं सिद्धान्ताविरुद्ध इति वचनम् । 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः' ( १ । २ । ४७ ) इति हेत्वाभासस्य निग्रहस्थानस्याभ्यनुज्ञावादे । पञ्चावयवोपपन्न इति 'हीनमन्यतमेनाप्यवयवेन न्यूनम्' ( ५ । २ । १२ ) 'हेतूदाहरणाधिकमधिकम्' ( ५ । २ । १३ ) इति चैतयोरभ्यनुज्ञा+नार्थमिति । अवयवेषु प्रमाणतर्कान्तर्भावे पृथक् प्रमाणतर्कग्रहणं साधनोपालम्भव्यति=षङ्गज्ञापनार्थम् । अन्यथोभावपि पक्षौ स्थापनाहेतुना प्रवृत्तौ वाद इति स्यात् । अन्तरेणाप्यवयवसंबन्धं प्रमाणान्यर्थं साधयन्तीति दृष्टं तेनापि कल्पेन

---

स्थानचतुष्टयोद्भावनमिति वदन्ति । वस्तुतस्तु वादस्य वीतरागकथात्वेन तत्त्वनिर्णयस्योद्देश्यतया पुरुषदोषस्याविज्ञातार्थादेरिव न्यूनाधिकयोरपि नोद्भावनमुचितम् । अत एव पञ्चावयवावश्यकत्वमपि भाष्यकारो नानुमेने । हेत्वाभासाद्युद्भावनेनापि च तदैव कथाविच्छेदो यदि हेत्वन्तरेणापि साधयितुं न शक्यते । इतरथा तु तद्धेतोरेव दुष्टत्वम् । इत्थं च पञ्चावयवोपपन्न

---

* एतद्विशेषणेन न जल्पवितण्डयोर्वादलक्षणातिव्याप्तिः । यत्र प्रमाणैरेव साधनं तर्कैरेव च यत्रोपालम्भ इति तदर्थः । जल्पे वितण्डायां च तत्त्वनिर्णयस्यानपेक्षितत्वेन च्छलादिनाऽपि स्वपक्षस्थापनं परपक्षप्रतिषेधो वा कर्तुं शक्यत इति न तत्रातिव्याप्तिरिति भावः । + वादे निग्रहस्थानानां प्रतिषेधेऽपि विरुद्धस्य हेत्वाभासस्य न्यूनाधिकयोश्चोद्भावनानुमतिप्रदर्शनार्थं सिद्धान्ताविरुद्ध इति पञ्चावयवोपपन्न इति च विशेषणे बोध्ये । हेत्वाभासानां न्यूनाधिकयोश्च निग्रहस्थानान्तर्गतत्वादिति भावः । = प्रमाणानां तदनुग्राहकत्वेन तर्कस्य चावयवेष्वन्तर्भावात्पञ्चावयवोपपन्न इत्यनेनैव प्रमाणतर्कसाधनोपालम्भत्वलाभे सिद्धे पुनरुपादानं प्रमाणैः साधनमेव कार्यं तर्केणोपालम्भ एव कार्य इति बोधनार्थमिति भावः ।

---

१ क. °योगात्वादे° । २ क. ग. °वादे° ।

साधनोपालम्भौ वादे भवत इति ज्ञापयिष्यति* । 'छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः' ( १ । २ । ४३ ) इति वचनाद्विनिग्रहो जल्प इति मा विज्ञायि । छलजातिनिग्रहस्थानसाधनोपालम्भ एव जल्पः । प्रमाणतर्कसाधनोपालम्भो वाद एवेति मा विज्ञा+यीत्येवमर्थं पृथक् प्रमाणतर्कग्रहणमिति ॥ १ ॥

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ २ ॥**

भा०—यथोक्तोपपन्न इति प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः । छलजातिनिग्रहस्थानसाधनोपालम्भ इति च्छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन्क्रियत इति । एवंविशेषणो जल्पः× । न खलु वै

---

इति प्रायिकत्वाभिप्रायेणेति तत्त्वम् । वादाधिकारिणस्तु तत्त्वबुभुत्सवः प्रकृतोक्तिका अविप्रलम्भका यथाकालस्फूर्तिका अनाक्षेपका युक्तिसिद्धप्रत्येतारः । अनुविधेयस्थेयःसभ्यपुरुषवती जनता सभा । अनुविधेयो राजादिः स्थेयान्मध्यस्थः । सा च वादे नाऽऽवश्यकी वीतरागकथात्वादिति ॥ १ ॥

वृ०—जल्पं लक्षयति । यथोक्तेषु यदुपपन्नं तेनोपपन्न इत्यर्थः । मध्यमपदलोपी समासः । तथा च प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रह इत्यस्य योग्यतया परामर्शः । अन्यथा जल्पस्य वादविशेषत्वापत्तिः । प्रमाणतर्काभ्यां

---

* पञ्चावयववाक्यप्रयोगाभावेऽपि प्रत्यक्षादिप्रमाणानामर्थसाधकत्वस्य दृष्टतया तयाऽपि रीत्या वादे साधनं भवतीति तात्पर्यम् । + अयं भावः—प्रमाणतर्कग्रहणाभावे कल्पनाद्वयं स्यात् । तथा हि वादलक्षणे छलादीनामनुच्चारणाज्जल्पलक्षणे च तदुच्चारणाद्वादोऽपि च्छलादिरहितो जल्प एवेत्येका द्वितीया तु च्छलजातिनिग्रहस्थानविशिष्ट एव जल्पस्तद्रहितश्च वाद इति । एतदेवाभिप्रेत्योक्तं विनिग्रहो जल्प इति मा विज्ञायीति च्छलजातिनिग्रहस्थानसाधनोपालम्भ एवेत्यादि मा विज्ञायीत्यन्तं चेति । अतो व्यतिषङ्गज्ञापनार्थं प्रमाणतर्कग्रहणं कर्तव्यम् । एवं च च्छलजातिनिग्रहस्थानसाहित्यराहित्याभ्यामेव नोभयोर्विशेषः किंतु यत्र प्रमाणैरेव साधनं तर्केणैवोपालम्भः स वादः । यत्र चैतादृशो व्यतिषङ्गो नास्ति स जल्प इत्यपि विशेषोऽस्तीति । × जल्पे प्रमाणादीनां प्रयोगेऽपि प्रमाणेनैव साधनं तर्केणैवोपालम्भ इति नियमाभावान्नैतल्लक्षणस्य वादेऽतिव्याप्तिरिति भावः ।

---

१ च. °रवना° ।

छलजातिनिग्रहस्थानैः साधनं कस्यचिदर्थस्य संभवति। प्रतिषेधार्थं चैषां सामान्यलक्षणे विशेषलक्षणे च श्रूयते 'वचनविघातोऽर्थविकल्पोपपत्त्या छलम्' (१।२।५१) इति। 'साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः' (१।२।५९)। 'विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्' (१।२।६०) इति। विशेषलक्षणेष्वपि यथास्वमिति। न चैतद्विजानीयात्प्रतिषेधार्थतैवैवार्थं साधयन्तीति। छलजातिनिग्रहस्थानोपालम्भ इत्येवमप्युच्यमाने विज्ञायत एतत्*दिति।

**प्रमाणैः साधनोपालम्भयोश्छलजातीनामङ्गभावो रक्षणार्थत्वान्न स्वतन्त्राणां साधनभावः।**

यत्तत्प्रमाणैरर्थस्य साधनं तत्र च्छलजातिनिग्रहस्थानानामङ्गभावो रक्षणार्थत्वात्। तानि हि प्रयुज्यमानानि परपक्षविघातेन

---

तद्रूपेण ज्ञाताभ्याम्। न तु ज्ञानेऽनाहार्यत्वं विवक्षितम्। आरोपितप्रमाणाभावेनाऽऽभासेऽपि जल्पनिर्वाहात्। यद्यपि च्छलादिभिरुपालम्भ एव न तु साधनं तथाऽपि साधनस्य परकीयानुमानस्योपालम्भो यत्रेत्यर्थान्न दोषः। परपक्षदूषणे सति स्वपक्षसिद्धिरित्यतः साधने तदुपयोग इत्यन्ये। उभयपक्षस्थापनात्वेन च विशेषणीयमतो वितण्डायां नातिव्याप्तिः। स प्रतिपक्षस्थापनाहीन इत्युत्तरसूत्रात्प्रकृत उभयपक्षस्थापनावत्त्वलाभः। स्थापनावत्त्वादेव च पञ्चावयवनियमोऽपि लभ्यत इति वदन्ति। अत्र च च्छलादिभिः सर्वैरुपालम्भो न विशेषणाय व्याप्तिर (प्तोऽ) पि तु तद्योग्यतयैव। योग्यतावच्छेदकं तु वादभिन्नकथात्वमेव। तत्र चोक्तवादत्वावच्छिन्नभेदस्तत्तद्वादभेदो वा विशेष-

---

* एवं च सूत्रे साधनपदग्रहणमनुपपन्नमिति भावः। अत्रेदं बोध्यम्—न खलु वै छलेत्यारभ्यैतदितीत्यन्तेन शङ्का प्रतिपाद्यते। प्रमाणैरित्यादिना च परिहार उच्यते। जल्पकथायां प्रवृत्तेन पुरुषेण प्रमाणैः साधने क्रियमाणे छलादिनाऽपि परोक्तसाधनानां वारणे स्वपक्षसिद्ध्या तदप्रयोगे च प्रतिवादिजयानुपपत्तेरेतावन्मात्रेण तेषां साधनहेतुत्वं प्रतिपाद्यत इति भावः।

---

१ ख. °धार्थतैवैषां। २ ग. °धार्थं त। ३ ग. °तथैवा°। ४ ग. रक्षार्थ°। ५ क. °च तु स्व°। ६ ग. रवि°। ७ ग. °न परप°।

स्वपक्षं रक्षन्ति । तथा चोक्तम्—'तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहरक्षणार्थं कण्टकशाखावरणवत्'। (५।१।५०) यश्चासौ प्रमाणैः प्रतिपक्षस्योपालम्भस्तस्य चैतानि प्रयुज्यमानानि प्रतिषेधविघातात्सहकारीणि भवन्ति । तदेवमङ्गीभूतानां छलादीनामुपादानम् । जल्पे न स्वतन्त्राणां साधनभावः । उपालम्भे तु स्वा*तन्त्र्यमप्यस्तीति ॥ २ ॥

## स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥

भा०—स जल्पो वितण्डा भवति । किंविशेषणः, प्रतिपक्षस्थापनया हीनः । यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावि-

---

णमिति । छलेत्यादिना विजिगीषुकथात्वं बोध्यते । विजिगीषुर्हि च्छलादिकं करोति । तथा चोभयपक्षस्थापनावती विजिगीषुकथा जल्प इत्यर्थ इत्यपि वदन्ति । अत्र चायं क्रमः—वादिना स्वपक्षसाधनं प्रयुज्य नायं हेत्वाभासस्तल्लक्षणायोगादिति सामान्यतो नायमसिद्ध इत्यादि विशेषतो वा प्रतिवादिना स्वस्याज्ञानादिनिरासाय परोक्तसंभवादेव लाभ उच्यमानग्राह्याणामप्राप्तकालार्थान्तरनिरर्थकानामलाभ उक्तग्राह्याणां प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञाविरोधप्रतिज्ञासंन्यासहेत्वन्तराविज्ञातार्थविक्षेपमतानुज्ञान्यूनाधिकपुनरुक्तिनिरनुयोज्यानुयोगापसिद्धान्तानामलाभे पर्यनुयोज्योपेक्षणस्य मध्यस्थोद्भाव्यत्वादेवानुपन्यासार्हतया यथासंभवहेत्वाभासेन परोक्तं दूषयित्वा स्वपक्ष उपन्यसनीयः। ततो वादिना तृतीयकक्षाश्रितेन परोक्तमनूद्य स्वपक्षदूषणमुद्धृत्यानुक्तिग्राह्योच्यमानग्राह्यहेत्वाभासातिरिक्तोक्तग्राह्याणामलाभे हेत्वाभासेन यथासंभवं प्रतिपक्षवादिनः स्थापना दूषणीया । अन्यथा क्रमविपर्यासेऽप्राप्तकालमनवसरे दूषणोद्भावने च निरनुयोज्यानुयोगो यथा त्यक्ष्यसि चेत्प्रतिज्ञाहानिर्विशेषयसि चेद्धेत्वन्तरमित्यादिप्रतिज्ञाहान्यादिवद्धेत्वाभासानामुक्तग्राह्यत्वाविशेषेऽपि अर्थदोषत्वेनाप्रधानत्वाच्चरमसंधानमिति ॥ २ ॥

वृ०—वितण्डां क्रमप्राप्तां लक्षयति । यद्यपि तच्छब्देन जल्पो न परामष्टुं शक्यते । जल्पस्य स्थापनाद्वयवतः प्रतिपक्षस्थापनाहीनत्वस्य विरुद्धत्वात्त-

---

* साधनानपेक्षत्वेन परोक्तसाधनविघातकत्वमित्यर्थः ।

---

१ क. °क्षयन्ति । २ ग. °ताभिः प्र° ।

त्युक्तौ तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्तत इति। अस्तु तर्हि स प्रतिपक्षहीनो वितण्डा। यद्वै खलु तत्परप्रतिषेधलक्षणं वाक्यं स वैतण्डिकस्य पक्षो न त्वसौ साध्यं कंचिदर्थं प्रतिज्ञाय स्थापयतीति। त*स्माद्यथान्यासमेवास्त्विति ॥ ३ ॥

इति कथाप्रकरणम् ॥ १ ॥

---

भा०–हेतुलक्षणाभावादहेतवो[1] हेतुसा+मान्याद्धेतुवदाभासमानास्त इमे–

सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः ॥ ४ ॥

॥ ४ ॥

---

थाऽपि स्थापनाद्वयवत्त्वं विहाय जल्पैकदेशः परामृश्यते। प्रतिपक्षो द्वितीयपक्षः। तथा च प्रतिपक्षस्थापनाहीना विजिगीषुकथा वितण्डेति। न च स्वस्य स्थापनीयाभावात्कथमियं कथा प्रवर्ततामिति वाच्यम्। परपक्षखण्डनेन जयस्यैवोद्देश्यत्वात्। परे तु यत्परपक्षखण्डनेनैव स्वपक्षसिद्धेरर्थादेव सिद्धिस्तत्साधनाभावेऽपि न प्रवृत्त्यनुपपत्तिरिति वदन्ति ॥ ३ ॥

इति कथाप्रकरणम् ॥ १ ॥

---

वृ०–क्रमप्राप्तान्हेत्वाभासाँल्लक्षयति विभजते च। न चात्र लक्षणं न प्रतीयत इति वाच्यम्। हेत्वाभासशब्दस्य हेतुवदाभासमानार्थकत्वेनैव तत्सूचनात्। सूचनाद्धि सूत्रम्। तथा हि पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रति-

---

* वितण्डेत्यन्ता शङ्का यद्वै खल्विति उत्तरम्। अयं भावः—प्रतिपक्षहीन इत्युक्तौ स्वकीयपक्ष एव यत्र कथायां विद्यते स इत्यर्थे वैतण्डिकस्य साधनीयार्थाभावेन स्वकीयपक्षस्यैव वक्तुमशक्यत्वात्प्रतिपक्षस्य च साधयितुः सत्त्वादव्याप्तिः स्यात्। तस्माद्यथान्यासमेवास्तु। स्थापनापदप्रयोगे तु स्वकीयपक्षप्रतिपादनं नाऽऽवश्यकम्। किंतु प्रतिपक्षस्थापनं यत्र नेत्यर्थेन न दोष इति। + प्रतिज्ञानन्तरे प्रयोगोऽन्यतमलिङ्गधर्मानुविधानं वा सामान्यपदार्थः। अन्वयिन्व्यतिरेकित्वान्वयिव्यतिरेकित्वरूपधर्मत्रयमध्य एकधर्मवत्त्वेति तात्पर्यम्। साधकासाधकत्वविषये तु विशेषः स्यादित्यन्यदेतत्।

---

[1] ख. 'हेतु॰'।

भा०—तेषाम्—

अनैकान्तिकः सव्यभिचारः ॥ ५ ॥

व्यभिचार एकत्रा*व्यवस्था, सह व्यभिचारेण वर्तत इति सव्यभिचारः । निदर्शनं नित्यः शब्दोऽस्पर्शत्वात्, स्पर्शवान्कुम्भोऽनित्यो दृष्टः, न च तथा स्पर्शवाञ्छब्दः, तस्मादस्पर्शत्वान्नित्यः शब्द इति । दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ दृश्येते+स्पर्शवांश्चाणुर्नित्यश्चेति । आत्मादौ च दृष्टान्त उदाहरण-

पक्षितत्त्वोपपन्नो हेतुर्गमकस्तद्वदाभासत इत्यत्र वत्यर्थस्तद्भिन्नत्वे सति तद्धर्मवत्त्वम् । तथा च पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेण भासमान इति फलितार्थः । तत्र च लक्षणं सत्यन्तं तस्यैव दूषकतायामुपयोगात् । न चासाधकतायां पक्षसत्त्वाद्येकैकाभावस्यैव गमकत्वसंभवेऽधिकवैयर्थ्यम् । एतेन पञ्चान्यत्वं लक्षणमित्यपि प्रत्युक्तमिति वाच्यम् । पञ्चत्वावच्छिन्नाभावस्य पक्षसत्त्वाभावाद्यघटितत्वेन वैयर्थ्याभावात् । वस्तुतस्तु पृथिवीतरेभ्यो भिद्यते स्पर्शित्वात्प्रमेयमाकाशादित्यादौ सपक्षाद्यप्रसिद्धेर्नैतस्य लक्षणत्वे तात्पर्यं परं तु विपक्षासत्त्वसपक्षसत्त्वाभ्यामव्यभिचरितसामानाधिकरण्यं पक्षसत्त्वसहितस्य चैतस्य विरोधित्वं त्रिभिर्लब्धम् । तेन व्याप्तिविशिष्टपक्षधर्मताविरोधित्वम् । चरमयोस्त्वनुमितिविरोधिरूपानवच्छिन्नत्वार्थकयोरभावादनुमितिविरोधित्वम् । तेनानुमितितत्कारणाज्ञानान्यतरविरोधित्वं पर्यवस्यति ॥ ४ ॥

वृ०—सव्यभिचारं लक्षयति । एकस्य साध्यस्य तदभावस्य[2] वा योऽन्तः सहचारोऽव्यभिचरितसहचारः सोऽन्तःसहचारोऽव्यभिचरितसहचार इत्याशयः । स चात्र व्याप्तिग्राहकः । तथा चैकमात्रव्याप्तिग्राहकसहचारवानैकान्तिकस्तदन्योऽनैकान्तिकः । स च साधारणोऽसाधारणोऽनुपसंहारी चेति त्रिविधः । साधारणः साध्यवत्तदन्यवृत्तिः । यथा शब्दो नित्यो निःस्पर्शत्वात्[1] । न च विरुद्धसंकीर्णदोषः । उपधेयसंकरेऽप्युपाधेरसंकरात् । असाधारणः सपक्षविप-

* साध्यतज्जातीयान्यवृत्तित्वं व्यभिचारः । यत्खलु साध्यतज्जातीयवृत्तित्वे सत्यन्यत्र वर्तते तद्व्यभिचारि तद्वृत्तित्वं व्यभिचारः । + ननु मा भून्नित्यत्वं साध्यमस्पर्शत्वमेवास्तु नित्यत्वस्य साध्यमित्याशङ्क्याऽऽह स्पर्शवांश्चाणुर्नित्यश्चेति ।

१ ग. ॰र्शत्वम॰ । २ च. 'स्य च यो' ।

साधर्म्यात्साध्यसाधनं हेतुरिति । अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति अस्पर्शा बुद्धिरनित्या चेति । एवं द्विविधेऽपि दृष्टान्ते व्यभिचारात्साध्यसाधनभावो नास्तीति लक्षणाभावाद्-हेतुरिति । नित्यत्वमप्येकोऽन्तः । अनित्यत्वमप्येकोऽन्तः । एकस्मिन्नन्ते विद्यत इत्यैकान्तिकः । विपर्ययादनैकान्तिक उभयत्र व्यापकत्वादिति ॥ ५ ॥

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥**

भा०–तं विरुणद्धीति तद्विरोध्यभ्युपेतं सिद्धान्तं व्याहन्तीति*। यथा सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधादपेतोऽप्यस्ति विनाशप्रतिषेधान्न नित्यो विकार उपपद्यत इत्येवं हेतुर्व्यक्ते-

---

क्षव्यावृत्तः । सपक्षः साध्यवत्त्वनिश्चयविषयः । यथा शब्दो नित्यः शब्दत्वादित्यादौ । अनुपसंहारी च केवलान्वयिधर्मावच्छिन्नपक्षकः । यथा सर्वं नित्यं मेयत्वादित्यादि । अत्र च साध्यसंदेहाद्व्याप्तिग्रहो न भवतीत्याशयः । नव्यास्तु असाधारणः साध्यवदवृत्तिः । एतस्य साध्यसहचारग्रहप्रतिबन्धेन व्याप्तिग्रहप्रतिबन्धो दूषकताबीजम् । अनुपसंहारी च केवलान्वयिसाध्यकः । तस्य चात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपस्य ज्ञानाद्व्यतिरेकव्याप्तिग्रहप्रतिबन्धो दूषकताबीजमित्याहुः ॥ ५ ॥

वृ०–क्रमप्राप्तं विरुद्धं लक्षयति । अत्र च सिद्धान्तं साध्यं प्रतिज्ञायां हि पक्षस्य सिद्धस्यान्ते साध्यमभिधीयते । तथा च साध्यमभ्युपेत्योद्दिश्य प्रयुक्तस्तद्विरोधी साध्याभावव्याप्त इति फलितार्थः । यथा वह्निमान्ह्रदत्वादिति ।

---

* अभ्युपगतार्थविरोधी विरुद्धः । एवं च सर्वेषामनुक्तविरुद्धानां संग्रहो भवति । नन्वेवं विरुद्ध एवैको हेत्वाभासः प्राप्नोति न तु पञ्चेति चेत् । सत्यम् । एक एव हेत्वाभासो विरुद्धः । तस्य तु सामान्येन विरुद्धत्वेन संगृहीतस्य पञ्चधा व्यपदेशो भवति यथा प्रमेयमित्यनेन षोडश पदार्थाः । पृथगभिधानं तर्हि विरुद्धस्य न कर्तव्यमिति चेत् । सामान्यतोऽधिगतस्य विशेषज्ञापनार्थं तदित्याशयः । यथा प्रमेयस्यैव । अत्रेदं तत्त्वम्—अनैकान्तिकाद्यो हेत्वाभासा अनैकान्तिकादित्वविरुद्धत्वाभ्यां द्विरूपा बोध्याः । एतस्मिंस्तु विरुद्धतैवैको धर्मः । अतोऽस्य निष्कृष्याभिधानमिति ।

---

१ ग. °धान ।

रपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते । कथम् । व्यक्तिरात्मलाभः । अपायः प्रच्युतिः । यद्यात्मलाभात्प्रच्युतो विकारोऽस्ति नित्यत्वप्रतिषेधो नोपपद्यते । यद्व्यक्तेरपेतस्यापि विकारस्यास्तित्वं तत्खलु नित्यत्वमिति । नित्यत्वप्रतिषेधो नाम विकारस्याऽऽत्मलाभात्प्रच्युतेरुपपत्तिः । यदात्मलाभात्प्रच्यवते तदनित्यं दृष्टं यदस्ति न तदात्मलाभात्प्रच्यवते । अस्तित्वं चाऽऽत्मलाभात्प्रच्युतिरिति विरुद्धावेतौ न सह संभवत इति । सोऽयं हेतुर्यत्सिद्धान्तमाश्रित्य प्रवर्तते तमेव व्याहन्तीति ॥ ६ ॥

**यस्मात्प्रकरणचिन्ता स निर्णयार्थ-मपदिष्टः प्रकरणसमः ॥ ७ ॥**

भा०—विमर्शाधिष्ठानौ पक्षप्रतिपक्षावनवसितौ प्रकरणम् । तस्य चिन्ता विमर्शात्प्रभृति प्राङ्निर्णयाद्यत्समीक्षणं सा । जिज्ञासा यत्कृता स निर्णयार्थं प्रयुक्तः । उभयपक्षसाम्यात्प्रकरणमनतिवर्तमानः प्रकरणसमो निर्णयाय न *प्रकल्पते । प्रज्ञापनं त्वनित्यः शब्दो नित्यधर्मानुपलब्धेरिति । अनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टं स्थाल्यादि । यत्र समानो धर्मः संशयकारणं हेतुत्वेनोपादीयते स संशयसमः सव्यभिचार एव । या तु विमर्शस्य

---

एतस्य साध्याभावानुमितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धो दूषकताबीजम् । न च सत्प्रतिपक्षाविशेषः । तत्र हेत्वन्तरं साध्याभावसाधकम् । इह तु हेतुरेव साध्याभावसाधकः साध्यसाधकत्वेन त्वयोपन्यस्त इत्यशक्तिविशेषोन्नायकत्वेन विशेषात् ॥ ६ ॥

वृ०—क्रमप्राप्तं प्रकरणसमं लक्षयति । स हेतुः स्वसाध्यस्य परसाध्याभावस्य वा निर्णयार्थमपदिष्टः प्रयुक्तः प्रकरणसम उच्यते । स क इत्याकाङ्क्षायामाह—

---

* संशयविषयीभूतकोटिद्वयमध्य एकतरकोटयुपस्थापक एव यत्र साध्यसाधकत्वेनोपादीयते स प्रकरणसम इत्यर्थः । अयमेव च सत्प्रतिपक्ष इत्युच्यते ।

---

१ ग. °त्यप° । २ ग. °त्वं ख° । ३ ख. °मर्शात्प्र° ४ ग. °णं जि° । ५ ग. °यार्थम° ।

विशेषापेक्षितोभयपक्षविशेषानुपलब्धिश्च सा प्रकरणं प्रवर्तयति। यथा शब्दे नित्यधर्मो नोपलभ्यत एवमनित्यधर्मोऽपि। सेयमुभयपक्षविशेषानुपलब्धिः प्रकरणचिन्तां प्रवर्तयति। कथम्। विपर्यये हि प्रकरणनिवृत्तेः। यदि नित्यधर्मः शब्दे गृह्यते न स्यात्प्रकरणम्। यदि वाऽनित्यधर्मो गृह्येत। एवमपि निवर्तेत प्रकरणम्। सोऽयं हेतुरुभौ पक्षौ प्रवर्तयन्नन्यतरस्य निर्णयाय न प्रकल्पते॥ ७॥

**साध्याविशिष्टः साध्यत्वात्साध्यसमः॥ ८॥**

भा०—द्रव्यं छायेति साध्यम्। गतिमत्त्वादिति हेतुः। साध्येनाविशिष्टः साधनीयत्वात्साध्यसमः। कथम्। अयमप्यसिद्धत्वा-

---

यस्मात्प्रकरणचिन्तेति करणं पक्षप्रतिपक्षाविति भाष्यम्। साध्यतदभाववन्ताविति तदर्थः। तथा च निर्णयार्थं प्रयुक्तो हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात्किंतु धर्मिणः साध्यवत्त्वं तदभाववत्त्वं वेति चिन्तां जिज्ञासां प्रवर्तयति स प्रकरणसमः। यद्वा प्रकृष्टं करणं लिङ्गपरामर्शो वा। को हेतुरनयोः साधकः। एतयोः कः परामर्शः प्रमेति वा यत्र जिज्ञासा भवतीत्यर्थः। यस्मादित्यादि तु वस्तुस्थितिमात्रम्। लक्षणं तु तुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वम्। स्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शो वा विरोधिपरामर्शस्य च हेतुनिष्ठत्वमेकज्ञानविषयत्वसंबन्धेन। अन्यथा हेतोर्दुष्टत्वं न स्यात्। अयं च दशाविशेषे दोष इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेवेत्यवधेयम्॥ ७॥

वृ०—क्रमप्राप्तं साध्यसमं लक्षयति। साध्येन वह्न्यादिनाऽविशिष्टः। कुत इत्यत आह—साध्यत्वादिति साधनीयत्वादित्यर्थः। यथा हि साध्यं साधनीयं तथा हेतुरपि चेत्साध्यसम इत्युच्यते। अत एव चासिद्ध इति व्यवह्रियते। अयं चाऽऽश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्धिभेदात्त्रिविधः। आश्रयासिद्धिश्च पक्षे पक्षतावच्छेदकाभावः। यथा काञ्चनमयः पर्वतो वह्निमानित्यादौ। स्वरूपासिद्धिः पक्षे हेतुतावच्छेदकावच्छिन्नस्याभावः। यथा द्रव्यं धूमादित्यादौ। व्याप्यत्वासिद्धिश्चाव्यभिचरितसामानाधिकरण्यस्याभावः। न

---

१ ख. ॰नावशि॰।

त्साध्यवत्प्रज्ञा*पयितव्यः । साध्यं तावदेतत् । किं पुरुषच्छायाऽपि गच्छति आहोस्विदावरकद्रव्ये संसर्पति आवरणसंतानादसंनिधिसंतानोऽयं तेजसो गृह्यत इति । सर्पता खलु द्रव्येण ज्ञानाद्यो यस्तेजोभाग आव्रियते तस्य तस्यासंनिधिरेवावच्छिन्नो गृह्यत इति । आवरणं तु प्राप्तिप्रतिषेधः ॥ ८ ॥

कालात्ययापदिष्टः कालातीतः ॥ ९ ॥

भा०—कालात्ययेन युक्तो यस्यार्थस्यैकदेशोऽपदिश्यमानस्य स

---

च स्वरूपासिद्धेरेव सूत्राल्लक्ष्यत्वप्रतीतेर्नोभयोर्नेतरलक्ष्यत्वमिति वाच्यम् । हेतुरिति पदं ह्यत्र पूरणीयम् । हेतुपदं च गमकहेतोर्व्याप्तिविशिष्टपक्षधर्मस्य वाचकं व्याप्तिविशिष्टपक्षधर्म इत्येव वा पूर्यताम् । तथा च तस्य किंचिदंशसाध्यत्वेनैव साध्यसमत्वम् । अत एव साध्ये साध्यतावच्छेदकाभावः साधने साधनतावच्छेदकाभावश्च व्याप्यत्वासिद्धिः । यथा पक्षतावच्छेदकाभावपक्षतावच्छेदकवद्भेदादेरन्यतमत्वेनाऽऽश्रयासिद्धित्वं यथा च पक्षे हेत्वभावहेतुमद्भेदादेरन्यतमत्वेन स्वरूपासिद्धित्वं तथा साध्यतावच्छेदकाभावादेरन्यतमत्वेन व्याप्यत्वासिद्धित्वं त्रितयान्यतमत्वं चासिद्धिसामान्यलक्षणम् । नीलधूमत्वादेरपि व्याप्यत्वासिद्धावन्तर्भावं वदन्ति । तेषामयमाशयः—व्याप्तिर्हि साध्यसंबन्धितावच्छेदकरूपा गुरुधर्मश्च साध्यसंबन्धितानवच्छेदकोऽतो नीलधूमत्वादेः साध्यसंबन्धितानवच्छेदकत्वान्न व्याप्तिस्वरूपत्वम् । तथा च साध्यतावच्छेदकाभावादिरिव साधनतावच्छेदके व्याप्यतानवच्छेदकत्वमपि भवति व्याप्यत्वासिद्धिरिति ॥ ८ ॥

वृ०—क्रमप्राप्तमतीतकालं लक्षयति । अतीतकालस्य समानार्थकत्वात्कालातीतशब्देनोक्तकालस्य साधनकालस्यात्ययेऽभावेऽपदिष्टः प्रयुक्तो हेतुः । एतेन साध्याभावप्रमालक्षणार्थ इति सूचितम् । साध्याभावनिर्णये साधनासंभवादयमेव बाधितसाध्यक इति गीयते । यथा वह्निरनुष्णः कृतकत्वादित्यादौ । न च बाध आवश्यकस्य व्यभिचारस्वरूपासिद्ध्यन्यतरस्यैव दोषत्वमुचितमिति

---

* यत्र पक्षेण सह हेतोरपि संबन्धोऽसिद्धत्वात्साधनीयः स साध्यसमः । अत्र हेतोः संबन्ध इति पक्षतावच्छेदकादेरप्युपलक्षणं बोध्यम् । अयमेवासिद्ध इत्युच्यते ।

कालात्ययापदिष्टः कालातीत * उच्यते—निदर्शनम्—नित्यः शब्दः संयोगव्यङ्ग्यत्वाद्रूपवत्। प्रागूर्ध्वं च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते। तथा च शब्दोऽप्यवस्थितो भेरीदण्डसंयोगेन व्यज्यते दारुपरशुसंयोगेन वा। तस्मात्संयोगव्यङ्ग्यत्वान्नित्यः शब्द इत्ययमहेतुः कालात्ययापदेशात्। व्यञ्जकस्य संयोगस्य¹ कालं न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति। सति प्रदीपसंयोगे रूपस्य ग्रहणं भवति, न निवृत्ते संयोगे रूपं गृह्यते। निवृत्ते दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते। विभागकाले² सेयं शब्दव्यक्तिः संयोगकालमत्येतीति न संयोगनिमि³त्ता भवति। कस्मात्। कारणाभावाद्धि कार्याभाव इति। एवमुदाहरणसाधर्म्यस्या⁴भावादसाधनमयं हेतुर्हेत्वाभास इति। अवयवविपर्यासवचनं⁵ न सूत्रार्थः। कस्मात्। "यस्य येनार्थसंबन्धो दूरस्थस्यापि तस्य सः। अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्" इत्येतद्वचनाद्विपर्यासेनोक्तो हेतुरुदाहरणसाधर्म्यात्तथा वैधर्म्यात्साधनं हेतुलक्षणं न जहाति। अजहद्धेतुलक्षणं न हेत्वाभासो भवतीति अवयवविपर्यासवचनमप्राप्तकालमिति

---

वाच्यम्। तदप्रतिसंधानेन बाधस्य दोषावश्यकत्वात्। उपधेयसंकरेऽप्युपाधेरसंकरात्। उत्पत्तिकालावच्छिन्नो घटो गन्धवान्छिखरावच्छिन्नः पर्वतो वह्निमानित्यादावसंकराच्च। साध्याभाववत्प्रत्यक्षतावच्छेदकावच्छिन्नत्वस्य तत्र सत्त्वात्। परे तु घटः सकर्तृकः कार्यत्वादित्यादौ यत्र लाघवोपनीतमेकमात्रक-

---

* साध्यकाले हेत्वभाववानित्यर्थः। नित्यः शब्दः संयोगव्यङ्ग्यत्वादित्यत्र ह्युपलब्धेः पूर्वं संयोगः, नोपलब्धिकाले। सोऽयं हेतुविशेषणत्वेनोपात्तः संयोग उपलब्धिकालमतिक्रामति। यदा हि शब्द उपलभ्यते तदा संयोगो नास्ति। यथा दारुपरशुसंयोगनिवृत्तौ शब्द उपलभ्यते। ननु संयोगव्यङ्ग्यत्वादित्ययं हेतुरनित्ये घटादावप्यस्तीति अनैकान्तिक एवेति चेत्। अत्रोच्यते—न वयं संयोगव्यङ्ग्यत्वेन शब्दस्य नित्यत्वं साधयामः। अपि तु शब्दस्यावस्थानम्। एवं च शब्दोऽवतिष्ठते संयोगव्यङ्ग्यत्वादिति तात्पर्यम्। तथा च नानैकान्तिकत्वम्। न ह्यनवस्थितं किंचित्संयोगेन व्यज्यमानं दृश्यत इति भावः।

---

१ ख. °स्य न। २ ग. काले न। ३ क. निमित्ता भ°। ४ ख. °स्यापि। ५ ग. °चन।

निग्रहस्थानमुक्तं तदेवेदं पुनरुच्यत इति अतस्तन्न *सूत्रार्थः॥९॥
इति हेत्वाभासप्रकरणम् ॥ २ ॥

---

भा०—अथ च्छलम्—

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥

न सामान्यलक्षणे छलं शक्यमुदाहर्तुं विभागे तूदाहरणानि ॥ १० ॥

भा०—विभागश्च—

तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥

॥ ११ ॥

---

र्तृकत्वं भासत इत्युच्यते तत्र तदभावोऽसंकीर्णोदाहरणमिति वदन्ति ॥ ९ ॥
इति हेत्वाभासप्रकरणम् ॥ २ ॥

---

वृ०—क्रमप्राप्तं छलं लक्षयति । अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः कल्पोऽर्थान्तरकल्पनेति यावत् । तदुपपत्त्या युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य विघातो दूषणं तच्छलमित्यर्थः । वक्तृतात्पर्याविषयार्थकल्पनेन दूषणाभिधानमिति फलितम् । तात्पर्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा । यथा वा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नवसंख्यापरत्वकल्पनयाऽसिद्ध्यभिधानं प्रमेयं धर्मत्वादित्यत्र पुण्यार्थकल्पनया भोगासिद्ध्यभिधानम्। वह्निमान्धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम् ॥ १० ॥

वृ०—लक्षितं छलं विभजते ॥ ११ ॥

---

* प्रतिज्ञानन्तरं हेतोरवसरे प्राप्ते तस्याकथनं पश्चात्तूदाहरणात्कथनमिति न सूत्रार्थ इति फलितोऽर्थः । अनुक्तिसमये हि हेतोरेवासत्त्वात्तत्र नाऽऽभासत्वस्योपपत्तिः । उक्ते च तस्मिन्हेतुलक्षणाक्रान्ते हेत्वाभासत्वासंभवः । हेतुलक्षणानाक्रान्ते त्वनैकान्तिकाद्यन्यतमत्वात्पृथक्कथनानुपपत्तिः पौनरुक्त्यापत्तिश्च स्यादिति भावः ।

भा०–तेषाम्—

अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ १२ ॥

नवकम्बलोऽयं माणवक इति प्रयोगः । अत्र नवः कम्बलोऽस्येति वक्तुरभिप्रायः । विग्रहे तु विशेषो न समासे । तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यमर्थं नव कम्बला अस्येति तावदभिहितं भवतेति कल्पयति । कल्पयित्वा चासंभवेन प्रतिषेधति एकोऽस्य कम्बलः कुतो नव कम्बला इति । तदिदं सामान्यशब्दे वाचि च्छलं वाक्छलमिति । अस्य प्रत्य*वस्थानं सामान्यशब्दस्यानेकार्थत्वेऽन्यतराभिधानकल्पनायां विशेषवचनम् । नवकम्बल इत्यनेकार्थस्याभिधानं नवः कम्बलोऽस्य नव कम्बला अस्येति । एतस्मिन्प्रयुक्ते येयं कल्पना नव कम्बला अस्येत्येतद्भवताऽभिहितं तच्च न संभवतीति । एतस्यामन्यतराभिधानकल्पनायां विशेषो वक्तव्यः । यस्माद्विशेषोऽर्थविशेषेषु विज्ञायतेऽयमर्थोऽनेनाभिहित इति । स च विशेषो नास्ति । तस्मान्मिथ्याभियोगमात्रमेतदिति । प्रसिद्धश्च लोके शब्दार्थसंबन्धोऽभिधानाभिधेयनियमनियोगः । अस्याभिधानस्यायमर्थोऽभिधेय इति समानः सामान्यशब्दस्य विशेषो विशिष्टशब्दस्य । प्रयुक्तपूर्वाश्चेमे[१] शब्दा अर्थे प्रयुज्यन्ते नाप्रयुक्तपूर्वाः । प्रयोगश्चार्थसंप्रत्ययार्थः । अर्थप्रत्ययाच्च +व्यवहार इति । तत्रैव-

---

वृ०–तत्र वाक्छलं लक्षयति । यत्र शक्यार्थद्वये संभवति एकार्थनिर्णायकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेन दूषणाभिधानं तद्वाक्छलम् । लक्षणं तु

---

* तदेतच्छलं पराजयावस्थायां जल्पे प्रयोक्तव्यमित्युक्तम् । परवाक्ये पर्यनुयोगोऽस्येति चोक्तम् । तदत्र यथा पर्यनुयोगस्तथा शिष्यहितार्थं भाष्यकारो दर्शयति—अस्य प्रत्यवस्थानमित्यादिना । + अयं भावः—संकेतकरणावस्थायां वृद्धव्यवहारे वा न कश्चिच्छब्दः कंचिदर्थं शृङ्गग्राहिकया बोधयति । किंतु सामान्यद्वारेणार्थप्रकरणादिसहकारविशिष्टोऽर्थविशेषं बोधयति । तस्मान्न प्रतिपादयितुरेषोऽपराधो यदविशेषशब्दैर्विशेषान्तरं प्रतिपादयति । अपि तु संकेतस्यापराधो यो विशेषमपहाय सामान्ये शब्दानां वर्तते । एवं च यथासंकेतं बोधयन्प्रयोक्ता नापराध्य इति सिद्धमिति ।

---

१ ग. °मेऽर्थे ।

मर्थगत्यर्थे शब्दप्रयोगे सामर्थ्यात्सामान्यशब्दस्य प्रयोगनियमः । अजां ग्रामं नय, सर्पिराहर, ब्राह्मणं भोजयेति सामान्यशब्दाः सन्तोऽर्थावयवेषु प्रयुज्यन्ते । सामर्थ्याद्यत्रार्थक्रियादेशना संभवति तत्र प्रवर्तन्ते नार्थसामान्ये, क्रियादेशनासंभवात् । एवमयं सामान्यशब्दो नवकम्बल इति योऽर्थः संभवति नवः कम्बलोऽस्येति तत्र प्रवर्तते यस्तु न संभवति नव कम्बला अस्येति तत्र न प्रवर्तते । सोऽयमनुपपद्यमानार्थकल्पनया परवाक्योपालम्भस्तेन कल्पत इति ॥ १२ ॥

संभवतोऽर्थस्यातिसामान्ययोगादसंभूतार्थ-
कल्पना सामान्यच्छलम् ॥ १३ ॥

भा०—अहो खल्वसौ ब्राह्मणो विद्याचरणसंपन्न इत्युक्ते कश्चिदाह संभवति ब्राह्मणे विद्याचरणसंपदित्यस्य विघातोऽर्थविकल्पोपपत्त्याऽसंभूतार्थकल्पनया क्रियते । यदि ब्राह्मणे विद्याचरणसंपत्संभवति व्रात्येऽपि संभवेत् । व्रात्योऽपि ब्राह्मणः सोऽप्यस्तु विद्याचरणसंपन्न इति । यद्विवक्षितमर्थमाप्नोति चात्येति च तदति सामान्यम् । यथा ब्राह्मणत्वं विद्याचरणसंपदं क्वचिदाप्नोति क्वचिदत्येति । सामान्यनिमित्तं छलं सामान्यच्छलमिति । अस्य च प्रत्यवस्थानमविवक्षितहेतुकस्य विषयानुवादः । प्रशंसार्थत्वाद्वाक्यस्य तदत्रार्थसंभूतार्थकल्पनानुपपत्तिः । यथा संभव-

---

शक्त्यैकार्थशब्दबोधतात्पर्यकशब्दस्य शक्त्याऽर्थान्तरतात्पर्यकत्वकल्पनया दूषणाभिधानम् । यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्युक्ते कुतोऽस्य नवसंख्याकाः कम्बला इति । एवं गौर्विषाणीत्युक्ते कुतो गजस्य शृङ्गम् । श्वेतो धावतीति श्वेतरूपवदभिप्रायेणोक्ते श्वेतो न धावतीत्यधावनमित्यादिकमूह्यम् ॥ १२ ॥

वृ०—सामान्यच्छलं लक्षयति । सामान्यविशिष्टसंभवदर्थाभिप्रायेणोक्तस्यातिसामान्ययोगादसंभवदर्थकत्वकल्पनया दूषणाभिधानं सामान्यच्छलम् । यथा

---

१ ख. °शता सं° २ ख. ग. °र्तेने ना° । ३ ग. °क्योपलम्भ° । ४ ग. °मान्यं छ° । ५ ग. व्रात्योऽपि । ६ ग. °ति नात्ये° ।

न्यस्मिन्क्षेत्रे शालय इति । अनिराकृतमविवक्षितं च बीजजन्म । प्रवृत्तिविषयस्तु क्षेत्रं प्रशस्यते । सोऽयं क्षेत्रानुवादो नास्मिञ्छालयो विधीयन्त इति । बीजात्तु शालिनिर्वृत्तिः सती न विवक्षिता । एवं संभवति ब्राह्मणे विद्याचरणसंपदिति । संपद्विषयो ब्राह्मणत्वं न संपद्धेतुः । न चात्र हेतुर्विवक्षितः । विषयानुवादस्त्वयं प्रशंसार्थत्वाद्वाक्यस्य । सति ब्राह्मणत्वे संपद्धेतुः समर्थ इति विषयं च प्रशंसता वाक्येन यथा हेतुतः फलनिर्वृत्तिर्न प्रत्याख्यायते तदेवं सति वचनविघातोऽसंभूतार्थकल्पनया नोपपद्यत इति ॥ १३ ॥

## धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥

भा०—अभिधानस्य धर्मो यथार्थप्रयोगः । धर्मविकल्पोऽन्यत्र दृष्टस्यान्यत्र प्रयोगः । तस्य निर्देशे[2] धर्मविकल्पनिर्देशे । यथा मञ्चाः क्रोशन्तीति । अर्थसद्भावेन प्रतिषेधः । मञ्चस्थाः पुरुषाः क्रोशन्ति न तु मञ्चाः क्रोशन्ति । का पुनरत्रा[3]र्थविकल्पोपपत्तिः । अन्यथा प्रयुक्तस्यान्यार्थकल्पनं भक्त्या प्रयोगे प्राधान्येन कल्पनम् । उपचारविषयं छलमुपचारच्छलम् उपचारो नीतार्थः सहचरणादिनिमित्तेनातद्भावे तद्वदभिधानमुपचार इति । अत्र समाधिः[4]—सिद्धे प्रयोगे वक्तुर्यथाभिप्रायं शब्दार्थयोरनुज्ञा प्रति-

ब्राह्मणोऽयं विद्याचरणसंपन्न इत्युक्ते ब्राह्मणत्वेन विद्याचरणसंपदं साधयतीति कल्पयित्वा परो वदति कुतो ब्राह्मणत्वेन विद्याचरणसंपद्व्रात्ये व्यभिचारात् । ॥ १३ ॥

वृ०—उपचारच्छलं लक्षयति । धर्मः शब्दस्यार्थेन संबन्धस्तस्य विकल्पो विविधः कल्पः शक्तिलक्षणान्यतररूपः । तथा च शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलम् । मञ्चाः क्रोशन्ति नीलो घट इत्यादौ मञ्चस्था एव क्रोशन्ति न तु मञ्चाः । एवं घटस्य कथं

१ ख. विधीयन्त । २ ग. °शे य° । ३ ख. °त्रार्थोप° । ४ क. °धिः । प्रसिद्धाप्रसि° ।

षेधो वा न च्छन्दतः । प्रधानभूतस्य शब्दस्य भाक्त*स्य च गुणभूतस्य प्रयोग उभयोर्लोकसिद्धः । सिद्धे प्रयोगे यथा वक्तुरभिप्रायस्तथा शब्दार्थावनुज्ञेयौ प्रतिषेध्यौ वा न च्छन्दतः । यदि वक्ता प्रधानशब्दं प्रयुङ्क्ते यथाभूतस्याभ्यनुज्ञा प्रतिषेधो वा न च्छन्दतः । अथ गुणभूतं तदा गुणभूतस्य । यत्र तु वक्ता गुणभूतं शब्दं प्रयुङ्क्ते प्रधानभूतमभिप्रेत्य परः प्रतिषेधति स्वमनीषया प्रतिषेधोऽसौ भवति न परोपालम्भ इति ॥ १४ ॥

**वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ १५ ॥**

भा०—न वाक्छलादुपचारच्छलं भिद्यते तस्याप्यर्थान्तरकल्पनाया अविशेषात् । इहापि स्थान्यर्थो गुणशब्दः, प्रधानशब्दः स्थानार्थ इति कल्पयित्वा प्रतिषिध्यत इति ॥ १५ ॥

**न तदर्थान्तरभावात् ॥ १६ ॥**

भा०—न वाक्छलमेवोपचारच्छलं तस्यार्थसद्भावप्रतिषेधस्यार्था-

---

नीलरूपाभेदः । एवमहं नित्य इति शक्त्या प्रयुक्तेऽमुकस्मादुत्पन्नस्त्वं कथं नित्य इति प्रतिषेधोऽप्युपचारच्छलम् । वाद्यभिप्रेतार्थस्यादूषणेन च्छलस्यासदुत्तरत्वम् । न च श्लिष्टलाक्षणिके प्रयोगाद्वादिन एवापराधः स्यादिति वाच्यम् । तत्तदर्थबोधकतया प्रसिद्धस्य शब्दस्य प्रयोगे वादिनोऽनपराधात् । अन्यथा पर्वतो वह्निमानित्युक्ते पर्वतोऽयं कथमवह्निमानित्यादिदूषणेनानुमानाद्युच्छेदः स्यात् ॥ १४ ॥

वृ०—प्रसङ्गाच्छलं परीक्षितुं पूर्वपक्षयति । शब्दस्यार्थान्तरकल्पनाविशेषाद्वाक्छलमेवोपचारच्छलं स्यादिति च्छलस्य द्वित्वमेव न तु त्रित्वमिति शङ्कार्थः ॥ १५ ॥

वृ०—समाधत्ते । उपचारच्छलस्य वाक्छलाभेदो न । तयोरर्थान्तरभावाद्भिन्नत्वात् । भिन्नतया प्रमाणसिद्धत्वादिति फलितार्थः । पूर्वोक्तभेदकधर्मेण भेदसं-

---

* भाक्तस्येत्येतावति वक्तव्ये प्रधानग्रहणं सिद्धान्ततया दृष्टान्तलाभार्थम् । उपचारो हि लोकसिद्ध एव कर्तव्यः । विना प्रयोजनं लोकसिद्धश्चायमुपचारो मञ्चाः क्रोशन्तीति भावः ।

न्तरभावात् । कुतः, अर्थान्तरकल्पनातः । अन्यो ह्यर्थान्तरे[1]-
कल्पना, अन्योऽर्थसद्भावप्रतिषेध[2]* इति ॥ १६ ॥

अविशेषे वा किंचित्साधर्म्या-
देकच्छल[3]प्रसङ्गः ॥ १७ ॥

भा०—छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं प्रतिषिध्यते किंचित्साध-
र्म्यात् । यथा चायं हेतुस्त्रित्वं प्रतिषेधति तथा द्वित्वमप्यनुज्ञातं
प्रतिषेधति । विद्यते हि किंचित्साधर्म्यं द्वयोरपीति । अथ द्वित्वं
किंचित्साधर्म्यान्न निवर्तते त्रित्वमपि न निवर्त्स्यति ॥ १७ ॥

इति च्छलप्रकरणम् ॥ ३ ॥

भा०—अत ऊर्ध्वम्—

साधर्म्यवैधर्म्याभ्यां प्रत्यव-
स्थानं जातिः ॥ १८ ॥

प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते[4] सा जातिः × । स च

---

भवेऽपि यत्किंचिद्धर्मेणाभेदे सामान्यधर्मेणाभेदस्य सर्वत्र संभवाद्विभागः कुत्रा-
पि न स्यादिति ॥ १६ ॥

वृ०—विपक्षे बाधकमभिप्रेत्याऽऽह । यत्किंचिद्धर्मादविशेषे किंचित्साधर्म्या-
च्छलत्वादिरूपाच्छलस्यैक्यं स्यान्न तु त्वदभिमतं द्वित्वमपीति भावः ॥ १७ ॥

इति च्छलप्रकरणम् ॥ ३ ॥

वृ०—क्रमप्राप्तां जातिं लक्षयति । साधर्म्यवैधर्म्याभ्यामिति सावधारणो निर्दे-

---

* उपचारच्छले हि नैव मञ्चाः क्रोशन्तीति वस्तुसद्भावः प्रतिषिध्यते वाक्छले तु कम्बलयोगमभ्युपगम्य कम्बलस्यानेकता धर्मः प्रतिषिध्यते । एवं चैकत्र धर्मः प्रति-षिध्यतेऽन्यत्र च धर्मी प्रतिषिध्यत इति भावः । × छले साधर्म्यवैधर्म्याभावान्न जातित्वम् । वस्तुतो विद्यमानाभ्यां साधर्म्यवैधर्म्याभ्यां न सम्यग्दूषणं संभवति । अपि तु प्रयोगात् । प्रयुक्ते च हेतौ तदाभासे वा यः प्रसङ्गो जायते सा जातिरित्यर्थः । जल्पे हि वेदप्रा-माण्यं जानानः पुरुषो यदा नास्तिकैः कुहेतुनाऽधिक्षिप्यते सदुत्तरं चास्य सहसा यदा न स्फुरति तदा जनाधाराणामीश्वराणां वेदाप्रामाण्यबुद्धिर्मा भूदिति जात्याऽपि प्रत्यवस्थेय-मिति बोध्यम् ।

---

१ क. °न्याऽर्था° । २ क. °रसद्भावक° । ३ ग. °लत्वप्र° । ४ ख. ग. °ते स जा° ।

प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति । ' उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ' ( १ । १ । ३४ ) इत्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम् । उदाहरणवैधर्म्यात्साध्यसाधनं हेतुरित्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम् । प्रत्यनीकभावाज्जायमानोऽर्थो जातिरिति ॥ १८ ॥

विप्रतिपत्तिरप्रतिपत्तिश्च
निग्रहस्थानम् ॥ १९ ॥

भा०—विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः । विप्रतिपद्यमानः पराजयं प्राप्नोति । निग्रहस्थानं खलु पराजयप्राप्तिः । अप्रतिपत्तिस्त्वारम्भविषयेऽनारम्भः । परेण स्थापितं वा न प्रतिषेधति प्रतिषेधं वा नोद्धराति । असमासाच्च नैते एव निग्रहस्थाने इति ॥ १९ ॥

---

शस्तेन व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यामिति सावधारणो निर्देशस्तेन व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं दूषणाभिधानं जातिरित्यर्थः । यद्यप्युभाभ्यां प्रत्यवस्थानस्य प्रत्येकप्रत्यवस्थानेऽव्याप्तिरेकप्रत्यवस्थानस्य लक्षणत्वे परप्रत्यवस्थानेऽव्याप्तिः । न वाऽन्यतरप्रत्यवस्थानं नियतम् । सर्वत्र जातावभावात्तथाऽपि व्याप्तिनिरपेक्षतया दूषणाभिधानमित्येव वाच्यम् । तेन च संदर्भेण दूषणासमर्थत्वं स्वव्याघातकत्वं वा दर्शितम् । तथा च च्छलादिभिन्नदूषणासमर्थमुत्तरं स्वव्याघातकमुत्तरं वा जातिरिति सूचितम् । साधर्म्यसमादिचतुर्विंशत्यन्यान्यत्वं तदर्थ इत्यपि वदन्ति ॥ १८ ॥

वृ०—क्रमप्राप्तं निग्रहस्थानं लक्षयति । निग्रहस्य खलीकारस्य स्थानम् । तच्च विप्रतिपत्तिरप्रतिपत्तिश्च । विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिरप्रतिपत्तिः प्रकृताज्ञानम् । यद्यप्येतदन्यतरत्परनिष्ठं नोद्भावयितुमर्हम् । प्रतिज्ञाहान्यादेर्निग्रहस्थानत्वानुपपत्तिश्च तथाऽपि विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवत्त्वं तदर्थः । उद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गत्वं प्रतिज्ञाहान्याद्यन्यतमत्वं वा लक्षणमित्यपि वदन्ति ॥ १९ ॥

---

१ क. 'ये न प्रार' । ग. 'ये सा प्रार' ।

भा०—किं पुनर्दृष्टा*न्तवज्जातिनिग्रहस्थानयोरभेदोऽथ सिद्धान्तवद्भेद इत्यत आह—

**तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥**

तस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वम् । तयोश्च विप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम् । नाना कल्पो विकल्पः, विविधो वा कल्पो विकल्पः । तत्राननुभाषणमज्ञानमप्रतिभा विक्षेपोऽमतानुज्ञा पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिर्निग्रहस्थानम् । शेषस्तु विप्रतिपत्तिरिति ॥ २० ॥

इमे प्रमाणादयः पदार्था उद्दिष्टाः । यथोद्देशं लक्षिताः । यथालक्षणं परीक्षिष्यन्त इति त्रिविधा चास्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति ॥

इति दोषप्रकरणम् ॥ ४ ॥

---

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

समाप्तश्चायं प्रथमोऽध्यायः ॥ १ ॥

---

वृ०—जातिनिग्रहस्थानयोर्विभागो नास्तीति भ्रमो मा भूदित्यत आह—तद्विकल्पात्साधर्म्यादिना प्रत्यवस्थानस्य विप्रतिपत्त्याद्युन्नायकव्यापारस्य च विकल्पाद्भेदान्नानाप्रकारत्वादिति यावत् । इत्थं च तयोर्बहुत्वेऽपि प्रमाणादिपरीक्षाविषयकशिष्यजिज्ञासया प्रतिबन्धान्नेदानीं तद्विभागः क्रियत इति भावः ॥ २० ॥

इति पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम् ॥ ४ ॥

---

इति प्रथमाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

इति विश्वनाथभट्टाचार्यकृतन्यायसूत्रवृत्तौ प्रथमाध्यायवृत्तिः समाप्ता ॥१॥

---

* यद्यपि साधर्म्यवैधर्म्याभ्यां दृष्टान्तस्यापि भेदस्तथाऽपि लक्षणाभेदाभिप्रायेणाभेद उक्त इति ज्ञेयम् ।

भा०—अत ऊर्ध्वं प्रमाणादिपरीक्षा सा च ' विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ' ( १ । १ । ४१ ) इ*त्यग्रे विमर्श एव परीक्ष्यते—

**समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः ॥ १ ॥**

समानस्य धर्मस्याध्यवसायात्संशयो न धर्ममा=त्रात् । अथवा

---

वृ०—प्रमाणैः प्रथितैर्दोर्भिर्विवादेषु परीक्षितैः ।
हरिं द्वितीयमध्यायभासमानमहं भजे ॥ १ ॥

अथ प्रमाणादिषु लक्षितेषु परीक्षणीयेषु संशयं विना परीक्षाया असंभवादादौ संशय एव परीक्षणीयः। शिष्यजिज्ञासानुसारात्सूचीकटाहन्यायाच्च । अतः संशयपरीक्षायाः प्रमाणादिपरीक्षोपयोगित्वात्प्रमाणपरीक्षैवाध्यायार्थ इति वदन्ति । वस्तुतस्तु च्छलस्य परीक्षितत्वात्तृतीयचतुर्थयोः प्रमेयस्य पञ्चमे च जातेः परीक्षिष्यमाणत्वात्तदतिरिक्तयावत्पदार्थपरीक्षैवाध्यायार्थः । प्रयोजनादिपरीक्षाया अप्यत्रैवातिदेशेन करिष्यमाणत्वात्तत्र विभागसापेक्षप्रमाणपरोक्षातिरिक्तोक्तयावत्पदार्थपरीक्षा प्रथमाह्निकार्थः । तत्र नव प्रकरणानि । तत्राऽऽदौ संशयपरीक्षाप्रकरणम् । अन्यानि यथायथं वक्ष्यन्ते । तत्र संशयपरीक्षणाय पूर्वपक्षसूत्रम् ।

अत्र सूत्रकृता संशयस्यादर्शनात्संशयपरीक्षायां संशयो नाङ्गमनवस्थाभयादित्याशयं सूत्रकृतो वर्णयन्ति । तदसत् । न ह्यत्र संशयस्वरूपं परीक्षते । येनानवस्था स्यात् । अपि तु लक्षणसूत्रोक्तं संशयकारणं तथा च संशयः समानधर्मदर्शनादिजन्यो न वेति संशयः संभवत्येव । परंतु सूत्रकृतो निर्ण-

---

* उद्देशलक्षणयोरनन्तरं परीक्षावसरे पाठक्रमेण प्रमाणपरीक्षायाः प्राप्तावपि प्रमाणानां निर्णयं प्रत्युपयोगित्वात्संशयस्य ततः पूर्वभावित्वादार्थक्रमेण पूर्वोपस्थितः संशय एव परीक्ष्यते । यद्यपि निर्णयमात्रस्य न संशयपूर्वकत्वमिति विमृश्य पक्षप्रतिपक्षेति सूत्रे प्रतिपादितं तथाऽपि शास्त्रार्थनिर्णयस्य विचारपूर्वकत्वाद्विचारप्रवृत्तेश्च संशयपूर्वकत्वानियमात्संशयपरीक्षायाः प्राथम्यं युक्तमिति बोध्यम् । = अप्रतीयमानधर्ममात्रस्य संशयं प्रति अहेतुत्वात्तन्निश्चये तु निश्चयस्य संशयविरोधित्वस्वभावात्संशयहेतुत्वासंभवः । किंतु समानधर्माध्यवसायः संशयहेतुरिति भावः ।

समानमनयोर्यद्धर्ममुपलभे[1] इति धर्मधर्मिग्रहणे[2] संशयाभाव* इति। अथवा समा=नधर्माध्यवसायादर्थान्तरभूते धर्मिणि संशयोऽनुपपन्न इति न जातु रूपस्यार्थान्तरभूतस्याध्यवसायादर्थान्तरभूते स्पर्शे[5] संशय इति। अथवा नाध्यवसायादर्थावधारणादनवधारणज्ञानं संशय उपपद्यते। कार्यकारणयोः सारूप्याभावादिति। एतेनानेकधर्माध्यवसायादिति व्याख्यातम्। अन्यतरधर्माध्यवसायाच्च संशयो न भवति ततो ह्यन्यतरावधारणमेवेति ॥ १ ॥

विप्रतिपत्त्यवस्थाध्यवसायाच्च ॥ २ ॥

भा०—न विप्रतिपत्तिमात्राद[6]व्यवस्थामात्राद्वा न संशयः। किं तर्हि

---

यसत्त्वात्पूर्वपक्षनिरासमात्रस्यापेक्षणात्संशयो न दर्शितः। एवमेव प्रमाणादिपरीक्षायामपि। अत एवाभिहितं भाष्ये शास्त्रे वादे च विमर्शवर्जमिति तत्त्वम्। समानादिधर्मदर्शनान्न संशयः। प्रत्येकं व्यभिचारात्। अन्यतरत्वेनानुगतीकृततद्दर्शनादपि न संशयः। न हि स्थाणुधर्मसमानधर्मोऽयं पुरुषधर्मसमानधर्मोऽयमिति वा जानन्स्थाणुर्न वेति संदिग्धे। समानत्वस्य भेदगर्भत्वाद्भिन्नधर्मत्वेन ज्ञाते तद्भेदग्रहस्यैव संभवात्। यद्वा समानानेकधर्मोपपत्तेरिति लक्षणसूत्र उपपत्तिपदं स्वरूपपरमिति भ्रान्तस्येयं शङ्का। तथा चायमर्थः— न संशयः समानधर्मादितः। स्वरूपसत इति शेषः। यतः समानधर्मादेरध्यवसायादन्यतरत्वेनानुगतीकृततदध्यवसायाद्वा संशयः। अन्यथा संशयस्य सार्वत्रिकत्वापत्तेः ॥ १ ॥

वृ०—विप्रतिपत्त्यादिजन्यसंशयत्रयं प्रतिक्षिपति। न संशय इत्यनुवर्तते। विप्रतिपत्तेरुपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च न संशयजनकत्वं

---

* उभयानुगतत्वेन धर्मस्याग्रहणे वस्तुसदुभयानुगतधर्मग्रहणेऽपि संशयानुत्पत्तेरुभयानुगतत्वग्रहणे तु विशेषणतया धर्मिणोऽपि अवधृतत्वात्तद्विषये संशयोऽनुपपन्न इति भावः।
= शब्दे समानधर्मस्य कृतकत्वस्याध्यवसायेऽपि तत्समानाधिकरणघटत्वादिप्रकारकसंशयानुत्पत्तेः समानधर्मानध्यवसायेऽपि प्रकरणसमे विरुद्धाव्यभिचारिधर्मसंनिपाते तत्त्वानुपलब्धेः संशयोत्पत्त्याऽव्यापकत्वात्समानधर्मोपलब्धेः संशयं प्रति न हेतुत्वमिति तात्पर्यम्।

---

१ ग. लभ्यत इ°। २ क. °भत इ°। ३ ग. °हणसं°। ४ ग. °शयमात्रहति। ५ ग. स्पर्शसं°। ६ ग. °दन्याव°।

विप्रतिपत्तिमुप*लभमानस्य संशयः । एवमव्यवस्थायामपीति । अथवाऽस्त्यात्मेत्येके नास्त्यात्मेत्यपरे मन्यन्त इत्युपलब्धेः कथं संशयः स्यादिति । अथोपलब्धिरव्यवस्थिताऽनुपलब्धिश्चाव्यवस्थितेति विभागेनाव्यवस्थिते संशयो नोपपद्यत इति ॥ २ ॥

विप्रतिपत्तौ च × संप्रतिपत्तेः ॥ ३ ॥

भा०—यां च विप्रतिपत्तिं भवान्संशयहेतुं मन्यते सा संप्रतिपत्तिः । सा हि द्वयोः प्रत्यनीकधर्मविषया । तत्र यदि विप्रतिपत्तेः संशयः संप्रतिपत्तेरेव संशय इति ॥ ३ ॥

अव्यवस्थाऽऽत्मनि व्यवस्थितत्वाच्चाव्यवस्था=याः ॥ ४ ॥

भा०—न संशयः । यदि तावदियमव्यवस्थाऽऽत्मन्येव व्यवस्थिता व्यवस्थानादव्यवस्था न भवतीत्यनुपपन्नः संशयः । अथाव्यवस्थाऽऽत्मनि न व्यवस्थिता । एवमतादात्म्यादव्यवस्था न भवतीति संशयाभाव इति ॥ ४ ॥

---

प्रत्येकं व्यभिचारादित्यर्थः । यद्वा स्वरूपसद्विप्रतिपत्त्यादितो न संशयः । किंतु तदध्यवसायादित्यर्थः ॥ २ ॥

वृ०—विप्रतिपत्तिजसंशयमात्रप्रतिक्षेपाय सूत्रान्तरम् । विप्रतिपत्तौ न संशयहेतुत्वं संप्रतिपत्तेर्निश्चयात् । वादिनोर्मध्यस्थस्य च निश्चयसत्त्वात् । सति च निश्चये संशयायोगादिति भावः ॥ ३ ॥

वृ०—उपलब्ध्यनुपलब्ध्यव्यवस्थातः संशयद्वयनिरासाय सूत्रम् । उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च संशयजनकत्वं तदा स्याद्यदि स्वस्मिन्नप्यव्यस्थितत्वं स्यात् । न त्वेवम् । तथा च स्वात्मनि व्यवस्थितायास्तस्याः कथमन्यत्राव्यवस्थात्वमित्यर्थः ॥ ४ ॥

---

* विप्रतिपत्तेः स्वरूपतः संशयाजनकत्वात्तन्निश्चयस्य च संशयविरोधित्वेन संशयहेतुत्वासंभव इति भावः । × प्रत्येकं वा वादिनोर्मतस्य सिद्धान्तरूपत्वेन विरुद्धकल्पनाद्द्वयात्मकविप्रतिपत्तिर्नास्तीति सूत्रतात्पर्यम् । = अव्यवस्था न विद्यत इति तात्पर्यम् ।

---

१ म. °लब्धः क° । २ ग. °कवि° ।

तथाऽत्यन्तसंशयस्तद्धर्म-
सातत्योप*पत्तेः ॥ ५ ॥

भा०—येन कल्पेन भवान्समानधर्मोपपत्तेः संशय इति मन्यते तेन खल्वत्यन्तसंशयः प्रसज्यते । समानधर्मोपपत्तेरनुच्छेदात्संशयानुच्छेदः । नायमतद्धर्मा धर्मी विमृश्यमानो गृह्यते सततं तु तद्धर्मा भवतीति ॥ ५ ॥

भा०—अस्य प्रतिषेधप्रपञ्चस्य संक्षेपेणोद्धारः—

यथोक्ताध्यवसायादेव तद्विशेषापेक्षात्संशये नासंशयो नात्यन्त×संशयो वा ॥ ६ ॥

संशयानुपपत्तिः संशयानुच्छेदश्च न प्रसज्यते । कथम् । यत्तावत्समानधर्माध्यवसायः संशयहेतुर्न समानधर्ममात्रमिति । एवमेतत् । कस्मादेवं नोच्यत इति । विशेषापेक्ष इति वचनात्सिद्धेः । विशेषस्यापेक्षाऽऽकाङ्क्षा सा चानुपलभ्यमाने विशेषे समर्था । न चोक्तं समानधर्मापेक्ष इति । समाने च धर्मे कथमाकाङ्क्षा न भवेद्यद्ययं प्रत्यक्षः स्यात् । एतेन सामर्थ्येन विज्ञायते समानधर्माध्यवसायादिति ।

---

वृ०—नन्वव्यवस्था प्रामाण्यसंशयस्तस्य च न स्वसंशयरूपत्वम् । संशयस्य विषयविशेषघटितत्वात् । तस्य चान्यसंशयजनकत्वं न विरुद्धम् । अतो दूषणान्तरमाह—तथा । तथा सति अव्यवस्थाया हेतुत्वे सति । तथाशब्दोऽयं न सूत्रान्तर्गतः । अपि तु भाष्यस्थ इत्यन्ये । अत्यन्तसंशयः संशयानुच्छेदः स्यात् । तद्धर्मस्य तज्जनकस्य ज्ञानत्वादिसाधारणधर्मदर्शनस्य सातत्योपपत्तेः सर्वदा संभवात् । अथ ज्ञानत्वादिसाधारणधर्मदर्शनेऽपि कारणान्तरविलम्बान्न सर्वत्र प्रामाण्यसंशय इति यदि तदा तस्यैव विषयसंशयेऽपि हेतुत्वमस्त्विति किं प्रामाण्यसंशयस्य साधारणधर्मदर्शनादेर्वा संशयहेतुत्वेनेति भावः ॥ ५ ॥

वृ०—सिद्धान्तमाह—यथोक्ताध्यवसायात्साधारणादिधर्मदर्शनात् । तस्य

---

* समानधर्मादीनां सातत्यान्नित्यसंशय इति सूत्राशयः । × सूत्रार्थापरिज्ञानात्संशयाभावो नेत्यर्थः ।

---

१ ग. °न्यत इति न । २ ख. नायं त° । ३ ख. ग. घ. °मृष्यमा° । ४ क. °भागो गृ° । ५ ङ. वा ॥ ६ ॥ न सं° । ६ ख. ङ. °नुत्पत्तिः । ७ ङ. °द एव प्र° ।

उपपत्तिवचनाद्वा । समानधर्मोपपत्तेरित्युच्यते । न चान्यासद्भावसंवेदनादृते समानधर्मोपपत्तिरस्ति । अनुपलभ्यमानसद्भावो हि समानो धर्मोऽविद्यमानवद्भवतीति । विषयशब्देन वा विषयिणः प्रत्ययस्याभिधानम् । यथा लोके धूमेनाग्निरनुमीयत इत्युक्ते धूमदर्शनेनाग्निरनुमीयत इति ज्ञायते । कथम् । दृष्ट्वा हि धूममग्निमनुमिनोति नादृष्ट्वा । न च वाक्ये दर्शनशब्दः श्रूयते । अनुजानाति च वाक्यस्यार्थप्रत्यायकत्वम् । तेन मन्यामहे विषयशब्देन विषयिणः प्रत्ययस्याभिधानं बोद्धाऽनुजानाति एवमिहापि समानधर्मशब्देन समानधर्माध्यवसायमाहेति । यथोहित्वा समानमनयोर्धर्ममुपलभत इति । धर्मधर्मिग्रहणे संशयाभाव इति । पूर्वदृष्टविषयमेतत् । यावहमर्थौ पूर्वमद्राक्षं तयोः समानं धर्ममुपलभे विशेषं नोपलभ इति । कथं नु विशेषं पश्येयं येनान्यतरमवधारयेयमिति । न चैतत्समानधर्मोपलब्धौ धर्मधर्मिग्रहणमात्रेण निवर्तत इति । यच्चोक्तं नार्थान्तराध्यवसायादन्यत्र संशय इति । यो ह्यर्थान्तराध्यवसायमात्रं संशयहेतुमुपाददीत स एवं वाच्य * इति । यत्पुनरेतत्कार्यकारणयोः सारूप्याभावादिति । कारणस्य भावाभावयोः कार्यस्य भावाभावौ कार्यकारणयोः = सारूप्यम् ।

---

पुरुषत्वादेर्यो विशेष इतरव्यावर्तको धर्मस्तस्यापगत ईक्ष ईक्षणं ततो विशेषाद-

---

* न ह्यर्थान्तरभावमात्रं मया संशयहेतुत्वेनोपादीयते किंत्वर्थान्तरविशेषः । विशेषो नाम धर्मधार्मिभावः । ज्ञाते धर्मे धर्मिणि संशयो भवतीति परिहारं सूत्रकारा मन्यन्ते न हि रूपस्पर्शयोर्धर्मधार्मिभावः । वार्तिककारस्तु नैतत्सहते रूपस्पर्शयोरिव धर्मधर्मिणोरपि नार्थान्तरभावनिवृत्तिः । तस्मात्समानधर्मादिविशिष्टधर्मिदर्शनाद्विशेषवति धर्मिण्येव संशयः । न त्वर्थान्तरदर्शनादर्थान्तरे धर्मिणि संदेह इति भावः । = कारणसद्भावात्कार्यसद्भाव इत्ययं न सारूप्यनिर्देशः । अपि तु कार्यकारणधर्मनिर्देशः । तथा च कार्यान्तरेष्वप्ययमस्ति । न हि किंचित्कार्यं कारणसद्भावमन्तरेण संभवति । किंतु विशेषानवधारणमुभयोः सारूप्यं बोध्यम् ।

---

१ ख. घ. ङ. °मथाग्नि° । २ ख. ग. घ. ङ. °दृष्टे न । ३ ग. °मन्ययो° । ४ ग. °लब्धेर्धं° । ५ ग. यथोक्तं ।

यस्योत्पादाद्यदुत्पद्यते यस्य चानुत्पादान्नोत्पद्यते तत्कारणं कार्यमितरदित्येतत्सारूप्यम् । अस्ति च संशयकारणे संशये चैतदिति । एतेनानेकधर्माध्यवसायादिति प्रतिषेधः परिहृत इति । यत्पुनरेतदुक्तम् ‘ विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ’ ( २ । १ । २ ) न संशय इति । पृथक्प्रवादयोर्व्याहतमर्थमुपलभे विशेषं च न जानामि नोपलभे येनान्यतरमवधारयेयम् । तत्कोऽत्र विशेषः स्याद्येनैकतरमवधारयेयमिति । संशयो विप्रतिपत्तिजनितोऽयं न शक्यो विप्रतिपत्तिमात्रेण निवर्तयितुमिति । एवमुपलब्ध्यनुपलब्ध्यव्यवस्थाकृते संशये वेदितव्यमिति । यत्पुनरेतत् ‘ विप्रतिपत्तौ च संप्रतिपत्तेः ’ ( २ । १ । ३ ) इति । विप्रतिपत्तिशब्दस्य[1] योऽर्थस्तदध्यवसायो विशेषापेक्षः संशयहेतुस्तस्य च समाख्यान्तरेण न निवृत्तिः । समानेऽधिकरणे व्याहतार्थौ प्रवादौ विप्रतिपत्तिशब्दार्थः । तदध्यवसायश्च[2] विशेषापेक्षः संशयहेतुः । न चास्य संप्रतिशब्दे समाख्यान्तरे योज्यमाने संशयहेतुत्वं निवर्तते तदिदमकृतबुद्धिसंमो*हनमिति । यत्पुनः ‘ अव्यवस्थाऽऽत्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ’ ( २ । १ । ४ ) इति । संशयहेतोरर्थस्याप्रतिषेधादव्यवस्थाभ्यनुज्ञानाच्च निमित्तान्तरेण शब्दान्तरकल्पना व्यर्था । शब्दान्तरकल्पनाऽव्यवस्था खलु व्यवस्था न भवत्यव्यवस्थाऽऽत्मनि व्यवस्थितत्वादिति । नानयोरुपलब्ध्यनुपलब्ध्योः सदसद्विषयत्वं विशेषापेक्षः संशयहेतुर्न भवतीति प्रतिषिध्यते । यावता चाव्यवस्थाऽऽत्मनि व्यवस्थिता[3] न तावताऽऽत्मानं जहाति तावता ह्यनुज्ञाता[4] भवत्यव्यवस्था । एवमियं क्रियमाणाऽपि

---

र्शनादित्यर्थः । तथा च विशेषादर्शनसहितसाधारणधर्मदर्शनादितः संशये स्वीकृते न कारणाभावादसंशयो न वा यत्किंचित्कारणसत्त्वादत्यन्त-

---

* विप्रतिपत्तेः प्रत्येकं वादिदृष्ट्या संप्रतिपत्तिरूपत्वेऽपि श्रोतुस्तटस्थस्योभयज्ञाने संशयोत्पत्तेः संप्रतिपत्तिशब्दवाच्यतामात्रेण दूषणोपन्यासस्यानौचित्यादिति भावः ।

---

१ ख. घ. ङ. °ब्दस्यार्थः । २ क. ङ. °सायो वि° । ३ ग. °ता ता° । ४ ङ. °ता व्य° . ।

शब्दान्तरकल्पना नार्थान्तरं साधयतीति *। यत्पुनरेतत् 'तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः' ( २ । १ । ५ ) इति । नायं समानधर्मादिभ्य एव संशयः किं तर्हि तद्विषयाध्यवसायाद्विशेषस्मृतिसहितादित्यतो नात्यन्तसंशय इति । अन्यतरधर्माध्यवसायाद्वा न संशय इति । तन्न युक्तम् । विशेषापेक्षो विमर्शः संशय इति वचनात् । विशेषश्चान्यतरधर्मो न तस्मिन्नध्यवसीयमाने विशेषापेक्षा ÷ संभवतीति ॥ ६ ॥

**यत्र संशयस्तत्रैवमुत्तरोत्तर × प्रसङ्गः ॥ ७ ॥**

भा०—यत्र यत्र संशयपूर्विका परीक्षा शास्त्रे कथायां वा तत्र तत्रैवं संशये परेण प्रतिषिद्धे समाधिर्वाच्य इति । अतः सर्वपरीक्षाव्यापित्वात्प्रथमं संशयः परीक्षित इति ॥ ७ ॥

इति संशयपरीक्षाप्रकरणम् ॥ १ ॥

---

संशय इत्यर्थः । साधारणधर्मदर्शनादेश्च संशयविशेषे जनकत्वात्संशयत्वावच्छिन्नं प्रति व्यभिचारेऽपि न क्षतिः । विप्रतिपत्तौ च वादिवाक्याभ्यां मध्यस्थस्यैव संशयोपगमात् । यच्चोक्तं समानधर्मदर्शनात्कथं संशयः समानत्वस्य भेदगर्भत्वादिति तदपि न । न हि समानधर्मत्वेन तज्ज्ञानं हेतुः । अपि तूभयसहचरितधर्मवत्त्वज्ञानं तथेत्युक्तदोषाभावात् ॥ ६ ॥

वृ०—संप्रति संशयपरीक्षयैव परेषां पदार्थानां परीक्षामतिदिशन्नाह । एवम्—उक्तरीत्या । उत्तरोत्तरेषां प्रयोजनादिप्रसङ्गः प्रकृष्टः सङ्गः परीक्षायाः संबन्धो बोद्धव्यः । तत्किं प्रयोजनमपि परीक्षणीयं नेत्याह—यत्र संशय इति । यदि तल्लक्षणार्थसंशयस्तदा तदपि परीक्षणीयम् । अथवोत्तरोत्तरमुक्तिप्रत्युक्तिरूपं तत्प्रसङ्गस्तद्रूपा परीक्षा संशयितेऽर्थे कर्तव्येत्यर्थः ॥ ७ ॥

इति संशयपरीक्षाप्रकरणम् ॥ १ ॥

---

* आत्मन्यव्यवस्थाया व्यवस्थितत्वेन व्यवस्थितपदप्रतिपाद्यत्वेऽपि नाव्यवस्थात्वनिवृत्तिः । निमित्तान्तरसंनिपातेनार्थस्य संज्ञान्तरकरणेऽपि स्वरूपानपायादिति भावः । ÷ अन्यतरधर्मज्ञानमात्रं संशयहेतुः । न तु तन्निश्चय एव तद्धेतुरिति भावः । × स्वयं न संशयः प्रतिषेद्धव्यो भवति । किंतु परेण संशये प्रतिषिद्ध एवमुत्तरं वाच्यमिति सूत्रतात्पर्यम् ।

---

१ क. तत्तद्विष° । २ ख. घ. ङ. ततस्तत्रै° ।

भा०—अथ * प्रमाणपरीक्षा—

**प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्या=सिद्धेः ॥ ८ ॥**

प्रत्यक्षादीनां प्रामाण्यं नास्ति त्रैकाल्यासिद्धेः पूर्वापरसहभावानुपपत्तेरिति ॥ ८ ॥

भा०—अस्य सामान्यवचनस्यार्थविभागः—

**पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसंनिकर्षात्प्रत्यक्षोत्पत्तिः ॥ ९ ॥**

गन्धादिविषयं ज्ञानं प्रत्यक्षम् । तद्यदि पूर्वं पश्चाद्गन्धादीनां सिद्धिः, नेदं गन्धादिसंनिकर्षादुत्पद्यत × इति ॥ ९ ॥

**पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेय+सिद्धिः ॥ १० ॥**

भा०—असति प्रमाणे प्रमीयमाणोऽर्थः केन प्रमेयः स्यात् । प्रमाणेन खलु प्रमीयमाणोऽर्थः प्रमेयमित्येतत्सिध्यति ॥ १० ॥

---

वृ०—इदानीमवसरतः प्रमाणसामान्यपरीक्षणाय पूर्वपक्षयति । कालत्रयेऽपि प्रमाणात्प्रमायाः सिद्धेर्वक्तुमशक्यत्वात्प्रत्यक्षादीनां न प्रामाण्यमित्यर्थः ॥ ८ ॥

वृ०—त्रिसूत्र्या त्रैकाल्यासिद्धत्वं व्युत्पादयति । प्रमाणस्य पूर्वत्वं तावन्न संभवति । हि यतः प्रमायाः पूर्वं प्रमाणसिद्धौ प्रमाणसत्त्व इन्द्रियार्थसंनिकर्षात्प्रत्यक्षं सिध्यतीति न स्यात्प्रत्यक्षप्रमाणतः पूर्वमेव प्रमायाः सत्त्वात् । प्रमाणत्वं हि प्रमाकरणत्वम् । पूर्वं प्रमाया अभावे प्रमाकरणत्वमपि कथं स्यात् । पूर्वमेव प्रमायाः सिद्धिरुपेयेति । कथम् । इन्द्रियार्थसंनिकर्षात् । इन्द्रियार्थसंनिकर्षाद्धि प्रत्यक्षोत्पत्तिः प्रत्यक्षाद्युत्पत्तिः । परे तु प्रत्यक्षं प्रति करणत्वे खण्डिते तद्रीत्या करणान्तरमपि खण्डनीयमित्याशयं सूत्रकृतो वर्णयन्ति । प्रमाणस्य प्रमावैशिष्ट्याभावे प्रमाणमिति ज्ञातेऽपि प्रमावैशिष्ट्यसंशयः स्यादिति भावः ॥ ९ ॥

वृ०—प्रमाणस्य प्रमातः पश्चात्सिद्धौ विषयस्य प्रमेयत्वं प्रमाणात्पूर्वमेव सिद्धमिति न प्रमाणतः प्रमाया उत्पत्तिः प्रमेयस्य च ज्ञप्तिरिति ॥ १० ॥

---

* एषां प्रमाणानां किं परीक्ष्यमिति चेत् । उच्यते । आदौ तावत्किं प्रमाणानि सन्ति अथ न सन्तीति संभवः परीक्ष्यः । सदसतोः सामान्यात्प्रमेयत्वाद्विशेषादर्शनाच्च संशयस्य जायमानत्वात् । = त्रिष्वपि कालेषु प्रमाणानि नार्थं साधयन्तीति सूत्रतात्पर्यम् । × एवं च नेन्द्रियार्थसंनिकर्षापेक्षं ज्ञानं भवतीति सूत्रार्थेन यत्पूर्वमिन्द्रियार्थसंनिकर्षोत्पन्नमित्युक्तं तद्व्याहन्यत इति बोध्यम् । + यद्यपि प्रमेयस्वरूपं न प्रमाणाधीनं तथाऽपि तस्य प्रमेयत्वं तदधीनं तदपि चेत्प्रमाणात्पूर्वं स्यात्तर्हि न प्रमाणयोगनिबन्धनं स्यादिति भावः ।

युगपत्सिद्धौ प्रत्यर्थनियतत्वात्क्रम-
वृत्तित्वाभावो बुद्धीनाम् ॥ ११ ॥

भा०—यदि प्रमाणं प्रमेयं च युगपद्भवत एवमपि गन्धादिष्विन्द्रि-यार्थेषु ज्ञानानि प्रत्यर्थनियतानि युगपत्संभवन्तीति ज्ञानानां प्रत्यर्थनियतत्वात्क्रमवृत्तित्वाभावः । या इमा बुद्धयः क्रमेणार्थेषु वर्तन्ते तासां क्रमवृत्तित्वं न संभवतीति* । व्याघातश्च 'युगपज्ज्ञा-नानुत्पत्तिर्मनसो लिङ्गम्' (१ । १ । १६) इति । एतावांश्च प्रमाणप्रमेययोः सद्भावविषयः स चानुपपन्न इति । तस्मात्प्रत्य-क्षादीनां प्रमाणत्वं न संभवतीति ।

अस्य समाधिः—उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद्यथादर्शनं विभागवचनम् । क्वचिदुपल-

वृ०—इदं च सूत्रद्वयमनुमानाद्यभिप्रायेण चक्षुःश्रोत्रादेः प्रमानन्तरं प्रमास-

* इन्द्रियार्थानां बुद्धीनां च संनिपाते सति युगपद्भावः प्राप्नोति तथा च दृष्टं यत्क्रम-वृत्तित्वं तन्न संगच्छत इति युगपज्ज्ञानानुत्पत्तिरिति यदुक्तं तद्व्याहन्यत इति भावः ।

÷ अयं भावः—अर्थसाधकत्वस्वभावकानां प्रत्यक्षादीनां प्रमाणानामर्थसाधकत्वं नेति व्याघातः । किं च प्रामाण्यमात्रप्रतिषेधे धर्मिणोऽप्रतिषेधात्स्वरूपेण सिद्धिः प्रमाणानाम् । ननु प्रमाजननैकलब्धजीवितानां प्रत्यक्षादीनां प्रमाणानां प्रामाण्ये निषिद्धे कुतः स्वरूपसिद्धिरिति चेत् । अत्रोच्यते । अप्रामाण्यसाधकस्यापि प्रमाणत्वानुपपत्तेरप्रमाणेनाप्रामाण्यसाधना-संभवात् । यदि चाप्रामाण्यसाधकस्य प्रामाण्यं स्वीक्रियते तर्हि बाधः । तथा हि—प्रत्यक्षादीनां चाप्रामाण्यप्रतिज्ञायामन्येषां प्रामाण्याभ्युपगमलाभात्तेषां वक्तव्यतापत्तौ तत्सा-धकप्रमाणविशेषोपन्यासे तेनाभ्युपगतप्रामाण्येनानुमानादिना बाधो बोध्यः । किं च त्वदुक्ते-नैव हेतुना त्वदुपन्यस्तस्याप्रामाण्यसाधनस्याप्यप्रमाणतापत्तावप्रमाणं साध्यासिद्धिरपि । यदि च प्रामाण्यस्य धर्मस्य धर्मिणा सहाभेदाभ्युपगमेन धर्मप्रतिषेधे फलतो धर्मिणोऽपि प्रतिषेधो भवतीत्युच्यते तर्हि प्रत्यक्षादीनामिति षष्ठ्यर्थानुपपत्तिः । किं च प्रामाण्यमिति भावप्रत्ययस्याप्यनुपपत्तिः स्यात् । हेतुत्वेनोपन्यस्तायास्त्रैकाल्यासिद्धेस्त्रैकाल्यनिष्ठत्वेन साध्य-वैयधिकरण्यादसाधकत्वम् । कालत्रयेऽप्यर्थसाधकत्वाभावस्य तदर्थत्वे साध्यादविशेष इति भावः ।

१ ख. घ. °ति भ्रा° । २ ग. या बु° । ३ ग. क्रमेण वृ° । ४ ग. °ति स्यात्प्र° ।

ब्धिहेतुः पूर्वं पश्चादुपलब्धिविषयः । यथाऽऽदित्यस्य प्रकाशः । उत्पद्यमानानां क्वचित्पूर्वमुपलब्धिविषयः पश्चादुपलब्धिहेतुः । यथाऽवस्थितानां प्रदीपः । क्वचिदुपलब्धिहेतुरुपलब्धिविषयश्च सह भवतः । यथा धूमेनाग्नेर्ग्रहणामिति । उपलब्धिहेतुश्च प्रमाणम्, प्रमेयं तूपलब्धिविषयः । एवं प्रमाणप्रमेययोः पूर्वापरसहभावेऽनियते यथाऽर्थो दृश्यते तथा विभज्य वचनीय इति । तत्रैकान्तेन प्रतिषेधानुपपत्तिः । सामान्येन[1] खलु विभज्य प्रतिषेध उक्त इति ।

समाख्याहेतोस्त्रैकाल्ययोगात्तथाभूता समाख्या । यत्पुनरिदं पश्चात्सिद्धावसति[2] प्रमाणे प्रमेयं न सिध्यति प्रमाणेन प्रमीयमाणोऽर्थः प्रमेयमिति विज्ञायत इति । प्रमाणमित्येतस्याः समाख्याया उपलब्धिहेतुत्वं निमित्तम् । तस्य त्रैकाल्ययोग उपलब्धिमकार्षीदुपलब्धिं करोति उपलब्धिं करिष्यतीति । समाख्याहेतोस्त्रैकाल्ययोगात्समाख्या तथाभूता । प्रमितोऽनेनार्थः प्रमीयते प्रमास्यत इति प्रमाणम् । प्रमितं प्रमीयते प्रमास्यत इति च प्रमेयम् । एवं सति भविष्यत्यस्मिन्[3]हेतुत उपलब्धिः । प्रमास्यतेऽयमर्थः प्रमेयमिदमित्येतत्सर्वं भवतीति ।

त्रैकाल्यानभ्यनुज्ञाने च व्यवहारानुपपत्तिः । यश्चैवं नाभ्यनुजानीयात्तस्य पाचकमानय पक्ष्यति लावकमानय लविष्यतीति व्यवहारो नोपपद्यत इति । प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरित्येवमादिवाक्यं प्रमाणप्रतिषेधः । तत्रायं प्रष्टव्योऽथानेन प्रति-

---

मकालं वा सत्त्वस्येष्टत्वादुत्पत्तेः शङ्कितुमशक्यत्वात् । तदयमर्थः—प्रमाणप्रमेययोर्युगपत्सत्त्वे युगपदुत्पत्तौ बुद्धीनामर्थविशेषनियतत्वाद्यत्क्रमवृत्तित्वं तन्न स्यात् । पदज्ञानं हि शब्दविषयकं श्रावणप्रत्यक्षरूपं शाब्दबोधश्च पदार्थविषयः परोक्षरूपो विजातीय इत्यनयोर्न यौगपद्यं संभवति कार्यकारणभाववत्त्वात्क्रमिकत्वेनैव सिद्धेः । अत एवैकमेव ज्ञानमुभयविषयकमित्यपि नाऽऽशङ्कनीयं संकरप्रसङ्गश्च । एवं व्याप्तिज्ञानानुमित्यादावपि द्रष्टव्यम् । परे तु प्रमाणप्रमेययोर्न युगपत्सिद्धिर्न युगपज्ज्ञानं बुद्धीनामर्थविशेषनियतत्वात् । क्रमवृत्तित्वं

---

१ ग. °न्ये ख° । २ क. ग. ङ. °त्सिद्धे च स° । ३ ग. भवत्य° ।

षेधेन भवता किं क्रियत इति । किं संभवो निवर्त्यतेऽथासंभवो ज्ञाप्यत इति । तद्यदि संभवो निवर्त्यते सति संभवे प्रत्यक्षादीनां प्रतिषेधानुपपत्तिः । अथासंभवो ज्ञाप्यते प्रमाणलक्षणं प्राप्तस्तर्हि प्रतिषेधः प्रमाणासंभवस्योपलब्धि*हेतुत्वादिति ॥ ११ ॥

भा०–किं चातः—

त्रैकाल्यासिद्धेः[2] प्रतिषेधानुपपत्तिः = ॥ १२ ॥

अस्य तु विभागः–पूर्वं हि प्रतिषेधसिद्धावसति प्रतिषेध्ये किं प्रतिषिध्यते पश्चात्सिद्धौ प्रतिषेध्यासिद्धिः प्रतिषेधाभावादिति युगपत्सिद्धौ प्रतिषेध्यसिद्ध्यभ्यनुज्ञानादनर्थकः प्रतिषेध इति । प्रतिषेधलक्षणे च वाक्येऽनुपपद्यमाने सिद्धं प्रत्यक्षादीनां प्रामाण्यमिति ॥ १२ ॥

सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥

भा०–कथम् । त्रैकाल्यासिद्धेरित्यस्य हेतोर्यद्युदाहरणमुपादीयते हेत्वर्थस्य साधकत्वं दृष्टान्ते दर्शयितव्यमिति। न च तर्हि प्रत्यक्षादीनामप्रामाण्यम् । अथ प्रत्यक्षादीनामप्रामाण्यमुपादीयमानमप्युदा-

---

तथा सति न स्याद्यथा हि चक्षुषो ज्ञानमनुमित्यादिरूपं घटादेश्च प्रत्यक्षादिरूपं न चानयोर्यौगपद्यं संभवतीत्यर्थ इत्याहुः ॥ ११ ॥

वृ०–सिद्धान्तसूत्रम् । यदि त्रैकाल्यासिद्ध्या प्रमाणात्प्रमेयसिद्धिर्नोपेयते तदा तद्रीत्या त्वदीयः प्रतिषेधोऽप्यनुपपन्न इति जात्युत्तरमेतदिति भावः । किं च सर्वप्रमाणप्रतिषेधे प्रतिषेधकप्रमाणमपि नाभ्युपगन्तव्यम् ॥ १२ ॥

वृ०–तथा च कथं प्रतिषेधसिद्धिरित्याह । यदि च प्रतिषेधकं प्रमाणमुपे-

---

* अयमाशयः—इदं तावदयं प्रष्टव्यः । किं प्रमाणानि पक्षीकृत्यासत्ता ज्ञाप्यत आहोस्विच्छून्यत्वम् । नाऽऽद्यः । पक्षतावच्छेदकरूपेण पक्षसिद्धावेव तत्र साध्यसाधनसंभवात्तत्सद्भावाभ्युपगमे तेनैव बाधात् । नान्त्यः । पक्षतावच्छेदकस्य प्रमाणत्वस्याभ्युपगमे तथैव बाधात् । साधनस्य च प्रामाण्यानुपगमेऽप्रमाणेन साधनासंभवात् । प्रामाण्याभ्युपगमे तु तेनैव बाधादिति । = त्वदुपन्यस्तहेतोः प्रतिषेधेऽपि सत्त्वेन तेन साधानासंभवाद्व्याघात इति सूत्रतात्पर्यम् ।

---

१ ख. ग. घ. ङ. °क्षणप्रा°। २ ग.° सिद्धिः प्र° ।

हरणं नार्थं साधयिष्यतीति। सोऽयं सर्वप्रमाणैर्व्याहतो हेतुरहेतुः 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः' (१।२।४७) इति। वाक्यार्थो ह्यस्य सिद्धान्तः। स च वाक्यार्थः प्रत्यक्षादीनि नार्थं साधयन्तीति। इदं चावयवानामुपादानमर्थस्य साधनायेति। अथ नोपादीयते। अप्रदर्शितहेत्वर्थस्य दृष्टान्ते न साधकत्वमिति निषेधो नोपपद्यते हेतुत्वा*सिद्धेरिति ॥ १३ ॥

## तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥ १४ ॥

भा०—प्रतिषेधलक्षणे स्ववाक्ये तेषामवयवाश्रितानां प्रत्यक्षादीनां[3] प्रामाण्येऽभ्यनुज्ञायमाने परवाक्येऽप्यवयवाश्रितानां प्रामाण्यं प्रसज्यतेऽविशेषादिति। एवं च न सर्वाणि प्रमाणानि प्रतिषि=ध्यन्त इति विप्रतिषेध इति[4] वीत्ययमुपसर्गः संप्रतिपत्त्यर्थे[5] न व्याघातेऽर्थाभावादिति ॥ १४ ॥

## त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धेः ॥ १५ ॥

भा०—किमर्थं पुनरिदमुच्यते[6]। पूर्वोक्तनिबन्ध×नार्थम्। यत्तावत्पूर्वोक्तमुपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावा-

---

यते तदा कथं सर्वप्रमाणप्रतिषेध इत्याह ॥ १३ ॥

वृ०—ननु मन्मते वस्तुसिद्धिर्नापेक्षिता विश्वस्य शून्यत्वात्। प्रमाणप्रमेयभावोऽपि न वास्तविकः। त्वन्मते च त्रैकाल्यासिद्धिरुक्तैवेत्यतस्तदुद्धराति ॥ १४ ॥

वृ०—त्रैकाल्यो यः प्रतिषेध उक्तः स न संभवति कुत इत्यत आह—शब्दादिति।

---

* बुद्धिविवक्षाप्रयत्नवायूदीरणताल्वभिघातोष्ठस्पन्दादीन्यवर्जयन्बुद्ध्या वाक्यमुच्चारयसि स्थाणुकण्टकसर्पादीन्परिहरन्पादविहरणादीनि करोषि त एते वाक्यप्रवृत्तौ न संभवत इति भावः। = तथा चैतदुक्तं भवति यानि स्ववाक्याश्रितानि प्रमाणानि तान्यभ्यनुज्ञायन्ते परवाक्याश्रितानि यानि तानि प्रतिषिध्यन्त इति। × न तदस्माभिरुत्सूत्रमुक्तम्। अपि तु सूत्रार्थ एव स इति ज्ञापनार्थमेतत्सूत्रमिति भावः।

---

१ ग. °ष्यति। २ ग. °णप°। ३ क. ङ. च. °दीनाम्प्रा°। ४ ग. °ति नित्यार्थोऽय°। ५ ग. °ति नित्यार्थो न। ६ ग. °ते पूर्वोक्तनिबन्धनार्थं पुनरिदमुच्यते पू°।

नियमाद्यथादर्शनं विभागवचनमिति तदितः समुत्थानं यथा विज्ञायेत । अनियमदर्शी खल्वयमृषिर्नियमेन प्रतिषेधं प्रत्याचष्टे त्रैकाल्यस्य चायुक्तः प्रतिषेध इति । तत्रैकां विधामुदाहरति शब्दादातोद्यसिद्धिवदिति । यथा पश्चात्सिद्धेन शब्देन पूर्वसिद्धमातोद्यमनुमीयते । साध्यं चाऽऽतोद्यं साधनं च शब्दः । अन्तर्हिते ह्यातोद्ये[1] स्वनतोऽनुमानं भवतीति । वीणा वाद्यते वेणुः पूर्यत इति स्वनविशेषेणाऽऽतोद्यविशेषं प्रतिपद्यते तथा पूर्वसिद्धमुपलब्धिविषयं पश्चात्सिद्धेनोपलब्धिहेतुना प्रतिपद्यत इति । निदर्शनार्थत्वाच्चास्य शेषयोर्विधयोर्यथोक्तमुदाहरणं वेदित*व्यमिति । कस्मात्पुनरिह तन्नोच्यते पूर्वोक्तमुपपाद्यत इति । सर्वथा तावदयमर्थः प्रकाशयितव्यः स[2] इह वा प्रकाश्येत तत्र वा न कश्चिद्विशेष इति[3] । प्रमाणं प्रमेयमिति च । समाख्या समावेशेन वर्तते समाख्यानिमित्तवशात् । समाख्यानिमित्तं तूपलब्धिसाधनं प्रमाणमुपलब्धिविषयश्च प्रमेयमिति । यदा चोपलब्धिविषयः कस्यचिदुपलब्धिसाधनं भवति तदा प्रमाणं प्रमेयमिति चैकोऽर्थोऽभिधीयते ॥ १५ ॥

---

यथा शब्दात्पश्चाद्भाविनः पूर्वसिद्धस्याऽऽतोद्यस्य मुरजादेः सिद्धिर्ज्ञप्तिः । यथा वा पूर्वसिद्धात्सूर्यादुत्तरकालीनवस्तुप्रकाशनम् । यथा वा वह्निसमकालीनाद्धूमाद्वह्निसिद्धिस्तथाऽत्रापि प्रमा वः सर्वत्र प्रमाणादुत्तरभाविन्येव । प्रमाणस्य चक्षुरादेः प्रमातः पूर्वभावित्वमस्त्येव । पूर्वं प्रमावैशिष्ट्यं तु तस्य नोपेयते । यदा कदाचित्प्रमासंबन्धेनैव प्रमाणत्वसंभवाद्यदा कदाचित्पाकसंबन्धेनैव पाचकमानयेत्यादिवदिति भावः । अत्र चकारान्तं न सूत्रान्तर्गतमिति तत्त्वालोके । वस्तुतष्टीकादिस्वरसात्सूत्रान्तर्गतमेव ॥ १५ ॥

---

* पूर्वसिद्धस्योपलब्धिहेतोरुदाहरणम्—आदित्यः पूर्वसिद्धः पश्चात्सिद्धानां पदार्थानां प्रकाशकः । सहभावस्योदाहरणं तु धूमदर्शनादग्निं प्रतिपद्यत इति ।

---

१ ग. °द्ये न स्व° । २ क. ग. स इह इ° । ३ क. ग. च. °ति यदा ।

भा०—अस्यार्थस्यावद्योतनार्थमिदमुच्यते—

प्रमेयता[1] च तुलाप्रामाण्यवत् ॥ १६ ॥

गुरुत्वपरिमाणज्ञानसाधनं तुला प्रमाणं ज्ञानविषयो गुरुद्रव्यं सुवर्णादि प्रमेयम् । यदा सुवर्णादिना तुलान्तरं व्यवस्थाप्यते तदा तुलान्तरप्रतिपत्तौ सुवर्णादि प्रमाणं तुलान्तरं प्रमेयमिति । एवमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः । आत्मा[2] तावदुपलब्धिविषयत्वात्प्रमेये परिपठितः । उपलब्धौ स्वातन्त्र्यात्प्रमाता । बुद्धिरुपलब्धिसाधनत्वात्प्रमाणम् । उपलब्धिविषयत्वात्प्रमेयम् । उभयाभावात्तु प्रमितिः । एवमर्थविशेषे समाख्यासमावेशो योज्यः । तथा च कारकशब्दा निमित्तवशात्समावेशेन वर्तन्त इति । वृक्षस्तिष्ठतीति स्वस्थितौ * स्वातन्त्र्यात्कर्ता । वृक्षं पश्य-

वृ०—नन्वनियतत्वादेव प्रमाणप्रमेयव्यवहारो न पारमार्थिको रज्जौ सर्पादिकव्यवहारवदित्याशङ्कायामाह । यथा हि तुलायाः सुवर्णादिगुरुत्वेयत्ताप

* कारकान्तरानपेक्षित्वं स्वातन्त्र्यम् । वृक्षो हि तिष्ठन्स्वस्थितौ न कारकान्तरमपेक्षते । यदा स्थाधातुरयं गतिनिषेधवचनो भवति तदेवं बोध्यम् । यदा च सत्ताभिधायकः स्थाधातुस्तदाऽपि अस्तेर्व्यक्तिनिमित्तत्वेनावतिष्ठमानः सत्तां व्यनक्तीति कारकान्तरानपेक्षत्वेन स्वातन्त्र्यात्कर्तृत्वम् । यदाऽपि गेहादिसंबन्धाभिधायको भवति स्थाधातुः । यथा गेहे देवदत्तस्तिष्ठतीति निर्दिष्टे न सत्तामाह नापि गतिप्रतिषेधम् । अपि तु देवदत्तगेहसंबन्धम् । अस्तीति तु गम्यते । तदाऽपि देवदत्तगेहसंबन्धानुभवरूपा क्रिया बोध्या । तस्यामपि देवदत्तस्य न कारकान्तरापेक्षेति स्वातन्त्र्यात्कर्तृत्वं बोध्यम् । यदाऽप्ययं स्थाधातुरभग्नवचनः । यथा तिष्ठति वृक्षो न भग्न इति । तदाऽपि स्वस्थितौ कारकान्तराणि नापेक्षत इति स्वतन्त्रो भवतीति कर्तेत्युच्यते । अथवा स्वस्थितौ समुदायैकदेशमेव योऽपेक्षते स स्वतन्त्रः । यथा वृक्षो मूलैस्तिष्ठति प्रासादः स्तम्भैर्ध्रियत इति । वैयाकरणास्तु—कर्तृप्रत्ययसमभिव्याहारे प्रधानभूतधात्वर्थाश्रयत्वं स्वक्रियाकारकप्रवर्तकत्वं वा स्वातन्त्र्यमिति वदन्ति । कर्तृप्रत्ययसमभिव्याहारे प्रधानभूतव्यापाराश्रयत्वेन दृष्टः प्रकृतधात्वर्थव्यापाराश्रयः कर्तेति च ।

१ ख. ङ. °मेया च । २ °त्मा प्रमेयम् ।

तीति दर्शनेनाऽऽप्तुमिष्यमाणतमत्वा*त्कर्म वृक्षेण चन्द्रमसं ज्ञापयतीति ज्ञापकस्य साधकतमत्वात्करणम्+ । वृक्षायोदकमासिञ्चतीति आसिच्यमानेनोदकेन वृक्षमभिप्रैतीति संप्र×दानम् । वृक्षा-

रिच्छेदकत्वात्प्रमाणव्यवहारस्तुलान्तरेण च तदीयगुरुत्वेयत्तापरिच्छेदे च प्रमेयव्यवहारस्तथा निमित्तद्वयसमावेशादिन्द्रियादेरपि प्रमाणप्रमेयव्यवहार इति । यद्वा प्रमाणता प्रमेयता च प्रमावैशिष्ट्यादिति यत्प्रागाशङ्कितं तत्राऽऽह—प्रमे-

* कर्मत्वं नाम कर्तृव्यापाराविष्टत्वे सति प्रकृतधातूपात्तप्रधानभूतव्यापारजन्यफलाश्रयत्वम् । प्रकृते च विषयत्वापत्त्यनुकूलो व्यापारो दृशेरर्थः । विषयत्वापत्तिश्च वृक्षे वर्तत इति तस्य कर्मत्वं बोध्यम् । तथा च शाब्दबोधः—वृक्षनिष्ठविषयत्वापत्त्यनुकूलव्यापारानुकूलकृतिमान्देवदत्तः । वैयाकरणास्तु—देवदत्ताभिन्नलडर्थकर्तृनिष्ठो वृक्षनिष्ठविषयत्वापत्त्यनुकूलो व्यापार इति वदन्ति । तेषामयमाशयः—'भावप्रधानमाख्यातं सत्त्वप्रधानानि' इति व्युत्पत्त्यनुरोधाद्धात्वर्थस्यैव प्राधान्यमुचितमिति । परं तु नैतद्युक्तमिति नैयायिका वदन्ति । तथा हि—वाच्यतावच्छेदकलाघवानुरोधेन कृतावेव लकारस्य शक्तिः । किं च प्रकृतिप्रत्ययार्थयोमध्ये प्रत्ययार्थस्य प्राधान्यामात व्युत्पत्त्यनुरोधेन कृतेः प्राधान्यं सा च कर्तारं प्रति प्रकारीभूयैव भासत इत्यन्यदेतत् । भावप्रधानेत्यत्र भावस्य प्रधानमित्यर्थेन न तद्विरोधः । एवं च प्रथमान्तार्थमुख्य एव शाब्दबोध उचित इति ।

\+ करणत्वं नाम यत्किंचिन्निष्ठव्यापारप्रयोज्ययन्निष्ठव्यापाराव्यवहितोत्तरक्रियानिष्पत्तिस्तत्त्वम् । प्रकृते च यज्ञदत्तो देवदत्तं वृक्षेण चन्द्रमसं ज्ञापयतीति प्रयोगः । तत्र विषयत्वापत्त्यनुकूलव्यापारानुकूलव्यापारो ज्ञापेरर्थः । वृक्षे च साधकतमत्वरूपोऽर्थ आनन्तर्यप्रतिपत्तिविषयतासंबन्धेन । एवं च वृक्षं गृहीत्वा चन्द्रमसं ज्ञापयत इति वृक्षः करणम् । तथा च शाब्दबोधः—चन्द्रमोनिष्ठविषयत्वापत्त्यनुकूलवृक्षनिष्ठानन्तर्यप्रतिपत्त्यनुकूलदेवदत्तनिष्ठव्यापारानुकूलव्यापारजनककृतिमान्यज्ञदत्तः । वैयाकरणास्तु—चन्द्रमोनिष्ठविषयत्वापत्त्यनुकूलवृक्षनिष्ठानन्तर्यप्रतिपत्त्यनुकूलदेवदत्तनिष्ठव्यापारानुकूलो यज्ञदत्ताभिन्नलडर्थकर्तृनिष्ठो व्यापार इति ब्रुवन्ति । × संप्रदानत्वं नाम कर्मसंबन्धित्वेनेच्छाविषयत्वम् । आसिच्यमानं जलं कर्म । तेन वृक्षं संबन्धुमिच्छतीति वृक्षः संप्रदानं भवतीति बोध्यम् । तच्च त्रिविधम्—अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते संप्रदानताम् ॥ इति ।

त्पर्णं पततीति ध्रुवमपायेऽपा*दानमित्यपादानम् । वृक्षे वयांसि सन्तीत्याधारोऽधि+करणमित्यधिकरणम् । एवं च सति न द्रव्यमात्रं कारकं न क्रियामात्रं किं तर्हि क्रियासाधनं क्रियाविशेषयुक्तं कारकम् । यः क्रियासाधनं स्वतन्त्रः स कर्ता न द्रव्यमात्रं न क्रियामात्रम् । क्रियया ह्याप्तुमिष्यमाणतमं ×कर्म न

---

यता चेति । यथा कदाचिद्गुरुत्वेयत्तापरिच्छेदकत्वात्तुलायाः प्रमाणव्यवहार-

---

* अपाये नाम गतिविशेषे सति यद्ध्रुवं नामावधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयं तदपादानमिति सूत्रार्थः । अत्रेदमवधेयम् । पततिः सकर्मकोऽकर्मकश्च । तथा हि——अपादानत्वशक्तिर्हि प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति अपादानसमभिव्याहारे विभागस्यापि धात्वर्थत्वेन विभागपूर्वकसंयोगानुकूलो व्यापार इति यदा पततेरर्थस्तदा तस्य सकर्मकत्वेन वृक्षात्पर्णं भूमिं पततीति प्रयोगः । यदि च विभागपूर्वकः संयोग एव धात्वर्थस्तदा तस्याकर्मकत्वेन वृक्षात्पर्णं भूमौ पततीति प्रयोगः । यदा चापादानत्वस्याविवक्षा तदा संयोगमात्रार्थत्वेऽकर्मकत्वेन वृक्षस्य पर्णं भूमौ पततीति प्रयोगः । यदा तु संयोगानुकूलो व्यापार इत्यर्थस्तदा तस्य सकर्मकत्वेन वृक्षस्य पर्णं भूमिं पततीति प्रयोगः । तच्चापादानं त्रिविधम्——निर्दिष्टविषयं किंचिदुपात्तविषयं तथा । अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते ॥ इति वाक्यपदीयात् । आद्योदाहरणं यथा—अश्वात्पतति । बलाहकाद्विद्योतते विद्युदिति द्वितीयस्योदाहरणम् । अन्त्यस्योदाहरणं तु कुतो भवान्पाटलिपुत्रादिति । एवं चापगच्छति सति यदवतिष्ठते तदपादानमिति फलितम् । यत्पतति तदपगच्छति । तस्मिन्नपगच्छति सति वृक्षोऽवतिष्ठत इति तस्यापादानत्वं बोध्यम् ।
+ कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् । उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् । एतच्च त्रिविधम्—औपश्लेषिकं वैषयिकमभिव्यापकं चेति । क्रमेणोदाहरणानि कटे शेते मोक्ष इच्छाऽस्ति तिलेषु तैलमिति । × एतच्च सप्तविधम् । तथा हि कर्म द्विविधमीप्सिततमं तद्भिन्नं च । आद्यं त्रिधा निर्वर्त्यं विकार्यं प्राप्यं चेति भेदात् । अन्त्यं तु चतुर्धा—औदासीन्येन प्राप्यं कर्तुरनीप्सितं संज्ञान्तरैरनाख्यातमन्यपूर्वकं चेति भेदात् । क्रमेणोदाहरणानि घटं करोतीत्याद्यम् । काष्ठं भस्म करोतीति द्वितीयम् । घटं पश्यतीति तृतीयम् । तृणं स्पृशतीत्युदासीनम् । चोरान्पश्यतीति द्वेष्योदाहरणं विषयेन्द्रियसंबन्धाद्दृश्यमाना अपि न दर्शनोद्देश्या अपि तु अनिष्टदर्शना एव । संज्ञान्तरैरनाख्यातं गां दोग्धीति । क्रूरमभिक्रुध्यतीत्यन्यपूर्वकम् । इति बोध्यम् ।

---

१ क. ग. ङ. च. °म् । यत्क्रिया° ।

द्रव्यमात्रं न क्रियामात्रम् । एवं * साधकतमादिष्वपि । एवं च कारकान्वाख्यानं यथैवोपपत्तित एवं लक्षणतः । कारकान्वाख्यानमपि न द्रव्यमात्रेण न क्रियया वा किं तर्हि क्रियासाधने क्रियाविशेषे युक्त इति । कारकशब्दश्चायं प्रमाणं प्रमेयमिति स च कारकधर्मं न हातुमर्हति । अस्ति च भोः कारकशब्दानां निमित्तवशात्समावेशः । प्रत्यक्षादीनि च प्रमाणानि उपलब्धिहेतुत्वात्प्रमेयं चोपलब्धिविषयत्वात् । संवेद्यानि[2] च प्रत्यक्षादीनि प्रत्यक्षेणोपलभे[3]ऽनुमानेनोपलभ[4] उपमानेनोपलभ[5] आगमेनोपलभे प्रत्यक्षं मे ज्ञानमानुमानिकं मे ज्ञानमौपमानिकं मे ज्ञानमागमिकं मे ज्ञानमिति विशेषा गृह्यन्ते । लक्षणतश्च ज्ञाप्यमानानि ज्ञापयन्त्येवं विशेषेन्द्रियार्थसंनिकर्षोत्पन्नज्ञानमित्येवमादिना ॥ १६ ॥

भा०—सेयमुपलब्धिः प्रत्यक्षादिविषया किं प्रमाणान्तरतोऽथान्तरेण प्रमाणान्तरमसाधनेनेति कश्चात्र विशेषः—

**प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिः प्रसङ्गः ॥ १७ ॥**

यदि प्रत्यक्षादीनि प्रमाणेनोपलभ्यन्ते येन प्रमाणेनोपलभ्यन्ते तत्प्रमाणान्तरमस्तीति प्रमाणान्तरसद्भावः प्रसज्यत इति अनव-

---

स्तथेन्द्रियघटादेरपि प्रमाणप्रमेयव्यवहार इति ॥ १६ ॥

वृ०—अनवस्थया प्रत्यवस्थानमपरं पूर्वपक्षसूत्रम् । प्रमाणानां प्रमाणतः सिद्धेः स्वीकारे प्रमाणान्तरस्वीकारः स्यात् । तथा हि प्रमाणस्य तावन्न स्वतः सिद्धिः । आत्माश्रयापत्तेः । अतः प्रमाणान्तरं स्वीकार्यम् । तयोश्च परस्पर-

---

* उक्तं च वाक्यपदीये—क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥ वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् । स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ इति ।

---

१ क ग. च. °कार्थान्वा° । २ ग. संबन्धानि । ३ ग. °क्षेण नोप° । ४ ग. °नेन नो° । ५ ग. °नेन नो° ।

स्थामाह तस्याप्यन्येन तस्याप्यन्येनेति । न चानवस्था शक्याऽनुज्ञातुमनुपपत्तेरिति ॥ १७ ॥

भा०-अस्तु तर्हि प्रमाणान्तरमन्तरेण निःसाधनेति—

तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत्प्रमेयसिद्धिः ॥ १८ ॥

यदि प्रत्यक्षाद्युपलब्धौ प्रमाणान्तरं निवर्तत आत्माद्युपलब्धावपि प्रमाणान्तरं निवर्त्स्यत्यविशेषात् ॥ १८ ॥

भा०-एवं च सर्वप्रमाणविलोप इत्यत आह—

न प्रदीपप्रकाशवत्तत्सिद्धेः* ॥ १९ ॥

यथा प्रदीपप्रकाशः प्रत्यक्षाङ्गत्वाद्दृश्यदर्शने प्रमाणं स च प्रत्यक्षान्तरेण चक्षुषः संनिकर्षेण गृह्यते । प्रदीपभावाभाव-

---

साधकत्वेऽन्योन्याश्रयापत्तिरतस्तत्रापि प्रमाणान्तरमङ्गीकार्यमित्येवमनवस्थेति भावः ॥ १७ ॥

वृ०-ननु प्रमाणसिद्धिः प्रमाणं विनैव स्यादित्यत्राऽऽह । यदि च प्रमाणविनिवृत्तितः प्रमाणव्यतिरेकात्प्रमाणसिद्धिः स्वी क्रियते तदा तद्वदेव तत्सिद्धिः स्वी क्रियतां किं प्रमाणाङ्गीकारेण । तथा चाव्यवस्थितमेव जगत्स्यादिति शून्यतायां पर्यवसानमिति भावः ॥ १८ ॥

वृ०-सिद्धान्तसूत्रम् । यथा हि प्रदीपालोकाद्घटादिप्रकाशस्तथा प्रमाणानां प्रमेयप्रकाशकत्वम् । अन्यथा प्रदीपस्य घटप्रकाशकत्वम्, प्रदीपप्रकाशकं चक्षुः, तज्ज्ञापकमन्यत्, इत्यनवस्थाभयात्प्रदीपोऽपि न घटप्रकाशकः स्यात् । यदि च

---

* अयं भावः—यथा प्रदीपप्रकाशो घटाद्युपलब्धिसाधनाङ्गत्वात्प्रमाणम् । किं च प्रत्यक्षादिभिरेव स उपलभ्यते नासौ स्वोपलब्धौ प्रत्यक्षादिव्यतिरिक्तं प्रमाणं प्रयोजयति किंतु तैरेवोपलभ्यते तथा प्रमाणान्यपि प्रत्यक्षादिभिरेवोपलभ्यन्ते । एतच्चानुमानाल्लभ्यते । तथा हि—विमतानि प्रत्यक्षादीनि स्वोपलब्धौ प्रमाणान्तराप्रयोजकानि परिच्छेदसाधनत्वात्प्रदीपवदिति ।

---

१ क. ग. च. °प्यन्यतरस्था° । २ क. ख. ग घ. च. °माणान्तरसि° । ३ क. ङ. च. आत्मेत्युप° ।

योर्दर्शनस्य तथाभावाद्दर्शनहेतुरनुमीयते । तमसि प्रदीपमुपादधीथा इत्याप्तोपदेशेनापि प्रतिपद्यते, एवं प्रत्यक्षादीनां यथादर्शनं प्रत्यक्षादिभिरेवोपलब्धिः । इन्द्रियाणि तावत्स्वविषयग्रहणेनैवा-नुमीयन्ते । अर्थाः प्रत्यक्षतो गृह्यन्ते । इद्रियार्थसंनिकर्षास्त्वावर-णेन लिङ्गेनानुमीयन्ते । इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमात्ममनसोः संयोगविशेषादात्मसमवायाच्च सुखादिवद्गृह्यते । एवं प्रमाण-विशेषो विभज्य वचनीयः । यथा च दृश्यः सन्प्रदीपप्रकाशो दृश्यान्तराणां दर्शनहेतुरिति दृश्यदर्शनव्यवस्थां लभते, एवं प्रमेयं सत्किंचिदर्थजातमुपलब्धिहेतुत्वात्प्रमाणप्रमेयव्यवस्थां लभते । सेयं प्रत्यक्षादिरेव प्रत्यक्षादीनां यथादर्शनमुपलब्धिर्न प्रमाणान्तरतो न प्रमाणान्तरेण निःसाधनेति ।

तेनैव तस्याग्रहणमिति चेन्नार्थभेदस्य लक्षणसामान्यात् ।

प्रत्यक्षादीनां प्रत्यक्षादिभिरेव ग्रहणमित्ययुक्तमन्येन ह्यन्यस्य ग्रहणं दृष्टमिति । न । अर्थभेदस्य लक्षणसामान्यात् । प्रत्यक्ष-लक्षणेनानेकोऽर्थः संगृहीतः । तत्र केनचित्कस्यचिद्ग्रहणमित्य-दोषः । एवमनुमानादिष्वपीति । यथोद्धृतेनोदकेनाऽऽशयस्थस्य ग्रह*णमिति ।

ज्ञातृमनसोश्च दर्शनात् । अहं सुख्यहं दुःखी चेति तेनैव ज्ञात्रा तस्यैव ग्रहणं दृश्यते । 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' ( १ । १ । १६ ) इति च तेनैव मनसा तस्यैवानुमानं दृश्यते ज्ञातुर्ज्ञेयस्य चाभेदो ग्रहणस्य ग्राह्यस्य चाभेद इति ।

---

घटप्रत्यक्षे तत्तत्प्रकाशकानां नापेक्षेति नानवस्थेत्युच्यते तदा प्रकृतेऽपि तुल्यम् । न हि प्रमाणात्प्रमेयसिद्धौ प्रमाणसिद्धिरपेक्षिता यदा च प्रमाणसि-द्धिरपेक्षिता तदा तत्रापि प्रमाणमपेक्ष्यताम् । तच्चानुमानादिकमेवेति न प्रमा-णान्तरकल्पना न वाऽनवस्था । सर्वत्र प्रमाणसिद्धेरनपेक्षितत्वात् । क्वचिद्बी-जाङ्कुरवदपेक्षाऽपि न क्षतिकरीति भावः । प्रदीपस्य प्रदीपान्तरं विना प्रका-

---

* यथोद्धृतजलापेक्षयाऽऽशयस्थस्य जलस्यान्यत्वान्न तेनैव तस्य ग्रहणं तथेहापीत्यर्थः ।

---

१ क. ख. ग. घ. च. °मित्युक्त° । २ ङ. ग्राहकस्य ।

निमित्तभेदोऽत्रेति चेत्सक्ष्मानम्*। न निमित्तान्तरेण विना ज्ञाताऽऽत्मानं जानीते न च निमित्तान्तरेण विना मनसा मनो गृह्यत इति। समानमेतत्—प्रत्यक्षादिभिः प्रत्यक्षादीनां ग्रहणमित्यत्राप्यर्थभेदो गृह्यत इति।

प्रत्यक्षादीनां चाविषयस्यानुपपत्तेः। यदि स्यात्किंचिदर्थजातं प्रत्यक्षादीनामविषयः, यत्प्रत्यक्षादिभिर्न ग्रहीतुं शक्यं तस्य ग्रहणाय प्रमाणान्तरमुपादीयेत तत्तु न शक्यं केनचिदुपपादयितुमिति। प्रत्यक्षादीनां यथादर्शनमेवेदं सच्चासच्च सर्वं विषय इति।

केचित्तु दृष्टान्तमपरिगृहीतं हेतुना विशेषहेतुमन्तरेण साध्यसाधनायोपाददते। यथा प्रदीपप्रकाशः प्रदीपान्तरप्रकाशमन्तरेण गृह्यते तथा प्रमाणानि प्रमाणान्तरमन्तरेण गृह्यन्त इति स चायम्—

क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनेकान्तः।

यथाऽयं प्रसङ्गो निवृत्तिदर्शनात्प्रमाणसाधनायोपादीयत एवं प्रमेयसाधनायाप्युपादेयोऽविशेषहेतुत्वात्। यथा स्थाल्यादिरूपग्रहणे प्रदीपप्रकाशः प्रमेयसाधनायोपादीयत एवं प्रमाणसाधनायाप्युपादेयो विशेषहेत्वभावात्। सोऽयं विशेषहेतुपरिग्रहमन्तरेण दृष्टान्त एकस्मिन्पक्ष उपादेयो न प्रतिपक्ष इत्यनेकान्तः। एकस्मिंश्च पक्षे दृष्टान्त[2] इत्यनेकान्तो विशेषहेत्वभा[3]=वादिति।

---

शकत्ववत्प्रमाणानामपि प्रमाणमन्तरेणैव प्रमेयप्रकाशकत्वमिति सूत्रार्थं केचन मन्यन्ते तान्प्रत्याह भाष्यकारः—"क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिद-

---

* ज्ञाता हि यथा सुखादिसंबन्धापेक्षस्तद्विशेषणमात्मानं प्रतिपद्यतेऽहं सुख्यहं दुःखी चेति तथा प्रमाणमपि प्रमाणविषयत्वेनावतिष्ठमानं प्रमेयं भवतीति भावः। = अयमाशयः—प्रदीपप्रकाशदृष्टान्तोऽयं प्रमाणपक्षे भवतु मा भूत्प्रमेयपक्ष इत्यत्र कश्चिद्धेतुर्वक्तव्यः। तथा प्रदीपप्रकाशो दृष्टान्तो भवतु मा भूत्स्थाल्यादिदृष्टान्त इत्यत्रापि हेतुर्वाच्यः। एवं चायमुभयथाऽनेकान्तो विना हेतुमदृष्टान्तः संपन्न इति।

---

१ क. ग. ङ. च. °दो न गृ°। २ क. ग. °न्त उपादेयो न प्रतिपक्षे दृष्टान्त इ°। ३ क. ग. °हेतुत्वाभा°।

विशेषहेतुपरिग्रहे सति उपसंहाराभ्यनुज्ञानादप्रतिषेधः । विशे*षहेतुपरिगृहीतस्तु दृष्टान्त एकस्मिन्पक्ष उपसंह्रियमाणो न शक्यो ज्ञातुम् । एवं च सत्यनेकान्त इत्ययं प्रतिषेधो न भवति ।

प्रत्यक्षादीनां प्रत्यक्षादिभिरुपलब्धावनवस्थेति + चेन्न संविद्विषयनिमित्तानामुपलब्ध्या व्यवहारोपपत्तेः । प्रत्यक्षेणार्थमुपलभेऽनुमानेनार्थमुपलभ उपमानेनार्थमुपलभ आगमेनार्थमुपलभ इति प्रत्यक्षं मे ज्ञानमानुमानिकं मे ज्ञानमौपमिकं मे ज्ञानमागमिकं मे ज्ञानमिति संविद्विषयं संविन्निमित्तं चोपलभमानस्य धर्मार्थसुखापवर्गप्रयोजनस्तत्प्रत्यनीकपरिवर्जनप्रयोजनश्च व्यवहार उपपद्यते । सोऽयं तावत्येव निवर्तते । न चास्ति व्यव=हारान्तरमनवस्थासाधनीयं येन प्रयुक्तोऽनवस्थामुपाददीतेति ॥ १९ ॥

इति प्रमाणसामान्यपरीक्षाप्रकरणम् ॥ २ ॥

---

नेकान्तः" । ( २ । १ । १९ । भा० व० ) क्वचित्प्रदीपादौ प्रमाणान्तरान्निवृत्तिदर्शनात्क्वचिद्घटादौ प्रमाणान्तरादनिवृत्तिदर्शनात्प्रमाणान्तरापेक्षादर्शनात्त्वदीयो हेतुरनेकान्तोऽनियतः । तथा च प्रदीपदृष्टान्तात्प्रमाणान्तरापेक्षा निवृत्तिः साध्यते घटदृष्टान्तेन प्रमाणान्तरापेक्षैव किं न तत्र साध्यते । तथा च दृष्टान्तसमा जातिरियमिति भावः । तद्व्याख्याने कथं नानैकान्त इत्यत्राऽऽह भाष्यकारः—" विशेषहेतुपरिग्रहे सति उपसंहाराभ्यनुज्ञानादप्रतिषेधः " ( २।१।१९। भा० व० ) । मन्मते विशेषहेतौ व्याप्तिपक्षधर्मताश्रयस्य परिग्रहे सति उपसंहारस्य साध्यसाधनस्याभ्यनुज्ञानादुक्तानैकात्मकः प्रतिषेधो न भवति ॥ १९ ॥

इति प्रमाणसामान्यपरीक्षाप्रकरणम् ॥ २ ॥

---

* प्रकाशत्वादिविशेषहेतुना परिगृहीतः संगृहीत इत्यर्थः । + प्रत्यक्षादीनि प्रमाणानि यदि प्रत्यक्षाद्यन्तरैरुपलभ्यन्ते तर्हि तान्यपि अन्यैरित्यनवस्था प्राप्नोति । सत्यां चानवस्थायामाद्यप्रमाणाधिगमो नैव स्यात् । अथ व्यवस्थाऽस्तीति चेत् । आद्यप्रमाणाधिगमोऽप्रमाणः प्रसज्येतेति भावः । = व्यवसायज्ञानेन घटादिविषये प्रकाशिते सति अनुव्यवसायेन च तज्ज्ञाने प्रकाशिते तावतैव सर्वव्यवहारोपपत्तौ पुनरनुव्यवसायप्रकाशनाय ज्ञानान्तरं नापेक्ष्यत इति नास्त्यनवस्थेति तात्पर्यं बोध्यम् ।

भा०—सामान्येन प्रमाणानि परीक्ष्य विशेषेण परीक्ष्यन्ते । तत्र—

प्रत्यक्षलक्षणानुपपत्तिरस-
मग्रवचनात् ॥ २० ॥

आत्ममनःसंनिकर्षो हि कारणान्तरं नोक्तमिति । न चासंयुक्ते द्रव्ये संयोगजन्यगुणस्योत्पत्तिरिति । ज्ञानोत्पत्तिदर्शनादात्ममनःसंनिकर्षः कारणम् । मनःसंनिकर्षानपेक्षस्य चेन्द्रियार्थसंनिकर्षस्य ज्ञानकारणत्वे युगपदुत्पद्येरन्बुद्धय इति मनःसंनिकर्षोऽपि कारणम् । तदिदं सू*त्रं पुरस्तात्कृतभाष्यम् ॥ २० ॥

नाऽऽत्ममनसोः संनिकर्षाभावे
प्रत्यक्षोत्पत्तिः ॥ २१ ॥

भा०—आत्ममनसोः संनिकर्षाभावे नोत्पद्यते प्रत्यक्षमिन्द्रियार्थसंनिकर्षाभाववदिति । सति चेन्द्रियार्थसंनिकर्षे ज्ञानोत्पत्तिदर्शनात्कारणभावं ब्रुवते ॥ २१ ॥

---

वृ०—प्रमाणसामान्यपरीक्षानन्तरं प्रमाणविशेषेषु परीक्षणीयेषु प्रथमोद्दिष्टं प्रत्यक्षं परीक्षणीयम् । तत्र च फलद्वारकमेव लक्षणं पूर्वमुक्तमतः फललक्षणं यथाश्रुतमाक्षिपति । प्रत्यक्षस्य यल्लक्षणमिन्द्रियार्थसंनिकर्षोत्पन्नत्वं तन्नोपपद्यतेऽसमग्रवचनात् । अयमर्थः—प्रत्यक्षस्य कारणघटितं लक्षणमभिहितं तत्र कारणकलापघटितायाः सामग्र्या विनिवेशनमतिव्याप्तिनिरासकं तच्च नाभिहितम् । असमग्रमिन्द्रियार्थसंनिकर्षजन्यत्वमात्रं ह्यभिहितम् । आत्ममनःसंयोगेन्द्रियमनःसंयोगादिकं तु नाभिहितम् । तथा चाऽऽत्ममनःसंयोगरूपेन्द्रियार्थसंयोगजन्यतयाऽनुमित्यादावतिव्याप्तिरित्यर्थः ॥ २० ॥

वृ०—नन्वात्ममनोयोगादेः कारणत्वमेव नास्तीत्याशङ्कायामाह । शरीरावच्छिन्नस्याऽऽत्मनो मनसा यः संनिकर्षस्तदभावे न प्रत्यक्षोत्पत्तिर्यतोऽत आत्ममनःसंयोगस्य कारणत्वमावश्यकम् । प्रत्यक्षोत्पत्तिरिति प्रकृतं ज्ञानोत्पत्तिरिति विवक्षितम् ॥ २१ ॥

---

* 'इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' ( १ । १ । ४ ) इति सूत्रस्य व्याख्यानं प्रथमाध्याये कृतमित्यर्थः । आत्ममनःसंनिकर्षस्य ज्ञानान्तरसाधारणत्वादिन्द्रियमनःसंयोगस्यासाधारणत्वेऽपि सूत्रस्य कारणान्तरनिषेधे तात्पर्याभावादिन्द्रियार्थसंनिकर्षमात्रघटितमुक्तमिति भावः ।

दिग्देशकालाकाशेष्व-
प्येवं प्रसङ्गः ॥ २२ ॥

भा०—दिगादिषु सत्सु ज्ञानभावात्तान्यपि कारणानीति ।

अकारणभावेऽपि ज्ञानोत्पत्तिर्दिगादिसंनिधेरवर्जनीयत्वात् ।

यदाऽप्यकारणं दिगादीनि ज्ञानोत्पत्तौ तदाऽपि सत्सु दिगादिषु ज्ञानेन भवितव्यं न हि दिगादीनां संनिधिः शक्यः परिवर्जयितु-मिति ।

तत्र * कार[1]णभावे हेतुवचनमेतस्माद्धेतोर्दिगादीनि ज्ञानकार-णानीति ॥ २२ ॥

भा०—आत्ममनःसंनिकर्षस्तर्ह्युपसंख्येय इति तत्रेदमुच्यते—

ज्ञानलिङ्ग+त्वादात्मनो नानवरोधः ॥ २३ ॥

ज्ञानमात्मलिङ्गं तद्गुणत्वात् । न चासंयुक्ते द्रव्ये संयोगजस्य

वृ०—नन्वेवं दिगादीनामपि कारणत्वं स्यादित्याशङ्कते । यथाकथंचित्पौर्वापर्यस्य तत्रापि सत्त्वात्तेषामन्यथासिद्धिश्चेत्प्रकृतेऽप्येवम् ॥ २२ ॥

वृ०—अत्रोत्तरमभिधातुमाह । आत्मनोऽनवरोधोऽसंग्रहः कारणत्वेनेति न । कुतः । ज्ञानलिङ्गत्वात् । ज्ञानं लिङ्गं यस्य तत्तथा ज्ञानं हि भावकार्यं समवायिकारणं साधयति तच्च परिशेषादात्मैव । दिगादीनां कारणत्वे न मानमिति

* ननु केन पुनर्न्यायेन दिगादीनां ज्ञानकारणत्वाभाव इति चेत् । शृणु । सामर्थ्याभावात् । तथा हि—दिगादीनां व्यापकत्वान्नित्यत्वाच्च तत्सांनिध्यस्यावर्जनीयत्वेन संनिधिमात्रेण कारणत्वं नाऽऽशङ्कितुं युक्तम् । यथा रूपोपलब्धौ तेजसो रूपविशेषो हेतुः, न तु तस्य स्पर्शविशेषः । संनिधिमात्रेण सामर्थ्यस्यादर्शनात् । रूपस्य तु अन्वयव्यतिरेकाभ्यां सामर्थ्यं कृतम् । तस्माद्दिगादीनां सामर्थ्याभावान्न कारणत्वमिति भावः ।

+ 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति' ( १ । १ । १० ) इत्यस्मिन्सूत्रे ज्ञानमात्मलिङ्गमित्युक्तं तेनाऽऽत्ममनःसंयोगोऽनुक्तोऽप्यनुमेयो भवति । ज्ञानस्याऽऽत्मलिङ्गत्वं तु आत्मगुणत्वात् । आत्मगुणत्वं तु जन्यत्वे सति आत्मसमवेतत्वात्सुखादिवद्बोध्यम् । तथा च ज्ञानस्य संयोगजगुणत्वेन मनःसंयुक्तात्मसमवेतत्वं सिध्यति तदेव ध्वनयन्नाह—न चासंयुक्ते द्रव्ये संयोगजस्य गुणस्योत्पत्तिरस्तीति ।

१ ख. ग. घ. °रणाभा° ।

गुणस्योत्पत्तिरस्तीति ॥ २३ ॥

***तद्यौगपद्यालिङ्गत्वाच्च न मनसः ॥ २४ ॥**

भा०—अनवरोध इति वर्तते । 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' [ १ । १ । १६ ] इत्युच्यमाने सिध्यत्येव मनःसंकर्षापेक्ष इन्द्रियार्थसंनिकर्षो ज्ञानकारणमिति + ॥ २४ ॥

**प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः संनिकर्षस्य पृथग्वचनम् ॥ २५ ॥**

भा०—प्रत्य×क्षानुमानोपमानशब्दानां निमित्तमात्ममनःसंनिकर्षः,

---

भावः । इत्थं च समवायिकारणस्याऽऽत्मनो मनसा संयोगोऽसमवायिकारणमित्यप्यर्थात्सिद्धम् ॥ २३ ॥

वृ०—आत्मशरीरादिसंयोगस्य कुतो नासमवायिकारणत्वमित्यतो मनसः प्राधान्ये युक्तिमाह । नानवरोध इत्यनुवर्तते । इन्द्रियमनोयोगद्वारा ज्ञानायौगपद्यनियामकत्वान्मनसोऽपि हेतुत्वमावश्यकमिति शरीरमनोयोगादेश्च न तन्नियामकमिति भावः । इत्थं चाऽऽत्ममनःसंयोगस्यासमवायिकारणत्वं युक्तम् ॥ २४ ॥

वृ०—सिद्धान्तसूत्रम्—प्रत्यक्षनिमित्तत्वात्प्रत्यक्षासाधारणकारणत्वात् । अयमर्थः—प्रत्यक्षसूत्र इन्द्रियार्थसंनिकर्षाभिधानं हि न कारणाभिधित्सया येनाऽऽत्ममनोयोगाद्यनभिधानेन न्यूनत्वम् । अपि तु लक्षणाभिप्रायेण । तत्र च सामग्रीघटितस्येवासाधारणकारणघटितस्यापि लक्षणस्य सुवचत्वादिन्द्रियार्थसंनिकर्षस्य चासाधारणत्वात् । पृथग्वचनम्—आत्ममनःसंयोगादिसाधारणकारणाद्व्यवच्छिद्य लक्षणघटकतया वचनं युक्तम् । अयं भावः—इन्द्रियार्थसंनिकर्षत्वावच्छिन्नकारणताप्रतियोगिककार्यताशालित्वस्येन्द्रियत्वावच्छिन्नका-

---

* ननु इन्द्रियमनःसंनिकर्षो ज्ञानकारणत्वेन कुतो नोक्त इत्याशङ्कयाऽऽह—तद्यौगपद्येति । + 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' ( १ । १ । १६ ) इति सूत्रस्य मनःसिद्धिपरत्वेन मनःसंनिकर्षस्य ज्ञानकारणत्वं यद्यपि नोक्तं तथाऽपि ज्ञानस्य मनःपरतन्त्रत्वाभिधानद्वारा तद्धेतुकत्वावगमो भवतीति भावः । × प्रत्यक्षानुमित्युपमितिशाब्दानां ज्ञानानामात्ममनःसंनिकर्षो निमित्तमित्यर्थः ।

---

१ क. ङ. च. 'स्य स्वशब्देन वच° ।

प्रत्यक्षस्यैवेन्द्रियार्थसंनिकर्ष इति असमानः । असमानत्वात्तस्य ग्रहणम् ॥ २५ ॥

सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः
संनिकर्षनिमित्तत्वात् ॥ २६ ॥

भा०—इन्द्रियार्थसंनिकर्षस्य ग्रहणं नाऽऽत्ममनसोः संनिकर्षस्येति । एकदा खल्वयं प्रबोधकालं प्रणिधाय सुप्तः प्रणिधानवशात्प्रबुध्यते । यदा तु तीव्रौ ध्वनिस्पर्शौ प्रबोधकारणं भवतस्तदा प्रसुप्तस्येन्द्रियसंनिकर्षनिमित्तं प्रबोधज्ञानमुत्पद्यते । तत्र न ज्ञातुर्मनसश्च संनिकर्षस्य प्राधान्यं भवति किं तर्हीन्द्रियार्थयोः संनिकर्षस्य । न ह्यात्मा जिज्ञासमानः प्रयत्नेन मनस्तदा प्रेरयतीति । एकदा खल्वयं विषयान्तरासक्तमनाः संकल्पवशाद्विषयान्तरं जिज्ञासमानः प्रयत्नप्रेरितेन मनसेन्द्रियं संयोज्य तत्तद्विषयान्तरं जानीते । यदा तु खल्वस्य निःसंकल्पस्य निर्जिज्ञासस्य च व्यासक्तमनसो बाह्यविषयोपनिपातनाज्ज्ञानमुत्पद्यते तदेन्द्रियार्थसंनिकर्षस्य प्राधान्यम् । न ह्यत्रासौ जिज्ञासमानः प्रयत्नेन मनः प्रेरयतीति । प्राधान्याच्चेन्द्रियार्थसंनिकर्षस्य ग्रहणं कार्यं गुणत्वान्नाऽऽत्ममनसोः संनिकर्षस्येति ॥ २६ ॥

भा०—प्राधान्ये च हेत्वन्तरम्—

तैश्चापदेशो ज्ञानविशेषाणाम् ॥ २७ ॥

तैरिन्द्रियैरर्थैश्च व्यपदिश्यन्ते ज्ञानविशेषाः । कथम् । घ्राणेन

रणताप्रतियोगिककार्यताशालित्वस्य वा लक्षणस्य सम्यक्त्वे कृतमात्ममनोयोगाद्यनुप्रवेशेनेति । परिष्कृतं चेदमधस्तात् । इदं न सूत्रं किंतु भाष्यमिति केचित् ॥ २५ ॥

वृ०—समाध्यन्तरमाह । ज्ञानस्येति शेषः । सुप्तानां व्यासक्तमनसां च घनगर्जितादिना श्रोत्रसंनिकर्षाद्वह्न्यादिना त्वक्संनिकर्षाच्च द्रागेव ज्ञानोत्पत्तेरिन्द्रियार्थसंनिकर्षस्य प्राधान्यम् ॥ २६ ॥

वृ०—युक्त्यन्तरमाह । ज्ञानविशेषाणां तैरिन्द्रियार्थसंनिकर्षैरपदेशो विशेषणं

१ ग. प्रतिषेध[?] ।

जिघ्रति चक्षुषा पश्यति रसनया रसयतीति घ्राणविज्ञानं चक्षुर्विज्ञानं गन्धविज्ञानं रूपविज्ञान रसविज्ञानमिति च। इन्द्रियविषयविशेषाच्च पञ्चधा बुद्धिर्भवति अतः प्राधान्यमिन्द्रियार्थसंनिकर्षस्येति ॥ २७ ॥

भा०—यदुक्तमिन्द्रियार्थसंनिकर्षग्रहणं कार्यं नाऽऽत्ममनसोः संनिकर्षस्येति। कस्मात्। सुप्तव्यासक्तमनसामिन्द्रियार्थयोः संनिकर्षस्य ज्ञाननिमित्तत्वादिति सोऽयम्—

व्याहतत्वादहेतुः * ॥ २८ ॥

यदि तावत्कचिदात्ममनसोः संनिकर्षस्य ज्ञानकारणत्वं नेष्यते तदा 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' (१।१।१६) इति व्याहन्येत[1]। नेदानीं मनसःसंनिकर्षमिन्द्रियार्थसंनिकर्षोऽपेक्षते मनःसंयोगानपेक्षायां च युगपज्ज्ञानोत्पत्तिप्रसङ्गः। अथ मा भूद्व्याघात इति सर्व[2]ज्ञानानामात्ममनसोः संनिकर्षः कारणमिष्यते। तदवस्थमेवेदं भवति ज्ञानकारणत्वादात्ममनसोः संनिकर्षस्य ग्रहणं कार्यमिति ॥ २८ ॥

---

व्यावृत्तिः। आत्ममनोयोगादिकं हि न व्यावर्तकं तज्जन्यत्वस्य ज्ञानान्तरसाधारणत्वात्। एवमिन्द्रियमनोयोगजत्वमपि न लक्षणं मानसेऽव्याप्तेः। परे तु—तैरिन्द्रियैर्ज्ञानविशेषाणां प्रत्यक्षविशेषाणामपदेशो भाषणं यतस्तेनेन्द्रियार्थसंनिकर्षस्य प्राधान्यम्। भाषन्ते हि चाक्षुषं प्रत्यक्षं रासनं प्रत्यक्षमितीत्याहुः। नव्यास्तु—प्रत्यक्षविशेषाणामिन्द्रियैरपदेशो यतोऽतश्चाक्षुषादिघटितविशेषलक्षणान्यपि संभवन्ति। चाक्षुषवृत्त्यनुमित्यवृत्तिजातिमत्त्वादीनि लक्षणान्तराण्यपि द्रष्टव्यानीत्याशयं वर्णयन्ति ॥ २७ ॥

वृ०—इन्द्रियार्थसंनिकर्षो न हेतुरन्वयव्यभिचारादित्याशयेन शङ्कते। गीतश्रवणादिकाले चक्षुर्घटसंयोगादौ विद्यमानेऽपि चाक्षुषादेर्व्याहतत्व इन्द्रियार्थसंयोगो न हेतुरित्यर्थः ॥ २८ ॥

---

* अनेन सूत्रेण प्रत्यक्षनिमित्तत्वादित्यादिसूत्रत्रयं प्रत्याख्यायत इति बोध्यम्।

---

१ क. ङ. च. °त। तदा°। २ ङ. 'र्वविशा°।

नार्थविशेषप्राबल्यात् * ॥ २९ ॥

भा०—नास्ति व्याघातो न ह्यात्ममनःसंनिकर्षस्य ज्ञानकारणत्वं व्यभिचरति । इन्द्रियार्थसंनिकर्षस्य प्राधान्यमुपादीयते । अर्थविशेषप्राबल्याद्धि सुप्तव्यासक्तमनसां ज्ञानोत्पत्तिरेकदा भवति[1] । अर्थविशेषः कश्चिदेवेन्द्रियार्थः । तस्य प्राबल्यं तीव्रतापटुते । तच्चार्थविशेषप्राबल्यमिन्द्रियार्थसंनिकर्षविषयं नाऽऽत्मनसोः संनिकर्षविषयं तस्मादिन्द्रियार्थसंनिकर्षः प्रधानमिति । असति प्रणिधाने संकल्पे चासति सुप्तव्यासक्तमनसां यदिन्द्रियार्थसंनिकर्षादुत्पद्यते ज्ञानं तत्र मनःसंयोगोऽपि कारणमिति मनसि क्रियाकारणं वाच्यमिति । यथैव ज्ञातुः खल्वयमिच्छाजनितः [2]प्रयत्नो [3]मनसः प्रेरक आत्मगुण एवमात्मनि गुणान्तरं सर्वस्य साधकं प्रवृत्तिदोषजनितमस्ति येन प्रेरितं मन इन्द्रियेण संबध्यते । तेन ह्यप्रेर्यमाणे मनसि संयोगाभावाज्ज्ञानानुत्पत्तौ सर्वार्थताऽस्य निवर्तते । एषितव्यं चास्य गुणान्तरस्य द्रव्यगुणकर्मकारकत्वम् । अन्यथा हि चतुर्विधानामणूनां भूतसूक्ष्माणां मनसां च ततोऽन्यस्य क्रियाहेतोरसंभवाच्छरीरेन्द्रियविषयाणामनुत्पत्तिप्रसङ्गः ॥ २९ ॥

---

वृ०—समाधत्ते । अर्थविशेषस्य गीतादेः प्राबल्याद्बुभुत्सितत्वाद्गीतादिश्रवणम् । तथा च गीतशुश्रूषादेश्चाक्षुषादिप्रतिबन्धकत्वात्प्रतिबन्धकाभावस्य च कार्यार्जकत्वात्तत्सहकारेण चेन्द्रियार्थसंनिकर्षस्य हेतुत्वमतः पूर्वपक्षो न युक्त इति । परे तु—इन्द्रियार्थसंनिकर्षस्य हेतुत्वमित्यत इन्द्रियमनोयोगादेरहेतुत्वमिति भ्रान्तः शङ्कते—व्याहतत्वादहेतुः—इन्द्रियार्थसंनिकर्षस्यैव हेतुत्वमित्यत्र यो हेतुरुक्तः स न युक्तः । कुतः । व्याहतत्वात्—इन्द्रियमनोयोगादेर्हेतुताया अभ्युपगमात्तद्व्याघातापत्तेः । भ्रमं खण्डयति—नार्थविशेषप्राबल्यात्—नास्ति व्याघातः । कुतः । अर्थविशेषस्येन्द्रियार्थस्य प्राधान्यात् । तथा चेन्द्रियार्थसंनिकर्षप्राधान्यार्थं हि पूर्वमुक्तं न त्वितरनिषेधार्थमिति ॥ २९ ॥

---

* प्रत्यक्षनिमित्तत्वादित्यादित्रिसूत्र्या नाऽऽत्ममनःसंयोगस्य कारणत्वं प्रतिषिध्यते किंतु इन्द्रियार्थसंनिकर्षस्य प्राबल्यं प्रतिपाद्यत इति तात्पर्यम् ।

---

१ ङ. °ते न चार्थ° । २ क. ग. ङ. प्रग्रहो म° । ३ ग. मनःप्रे° ।

***प्रत्यक्षमनुमानमेकदेशग्रह-**
**णादुपलब्धेः ॥ ३० ॥**

भा०—यदिदमिन्द्रियार्थसंनिकर्षादुत्पद्यते ज्ञानं वृक्ष इत्येतत्किल प्रत्यक्षं तत्खल्वनुमानमेव । कस्मात् । एकदेशग्रहणात् । वृक्षत्वोपलब्धेरर्वाग्भागमयं गृहीत्वा वृक्षमुपलभते न चैकदेशो वृक्षः । तत्र यथा धूमं गृहीत्वा वह्निमनुमिनोति तादृगेव तद्भवति किं पुनर्गृह्यमाणादेकदेशादर्थान्तरमनुमेयं मन्यसे । अवयवसमूहपक्षेऽवयवान्तराणि द्रव्योत्पत्तिपक्षे तानि चावयवी चेति । अवयवसमूहपक्षे तावदेकदेशग्रहणाद्वृक्षबुद्धेरभावः । नागृह्यमाणमेकदेशान्तरं वृक्षः, गृह्यमाणैकदेशव=दिति । अथैकदेशग्रहणादेकदेशान्तरानुमाने समुदायप्रतिसंधानात्तत्र वृक्षबुद्धिः । न तर्हि वृक्षबुद्धिरनुमानमेवं सति भवितु× मर्हति । द्रव्यान्तरोत्पत्तिपक्षे नाव-

---

वृ०—ननु सति प्रत्यक्षस्य प्रमाणान्तरत्वे तल्लक्षणपरीक्षा संगच्छते । तदेव तु नास्तीत्याशङ्कते । प्रत्यक्षत्वेनाभिमतं घटादिज्ञानमनुमानम्—अनुमितिः,

---

* एवं प्रत्यक्षलक्षणं ज्ञात्वा प्रत्यक्षस्यानुमानेऽन्तर्भावं कुर्वाण आह—प्रत्यक्षमनुमानमित्यादि । = अत्रेदं बोध्यम् । अवयवसमूहपक्षे वृक्षाविषयिका बुद्धिरुत्पद्यमाना निर्विषयैव । किं च परभागो मध्यभागोऽर्वाग्भाग इत्यपि नास्ति । अवयविनोरभावे सुतरामवयवत्वस्याभावात् । ननु एकदेश एवावयव इति चेत् । नैवम् । अवयविनो य आधारस्तस्यैवैकदेशपदार्थत्वेनावयव्यभावे तत्सापेक्षस्यैकदेशस्याप्यभावात् । न चाकार्यकारणभूतानां परस्परप्रत्यासत्त्योपकारादेकदेशावस्थानमवयवशब्दार्थ इति वाच्यम् । अकार्यकारणभूतानां परस्परोपकारस्य वक्तुमशक्यत्वादवयवत्वस्यानुपपत्तेरिति । × अत्रेदमवधेयम्—अवयवसमूहपक्षे परभागस्यार्वाग्भागस्य च वृक्षत्वाभावाद्वृक्षबुद्धेरभाव एव प्राप्नोति । न चैतत्पक्षेऽवयवान्तरानुमानमिति वाच्यम् । अवयवस्यावयवान्तरेण सहासंबन्धात्तज्ज्ञानाभावेन व्याप्तिज्ञानाभावादनुमेयत्वासंभवात् । अवयविनोऽपि अनभ्युपगमादेव पूर्ववदनुमेयत्वासंभवः । किं च पूर्वापरभागयोरवृक्षभूतयोर्वृक्ष इत्याकारकप्रतीतिविषयत्वोपगमे तादृशप्रतीतेर्भ्रान्तिरूपतया तस्याः प्रमाणजन्यत्वानुपपत्तिः । भ्रान्तेरपि अन्यत्र दृष्टस्यान्यप्रकारेण प्रतीतिरूपतया यथार्थस्य वृक्षप्रत्ययस्यानभ्युपगमे भ्रमस्याप्यसंभव इति ।

यव्यनुमेयः, अस्यैकदेशसंबन्धस्याग्रहणाद्ग्रहणे चाविशेषादनुमेयत्वाभावः । तस्माद्वृक्षबुद्धिरनुमानं न भवति* ॥ ३० ॥

भा०—एकदेशग्रहणमाश्रित्य प्रत्यक्षस्यानुमानत्वमुपपाद्यते तच्च—

न प्रत्यक्षेण यावत्तावदप्युपलम्भात् ॥ ३१ ॥

न प्रत्यक्षमनुमानम् । कस्मात् । प्रत्यक्षेणैवोपलम्भात् । यत्तदेकदेशग्रहणमाश्रीयते प्रत्यक्षेणासावुपलम्भः । न चोपलम्भो निर्विषयोऽस्ति । यावच्चार्थजातं तस्य विषयस्तावदभ्यनुज्ञायमानं प्रत्यक्षव्यवस्थापकं भवति । किं पुनस्ततोऽन्यदर्थजातमवयवी समुदायो वा । न चैकदेशग्रहणमनुमानं भावयितुं शक्यं हेत्वभावादिति ।

---

एकदेशस्य पुरोभागस्य ग्रहणानन्तरमुपलब्धेः । तथा चैकदेशग्रहणात्मकलिङ्गज्ञानजन्यत्वाद्वृक्षादिज्ञानमनुमितिरित्यर्थः ॥ ३० ॥

वृ०—समाधत्ते । प्रत्यक्षमनुमानमिति न—प्रत्यक्षत्वावच्छेदेनानुमितित्वं

---

* द्रव्यान्तरोत्पत्तिपक्षे भागस्येवावयविनोऽपीन्द्रियसंबद्धत्वाविशेषात्प्रत्यक्षस्यैव संभवः । यदि चावयवी न प्रत्यक्षयोग्य इत्युच्यते तर्हि तेन सह व्याप्तिग्रहणानुपपत्त्याऽनुमितेरसंभव एव । किं च परमाणूनामतीन्द्रियत्वादवयविनां च प्रत्यक्षानभ्युपगमाद्भागप्रत्यक्षस्याप्यसंभवः । अपि च प्रत्यक्षस्यानुमितित्वं वदतस्तवानुमितेरसंभव एव प्रत्यक्षपूर्वकत्वनियमादनुमितेः । न च सामान्यतो दृष्टानुमाने प्रत्यक्षपूर्वकत्वनियमस्य व्यभिचार इति वाच्यम् । तत्रापि प्रत्यक्षविषयतावच्छेदकव्यापकरूपयोरेव व्याप्यव्यापकभावग्रहेण तत्रापि प्रत्यक्षस्य सत्त्वान्नानुमितेः प्रत्यक्षपूर्वकत्वनियमे व्यभिचारः । यथा—इच्छादिभिरात्मनि साध्ये सतीति ( २१ ) पृष्ठे टिप्पण्यां स्पष्टम् । = प्रत्यक्षेण गृह्यमाणभागापेक्षयाऽवयवी समुदायो वेत्यर्थजातमन्यत्किमिति प्रश्नमुखेन नान्यदिति सूचयति । एवं चैकदेशप्रत्यक्षस्वीकारेण समुदायस्य प्रत्यक्षसिद्धेन प्रत्यक्षस्यानुमितावन्तर्भाव इति भावः ।

---

१ ग. °मानं प्र° ।

अन्यथाऽपि च प्रत्यक्षस्य नानुमानत्वप्रसङ्गस्तत्पूर्वकत्वात् ।

प्रत्यक्षपूर्वकमनुमानम् । संबद्धावग्निधूमौ प्रत्यक्षतो दृष्टवतो धूमप्रत्यक्षदर्शनादग्नावनुमानं भवति । यत्र च संबद्धयोर्लिङ्गलिङ्गिनोः प्रत्यक्षं यच्च लिङ्गमात्रप्रत्यक्षग्रहणं नैतदन्तरेणानुमानस्य प्रवृत्तिरस्ति । न त्वेतदनुमानमिन्द्रियार्थसंनिकर्षजत्वात् । न चानुमेयस्येन्द्रियेण संनिकर्षादनुमानं भवति । सोऽयं प्रत्यक्षानुमानयोर्लक्षणभेदो महानाश्रयितव्य इति ॥ ३१ ॥

## न चैकदेशोपलब्धिरवयविसद्भावात् ॥ ३२ ॥

भा०—न चैकदेशोपलब्धिमात्रम्, किं तर्ह्येकदेशोपलब्धिस्तत्सहचरितावयव्युपलब्धिश्च । कस्मात् । अवयविसद्भावात् । अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी । तस्यावयवस्थानस्योपलब्धिकारणप्राप्तस्यैकदेशोपलब्धावनुपलब्धिरनुपपन्नेति* ।

अकृत्स्नग्रहणादिति चेन्न कारणतोऽन्यस्यैकदेशस्याभावात् ।

न चावयवाः कृत्स्ना गृह्यन्ते । अवयवैरेवावयवान्तरव्यवधानान्ना-

---

नेत्यर्थः । यावत्तावदुपलम्भात्—यावत्तावत्तोऽपि यस्य कस्यचिद्भागस्य प्रत्यक्षेणेन्द्रियेणोपलम्भात् । उपलम्भस्य त्वयाऽप्यभ्युपगमात् । इदमुपलक्षणम् । शब्दगन्धादिप्रत्यक्षस्याऽऽवरणान्न प्रत्यक्षमात्रनिषेध इत्यपि बोध्यम् ॥ ३१ ॥

वृ०—यदपि वृक्षादिज्ञानस्यानुमितित्वमिति तदपि दूषयति । न च—न वेत्यर्थः । न चैकदेशस्यैवोपलब्धिरित्यपि युक्तम् । अवयविसद्भावात् । यतो

---

* महत्त्वादीनामुपलब्धिकारणानामेकदेशवदेकदेशिन्यपि सत्त्वादेकदेश उपलभ्यते नैकदेशीत्ययुक्तमिति भावः ।

वयवी कृत्स्नो गृह्यत इति । नायं गृह्यमाणेष्ववयवेषु परिसमाप्त इति सेयमेकदेशोपलब्धिरनिवृत्तैवेति । कृत्स्नमिति वै खल्वशेषतायां सत्यां भवति । अकृत्स्नमिति शेषे सति तच्चैतदवयवेषु बहुष्वस्ति अव्यवधाने ग्रहणाद्व्यवधाने चाग्रहणादिति । अङ्ग तु भवान्पृष्टो व्याचष्टां गृह्यमाणस्यावयविनः किमगृहीतं मन्यसे येनैकदेशोपलब्धिः स्यादिति । न ह्यस्य कारणेभ्योऽन्य एकदेशो भवतीति[2] तत्रावयववृत्तं नोपपद्यत इति । इदं त्वस्य वृत्तम्— येषामिन्द्रियसंनिकर्षाद्ग्रहणमवयवानां तैः सह गृह्यते येषामवयवानां व्यवधानादग्रहणं तैः सह न गृह्यते न चैतत्कृतोऽस्ति भेद इति ।

समुदा[4]यशेषता वा समुदायो वृक्षः स्यात्तत्प्राप्तिर्वोभयथा ग्रहणाभावः । मूलस्कन्धशाखापलाशादीनामशेषता वा समुदायो वृक्ष इति स्यात्प्राप्तिर्वा समुदायिनामिति उभयथा समुदायभूतस्य वृक्षस्य ग्रहणं नोपपद्यत इति । अवयवैस्तावदवयवान्तरस्य व्यवधानादशेषग्रहणं नोपपद्यते । प्राप्तिग्रहणमपि नोपपद्यते प्राप्तिमतामग्रहणात् । सेयमेकदेशग्रहणसहचरिता वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तौ कल्पते न समुदायमात्रमिति ॥ ३२ ॥

इति प्रत्यक्षपरीक्षाप्रकरणम् ॥ ३ ॥

---

ह्यवयव्यस्ति अतस्तदवयवप्रत्यक्षकालेऽवयविनोऽपि प्रत्यक्षं न व्याहतं तेनापि सह चक्षुःसंयोगादिसत्त्वादिति भावः ॥ ३२ ॥

इति प्रत्यक्षपरीक्षाप्रकरणम् ॥ ३ ॥

---

१ क. ग. च. °वृत्तेति । २ क. ग. ङ. च. °देशा भ° । ३ क. ग. ङ. च. °वन्तीति । ४ क. ग. ङ. च. °दायोऽप्यशे° ।

**साध्यत्वादवयविनि संदेहः * ॥ ३३ ॥**

भा०—यदुक्तमवयविसद्भावात्प्रामिमताम् । अयमहेतुः साध्यत्वात् । साध्यं तावदेतत् कारणेभ्यो द्रव्यान्तरमुत्पद्यत इति । अनुपपा-

---

वृ०—अवयविसद्भावादिति हेतुसाधनायोपोद्घातसंगत्याऽवयविप्रकरणमारभते । अत्र चावयविनि संदेहः साध्यत्वादिति यथाश्रुतार्थो न संगच्छते वह्न्यादौ व्यभिचारात् । तस्मादयमर्थः—अवयविनि साध्यत्वादसिद्धत्वात्संदेहोऽवयविसद्भावादित्युक्तहेतोः । तथा च संदिग्धासिद्धो हेतुरित्यर्थः । तत्र च द्रव्यत्वं स्पर्शवत्त्वं वाऽणुत्वव्याप्यं न वेत्यादयो विप्रतिपत्तयः । तत्र च सकम्पत्वाकम्पत्वरक्तत्वारक्तत्वावृतत्वानावृतत्वादिलक्षणविरुद्धधर्माध्यासादेकोऽवयवी न संभवति । तथा हि शाखावच्छेदेन कम्पो मूलावच्छेदेन तदभावोऽ-

---

* अयमाशयः—अत्र द्विविधं साध्यं संभवति अभेदोऽवयवी च । तथाहि—यथा गौर्नाश्वावयवोऽर्थान्तरत्वात्तथा तन्तवोऽपि न पटावयवा अर्थान्तरत्वात् । एवं चावयवावयविभावस्य वक्तुमशक्यत्वान्न तन्तुभ्योऽर्थान्तरं पटः । तथा च द्वयोरभेदः सिद्धः । तथाऽवयविसत्त्वेऽपि प्रमाणमस्ति । तथाहि—न कारणात्कार्यस्यानन्यत्वं संभवति विलक्षणबुद्धिबोध्यत्वात्, न खलु तन्तुपटमृत्पिण्डघटादिषु कार्यकारणविषया बुद्धिरेकरूपा । शब्दभेदाच्च कारणात्कार्यस्यानन्यत्वं न संभवति न हि तन्तवः पट इत्युच्यन्ते पटो वा तन्तव इति । कार्यभेदाच्च—न हि मृत्पिण्डेनोदकमाह्रियते घटेन वा कुड्यं निर्मीयते । कालभेदाच्च—पूर्वकाले च कारणमपरकाले च कार्यम् । आकारभेदाच्च—पिण्डाकारं कारणं पृथुबुध्नोदराकारं कार्यम् । संख्याभेदाच्च—बहवस्तन्तव एकश्च पटः । कारकव्यापारवैयर्थ्याच्च—कारणमेव चेत्कार्यं किं कारकव्यापारसाध्यं स्यात् । ननु सत्यपि कार्ये कार्योपयोगितया कारकव्यापारेण भवितव्यमिति चेत्, सर्वदा कारकव्यापारेण नोपरन्तव्यं स्यात् । सर्वस्य सर्वदा सत्त्वेन नित्यानित्यविभागश्च न स्यात् । ननु धर्मिणि विप्रतिपत्तेः सत्त्वाल्लिङ्गाभावः, न हि धर्मिणि विप्रतिपद्यमानः कुतश्चिदनुज्ञां लब्धुमर्हतीति चेत् । अत्रोच्यते । विप्रतिपत्तिर्नाम विपरीता प्रतिपत्तिः । सा हि समानधर्मोपलब्धावनधिगतविशेषे तद्विपरीतधर्माध्यारोपे सत्येव । एवं च समानधर्मोपलब्धिर्नाम सादृश्यज्ञानं तच्च विपरीतधर्माध्यारोपे कारणम्, आरोपश्च विप्रतिपत्तौ कारणं तथा च सादृश्यमूलिका विप्रतिपत्तिरिति सिद्धम् । न चानभ्युपगतावयविनोऽवयविनि सादृश्यं किंचिदस्ति येन विप्रतिपत्तिः स्यात् । तथा च विप्रतिपन्नो विरुद्धकल्पनां कर्तुं नैव प्रभवेत् । एवं च कारणात्कार्यस्यान्यत्वं सिद्धम् । तथा चाभेदस्यावयविनश्च सिद्धत्वात्संदेह इति ।

दितमेतन्न । एवं च सति विमतिपत्तिमात्रं भवति । विप्रतिपत्ते-श्चावयविनि संशय इति ॥ ३३ ॥

सर्वाग्रहणमवयव्यसिद्धेः ॥ ३४ ॥

भा०—यद्यवयवी नास्ति सर्वस्य ग्रहणं नोपपद्यते । किं तत्सर्वम् । द्रव्यगुणकर्मसामान्यविशेषसमवायाः । कथं कृत्वा । परमाणुस-मवस्थानं तावद्दर्शनविषयो न भवत्यतीन्द्रियत्वादणूनाम् । द्रव्यान्तरं चावयविभूतं दर्शनविषयो नास्ति दर्शनविषयस्थाश्चेमे द्रव्यादयो गृह्यन्ते । तेन निरधिष्ठाना न गृह्येरन् । गृह्यन्ते तु कुम्भोऽयं श्याम एको महान्संयुक्तः स्पन्दतेऽस्ति मृन्मयश्चेति सन्ति चेमे धर्मा इति । तेन सर्वस्य ग्रहणात्पश्यामोऽस्ति द्रव्यान्त-रभूतोऽवयवीति * ॥ ३४ ॥

---

प्युपलभ्यते । न चैकस्मिन्नेव द्रव्य एकदैव विरुद्धधर्मद्वयसमावेशः संभवति । तस्मादवयवा एव तथाभूता न त्वन्योऽवयवी मानाभावात् । एवं महारजनर-क्तैकदेशस्यांशुकस्य दशावच्छेदेनारक्तत्वोपलम्भात् । एवमावृतपृष्ठादेरनावृतत्वो-पलम्भादवसेयमिति बौद्धानां पूर्वपक्षः । अत्र च बौद्धानां पूर्वपक्षसूत्राणि वार्ति-ककृता लिखितानि च विस्तरभयान्न लिख्यन्ते ॥ ३३ ॥

वृ०—सिद्धान्तसूत्रम् । अवयविनोऽसिद्धौ तद्गुणकर्मादीनां सर्वेषामग्रहणम् । तथा च सकम्पाकम्पत्वरक्तारक्तत्वादिकमपि न सुग्रहं परमाणुगतत्वात्प्रत्यक्षे महत्त्वस्य हेतुत्वात् ॥ ३४ ॥

---

* सर्वाग्रहणमित्यत्र सर्वस्याग्रहणं सर्वैरग्रहणं चेति विग्रहद्वयं संभवति । तत्राऽऽद्य-विग्रहं गृहीत्वा भाष्यं प्रवृत्तम् । द्वितीयविग्रहाभिप्रायस्तु वर्ण्यते तथा हि—सर्वैर्नाम प्रत्य-क्षादिभिः सर्वैः प्रमाणैरित्यर्थः, अग्रहणं नाम पदार्थानामज्ञानं स्यात्, तत्र हेतुः ' अव-यव्यसिद्धेः ' इति । अयं भावः—प्रत्यक्षं हि वर्तमानमहद्विषयम् । अवयविप्रत्याख्याने तु महत्त्वाभावान्न बाह्यकरणप्रत्यक्षविषयोऽस्ति । तदभावाच्चानुमानादेरप्यभावः , अनु-मानादीनां प्रत्यक्षमूलत्वात् । उपलभ्यन्ते चार्थाः प्रत्यक्षादिभिः प्रमाणैः । सर्वैर्ग्रहणाच्च ज्ञायतेऽस्त्यवयवीति । तस्मादिदं सूत्रमवयव्यनभ्युपगमे विरोधप्रदर्शनपरमिति ।

---

१ ल. एवं न्याद्वृ' ।

धारणाकर्षणोपपत्तेश्च* ॥ ३५ ॥

भा०—अवयव्यर्थान्तरभूत इति। संग्रहकारिते वै धारणाकर्षणे। संग्रहो नाम संयोगसहचरितं गुणान्तरम्। स्नेहद्रवत्वकारितमपां संयोगादामे कुम्भे अग्निसंयोगात्पक्वे यदि = त्ववयविकारिते अभविष्यतां पांशुराशिप्रभृतिष्वप्यज्ञास्येताम्। द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु जतुसंगृहीतेष्वपि नाभविष्यतामिति। अथावयविनं प्रत्याचक्षाणको मा भूत्प्रत्यक्षलोप इत्यणुसंचयं दर्शनविषयं प्रतिजानानः किमनुयोक्तव्य इति। एकमिदं द्रव्यमित्येकबुद्धेर्विषयं पर्यनुयोज्यः किमेकबुद्धिरभिन्नार्थविषया, उत भिन्नार्थविषयेति। अभिन्नार्थविषयेति चेत्। अर्थान्तरानुज्ञानादवयवि-

---

वृ०—हेत्वन्तरमाह। अवयवेभ्योऽवयव्यतिरिच्यते। तथा सति धारणाक-

---

* अत्रेदं बोध्यम्—लोके निरवयवेऽवयवे च धारणाकर्षणयोरदर्शनाद्धारणाकर्षणे अवयविधर्मौ। अत एव ' एकदेशग्रहणसाहचर्ये सति अवयविनो देशान्तरप्राप्तिप्रतिषेधो धारणम्। तथा सति अवयविनो देशान्तरप्रापणमाकर्षणम् ' इत्यभियुक्तोक्तिरुपपद्यते। यत्त्वत्र भाष्यकारैरुक्तं धारणाकर्षणे संग्रहकारिते न त्ववयविकारिते पांशुराशिप्रभृतिषु अवयविनि सत्यपि तयोरभावाज्जतुसंगृहीतेषु तृणोपलकाष्ठादिषु च दर्शनादिति। तन्न सम्यगिति वार्तिककाराः। तथा हि—यत्र यत्रावयवी तत्र तत्र धारणाकर्षणे भवत एवेति न व्याप्तिं ब्रूमः, अपि तु यत्र धारणाकर्षणे तत्रावयवित्वमिति। अतो न पांशुराशिप्रभृतिषु अव्याप्तिः। किं च पांशुराशिप्रभृतिषु यो भवता संग्रहाभावे हेतुर्दीयते स एव मयाऽवयविनो विद्यमानस्य धारणाकर्षणाभावे दीयते। एवं च संग्रहकारिते धारणाकर्षणे इति न मन्तव्यमिति। = न तु संग्रहकारिते इति भावः। पांशुराशिप्रभृतिष्विति—अत्र संग्रहाभावेऽपि अवयविनः सत्त्वाद्धारणाकर्षणाभ्यां भाव्यमेवेत्याशयः। द्रव्यान्तरानुत्पत्तौ चेति-धारणाकर्षणयोः संग्रहकारितत्वस्वीकारान्नान्तरीयकतयाऽवयविनः स्वीकारः कर्तव्यः। अन्यथा जतुसंगृहीते तृण उपले काष्ठे च धारणाकर्षणे न स्यातामित्यर्थः।

---

१ क. ख. घ. च. °यवका°। २ ख. घ. °ज्ञास्यता°। ३ क. ग. च. जन्तुसं°। ४ क. ग. ङ. च. °या, आहो भि°।

सिद्धिः । नानार्थविषयेति चेत् । भिन्नेष्वेकदर्शनानुपपत्तिः । अनेकस्मिन्नेक इति व्याहता बुद्धिर्न दृश्यत इति ॥ ३५ ॥

सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ॥ ३६ ॥

भा०—यथा सेनाङ्गेषु वनाङ्गेषु च दूरादगृह्यमाणपृथक्त्वेष्वेकमिदमित्युपपद्यते बुद्धिः, एवमणुषु संचितेष्वगृह्यमाणपृथक्त्वेष्वेकमिदमित्युपपद्यते बुद्धिरिति । यथा गृह्यमाणपृथक्त्वानां सेनावनाङ्गानामारात्कारणान्तरतः पृथक्तस्याग्रहणम् । यथाऽगृह्यमाणजातीनां पलाश इति वा खादिर इति वा नाऽऽराज्जातिग्रहणं भवति । गृह्यमाणप्रस्पन्दानां नाऽऽरात्स्पन्दग्रहणम् । गृह्यमाणे चार्थजाते पृथक्तस्याग्रहणादेकमिति भाक्तः प्रत्ययो भवति, न त्व*णूनां गृह्यमाणपृथक्त्वानां कारणतः पृथक्त्वस्याग्रहणाद्भाक्त एकप्रत्ययः, अतीन्द्रियत्वादणूनामिति । इदमेव च परीक्ष्यते किमेकप्रत्ययोऽणुसंचयविषय आहोस्विन्नेति । अणुसंचय एव सेनावनाङ्गानि न च परीक्ष्यमाणमुदाहरणमिति युक्तं साध्यत्वादिति ।

---

र्षणयोरुपपत्तेः । अन्यथा परमाणुपुञ्जत्वे चैकदेशधारणेन सकलधारणमेकदेशाकर्षणेन सकलाकर्षणं च न स्यादित्यर्थः ॥ ३५ ॥

वृ०—इदमवद्यम् । नौकाकर्षणेन नौकास्थाकर्षणवत्कुण्डधारणेन कुण्डस्थ-

---

* अणुषु गृह्यमाणपृथक्त्वाभावाद्भाक्त एकप्रत्ययो नेति भावः । तत्र हेतुमाह—अतीन्द्रियत्वादणूनामिति । अतीन्द्रियत्वाद्गृह्यमाणपृथक्त्वं नेति भावः । किं च—इदं तावदयं प्रष्टव्यः । परमाणूनामेव घटादिबुद्धिहेतुत्वं किमुपजातविशेषाणामाहोस्विदनुपजातविशेषाणाम् । नाऽऽद्यः । उपजायमानस्य विशेषस्यावयविरूपत्वादस्मत्पक्षस्वीकारापत्तेः । न च संयोग एवोपजायमानो विशेष इति मन्तव्यम् । अतीन्द्रियाणां परमाणूनां जायमानस्य संयोगस्याप्यतीन्द्रियत्वादनुभूयमानस्य घटादेः प्रत्यक्षत्वानापत्तेः । नान्त्यः । अतीन्द्रियाः परमाणव इन्द्रियगोचरा इति विरुद्धं स्वीकार्यं स्यात् । तस्मादवयवी स्वीकार्य एवेति सिद्धान्तः ।

---

१ ग. एव प्र° ।

<u>दृष्टमिति चेन्न तद्विषयस्य परीक्ष्योपपत्तेः</u> । यदपि मन्येत दृष्टमिदं सेनावनाङ्गानां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणं न च दृष्टं शक्यं प्रत्याख्यातुमिति । तच्च नैवम् । तद्विषयस्य परीक्ष्योपपत्तेः । दर्शन*विषय एवायं परीक्ष्यते योऽयमेकमिति प्रत्ययो दृश्यते स परीक्ष्यते किं द्रव्यान्तरविषयो वाऽथाणुसंचयविषय इति । अत्र दर्शनमन्यतरस्य साधकं न भवति । नानाभावे चाणूनां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणमतस्मिंस्तदिति प्रत्ययो यथा स्थाणौ पुरुष इति । ततः किम् । अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात्प्रधानसिद्धिः । स्थाणौ पुरुष इति प्रत्ययस्य किं प्रधानम् । योऽसौ पुरुषे पुरुषप्रत्ययः, तस्मिन्सति पुरुषसामान्यग्रहणात्स्थाणौ पुरुषोऽयमिति । एवं नानाभूतेष्वेकमिति सामान्यग्रहणात्प्रधाने सति भवितुमर्हति । प्रधानं

---

दधिधारणवच्चोपपत्तेः । विजातीयसंयोगवलेनैवावयवावयविभावाभावेऽप्युपपत्तेः । अतः पूर्वोक्तां युक्तिमेव साधीयसीं मन्यमानस्तत्र परोक्तं समाधानमा-

---

* दृष्टं नाम दर्शनविषयः । स एवेदानीं परीक्ष्यत इत्यर्थः । कथं परीक्ष्यते तदेवाऽऽह—योऽयमेकमित्यादिना । साधकं न भवतीति—साधकत्वाभावमेव प्रतिपादयति—नानाभावे चाणूनामित्यादिना । प्रधानापेक्षित्वादिति—प्रधानं नाम सत्यं ज्ञानं तदपेक्षित्वं मिथ्याज्ञानस्य तस्मादित्यर्थः । प्रधानसिद्धिरिति—अयं भावः—यथा शुक्तौ रजतभ्रमात्पूर्वं सत्यरजतविषयकं ज्ञानमपेक्षितं तथाऽणूनां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणस्यापि सत्यमेकमिति ज्ञानमपेक्षितम् । अतः प्रकृतस्थलेऽपि प्रधानसिद्धिर्वक्तव्येति । पुरुषसामान्यग्रहणादिति—पुरुषत्वस्य ग्रहणादित्यर्थः । भवितुमर्हतीति—प्रधाने सति नानाभूतेषु सामान्यग्रहणादेकमिति भवितुमर्हतीत्यन्वयः । सर्वस्याग्रहणादिति—सर्वत्रावयविनोऽस्वीकारादेकमिति सत्यज्ञानाभावात्प्रधानं नोपपद्यत इति भावः । उपसंहरति—तस्मादिति । अभिन्न एवेति—एकस्मिन्नेवावयविनि एकमिति अभेदप्रत्ययो वक्तव्यः । एवं च नान्तरीयकतयाऽवयवी स्वीकार्य इति तात्पर्यम् ।

---

१ ख. घ. °रीक्षोप° । २ क. ग. च. मन्यते दृ° । ३ क. ग. च. तथा नै° । ४ ख. घ. °रीक्षोप° । ५ ग. °कं भ° । ६ क. ग. च. °क्षितत्वा° । ७ क. ग. ङ. च. °ति प्रामाण्यग्र° ।

च सर्वस्याग्रहणादिति नोपपद्यते । तस्मादभिन्न एवायमभेदप्रत्यय एकमिति ।

इन्द्रियान्तरविषयेष्वभेदप्रत्ययः प्रधानमिति चेन्न विशेषहेत्वभावाद्दृष्टान्ताव्यवस्था । श्रोत्रादिविषयेषु शब्दादिष्वभिन्नेषु एकप्रत्ययः प्रधानम् । अनेकस्मिन्नेकप्रत्ययः* स इति, एवं च सति दृष्टान्तोपादानं न व्यवतिष्ठते विशेषहेत्वभावात् । अणुषु संचितेषु एकप्रत्ययः किमतस्मिंस्तदिति प्रत्ययः स्थाणौ पुरुषप्रत्ययवत्, अथार्थस्य तथाभावात्तस्मिंस्तदिति प्रत्ययो यथा शब्दस्यैकत्वादेकः शब्द इति विशेषहेतुपरिग्रहमन्तरेण दृष्टान्तौ संशयमापादयत इति । कुम्भवत्संचयमात्रं गन्धादयोऽपीत्यनुदाहरणं गन्धादय इति । एवं परिमाणसंयोगस्पन्दजातिविशेषप्रत्ययानप्यनुयोक्तव्यास्तेषु चैवं प्रसङ्ग इति ।

एकत्वबुद्धिस्तस्मिंस्तदिति प्रत्यय इति विशेषहेतुर्महदिति प्रत्ययेन सामानाधिकरण्यात् । एकमिदं महच्चेति एकविषयौ प्रत्ययौ समानाधिकरणौ भवतस्तेन विज्ञायते यन्महत्तदेकमिति । अणुसमूहातिशयग्रहणं महत्प्रत्यय इति चेत्सोऽयममहत्स्वणुषु महत्प्रत्ययोऽतस्मिंस्तदिति प्रत्ययो भवतीति । किं चातः । अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात्प्रधानसिद्धिरिति भवितव्यं महत्येव महत्प्रत्ययेनेति ।

---

दूषयति । अतिदूरस्थैकमनुष्यैकवृक्षादेरप्रत्यक्षत्वेऽपि सेनावनादिप्रत्यक्षवदेकपर-

---

* शब्दादिषु अभिन्नेषु एकप्रत्ययः प्रधानमिति यदुक्तं तस्य समाधानमेतद्बोध्यं यो ह्येकप्रत्ययः प्रधानत्वेनोपन्यस्तः सोऽपि अनेकस्मिन्नेकप्रत्यय एवेति एवं च सति दृष्टान्तोपादानं नेत्यादिरर्थः । यदा च प्रत्ययस्येति षष्ठ्यन्तः पाठस्तदा प्रत्ययस्येति पूर्वान्वयि । तथा चार्थः—अवयविनोऽभावे सेनावनाङ्गेषु योऽनेकस्मिन्नेकप्रत्यय उक्तस्तस्य कारणभूतं प्रधानं वक्तव्यं तच्च श्रोत्रादिविषयेषु शब्दादिष्वभिन्नेषु एकप्रत्ययः प्रधानमित्युच्यत इति । न व्यवतिष्ठत इति । एतदेव स्पष्टयति—अणुषु संचितेष्वित्यादिना ।

---

१ क. ग. ङ. च. °त्ययस्येति ।

अणुः शब्दो महानिति च व्यवसायात्प्रधानसिद्धिरिति चेन्न मन्दतीव्रताग्रहणमियत्तानवधारणाद्यथा द्रव्ये । अणुः शब्दः 'अल्पो मन्दः' इत्येतस्य ग्रहणम् । महाञ्छब्दः 'पटुस्तीव्रः' इत्येतस्य ग्रहणम् । कस्मात् । इयत्तानवधारणात् । न ह्ययं महाञ्छब्द इति व्यवस्यन्नियानयमित्यवधारयति यथा बदरामलकबिल्वादीनि । संयुक्ते इमे इति च द्वित्वस*मानाश्रयप्राप्तिग्रहणम् ।

द्वौ समुदायावाश्रयः संयोगस्येति चेत् । कोऽयं समुदायः । प्राप्तिरनेकस्य ।

+ अनेका या प्राप्तिरेकः समुदाय इति चेत्प्राप्तेरग्रहणं प्राप्त्याश्रितायाः । संयुक्ते इमे वस्तुनी इति नात्र द्वे प्राप्ती संयुक्ते गृह्येते ।

अनेकसमूहः समुदाय इति चेन्न द्वित्वेन समानाधिकरणस्य ग्रहणात् । द्वाविमौ संयुक्तावर्थाविति ग्रहणे सति नानेकसमुदायाश्रयः संयोगो गृह्यते । न च द्वयोरण्वोर्ग्रहणमस्ति । तस्मान्महती द्वित्वाश्रयभूते द्रव्ये संयोगस्य स्थानमिति ।

---

माणोरप्रत्यक्षत्वेऽपि तत्समूहरूपघटादेः प्रत्यक्षं स्यादिति चेत् । न । तदप्यणू-

---

* अयं भावः—पूर्वोक्तरीत्या प्रधानज्ञानस्य वक्तुमशक्यत्वादणुसमुदायेऽतस्मिंस्तत्प्रत्ययस्यासंभवादगत्याऽवयवी यथा मन्तव्यो भवति तथा वक्ष्यमाणरीत्याऽपि तत्स्वीकारो दुर्वारः । तथा हि—'संयुक्ते इमे' इत्याकारकं यज्ज्ञानं तद्द्वित्वसमानाश्रयप्राप्तिग्रहणं बोध्यम् । द्वित्वेन सह समान एक आश्रयो यस्यास्तादृशी या प्राप्तिस्तस्या ग्रहणमित्यर्थः । एवं च समानो य आश्रयः स एवावयवीत्यनया रीत्या तत्सिद्धिरिति ।

+ अयमभिप्रायः—अनेकस्य या प्राप्तिः स एकः समुदाय इति सिद्धान्ते स्वीक्रियमाणे समुदायस्य प्राप्तिरूपत्वेन संयोगस्य च प्राप्तिरूपत्वेन संयोगज्ञानस्थले प्राप्त्याश्रिता प्राप्तिरिति बोधो भाव्यः स च न भवति तदेवाऽऽह—संयुक्ते इमे वस्तुनी इति नात्र द्वे प्राप्ती संयुक्ते गृह्येते इति । अयमर्थः—संयुक्ते इमे वस्तुनी इत्याकारको बोधो भवति न तु संयुक्ते इमे प्राप्ती इत्याकारकः । अतोऽवयवी मन्तव्य एवेति क्वचित्तु 'कोऽयं समुदायः प्राप्तिरनेकस्यानेका वा प्राप्तिरेकस्य समुदायः' इति पाठः ।

---

१ क. ख. °श्रयं प्रा° । २ ग. °या इ° ।

प्रत्यासत्तिः प्रतीघातावसाना संयोगो नार्थान्तरमिति चेन्नार्थान्तरहेतुत्वात्संयोगस्य । शब्दरूपादिस्पन्दानां हेतुः संयोगः । न च द्रव्ययोर्गुणान्तरोपजननमन्तरेण शब्दे रूपादिषु स्पन्दे च कारणत्वं गृह्यते । तस्माद्गुणान्तरम् । प्रत्ययविषयश्चार्थान्तरं तत्प्रतिषेधो वा कुण्डली गुरुरकुण्डलश्छात्र इति । संयोगबुद्धेश्च यद्यर्थान्तरं न विषयः, अर्थान्तरप्रतिषेधस्तर्हि विषयः ।

तत्र प्रतिषिध्यमानवचनम् । संयुक्ते द्रव्ये इति यदर्थान्तरमन्यत्र दृष्टमिह प्रतिषिध्यते तद्वक्तव्यमिति । द्वयोर्महतोराश्रितस्य ग्रहणान्नाण्वाश्रय इति । जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्याप्रत्याख्यानं प्रत्याख्याने वा प्रत्ययव्यवस्थानुपपत्तिः ।

---

नामतीन्द्रियत्वात्प्रत्यक्षे महत्त्वस्य हेतुत्वात्तत्सत्त्वात्सेनावनादिप्रत्यक्षं युज्यते न

---

* शब्दरूपाद्यपेक्षया गुणान्तरं संयोगः स्वीकार्यः । तथा च तदाश्रयत्वेनावयवी सिध्यतीति भावः । युक्त्यन्तरमाह—प्रत्ययविषयश्चेति । अयं भावः—सर्वत्रार्थान्तरं तत्प्रतिषेधो वा ज्ञानविषयो भवति । अर्थान्तरं नाम भावः पदार्थः । तत्प्रतिषेधो नाम तदभावः । उदाहरणमाह—कुण्डली गुरुरित्यादि । संयोगबुद्धेश्चेति । संयोगस्यार्थान्तरत्वाभावाद्यदि संयोगबुद्धेरर्थान्तरं न विषयस्तर्हि तदभावो विषयो वाच्यस्तथा सति संयोगस्यार्थान्तरत्वं सिध्यतीत्यभिप्रेत्याऽऽह—तत्र प्रतिषिध्यमानवचनमिति । तद्वक्तव्यमिति । यदि संयोगबुद्धौ तदभावो विषयस्तर्हि अभावस्य प्रतियोगिसापेक्षत्वेन प्रतियोगी वक्तव्यस्तत्फलितमाह—संयुक्ते द्रव्ये इति यदर्थान्तरमित्यादि । द्वयोर्महतोरिति । पूर्वोक्तरीत्या संयोगः सिद्धः । स च नाण्वाश्रयो गृह्यते किंतु द्वयोर्महतोराश्रितो यः स एव गृह्यते । महत्त्वस्य चावयविनिष्ठत्वात्सिद्धोऽवयवीति भावः । प्रकारान्तरेणापि सिध्यत्यवयवीत्याशयेनाऽऽह—जातिविशेषस्येति । अयमर्थः—प्रत्ययस्य नाम ज्ञानस्य याऽनुवृत्तिर्नाम परम्परा तस्या लिङ्गभूतो यो जातिविशेषो घटत्वपटत्वादिरूपस्तस्याप्रत्याख्यानं नाम स्वीकार आवश्यक इत्यर्थः । व्यवस्थानुपपत्तिरिति—यदि जातिविशेषो न स्वी क्रियते तर्हि अयं घटः, अयं पट इत्याकारकं ज्ञानं नोपपद्येतेत्यर्थः ।

---

१ क. ग. च. °तीक्षा ता° । २ क. ग. च. °षता सं°

+ व्यधिकरणस्यानभिव्यक्तेरधिकरणवचनम् ।

अणुसमवस्थानं विषय इति चेत्प्राप्ताप्राप्तसामर्थ्यवचनम् । किमप्राप्तेऽणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्यतेऽथ प्राप्त इति ।

अप्राप्ते ग्रहणमिति चेद्व्यवहितस्याणुसमवस्थानस्याप्युपलब्धिः। व्यवहितेऽणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्येत ।

प्राप्ते ग्रहणमिति चेन्मध्यपरभागयोरप्राप्तावनभिव्यक्तिः ।

यावत्प्राप्तं भवति तावत्यभिव्यक्तिरिति चेत्तावत्तोऽधिकरणत्वमणुसमवस्थानस्य । यावति प्राप्ते जातिविशेषो गृह्यते तावद्स्याधिकरणमिति प्राप्तं भवति ।

तत्रैकसमुदाये प्रतीयमानेऽर्थभेदः। एवं च सति योऽयमणुसमुदायो वृक्ष इति प्रतीयते तत्र वृक्षबहुत्वं प्रतीयेत यत्र यत्र ह्यणुसमुदायस्य भागे वृक्षत्वं गृह्यते स स वृक्ष इति । तस्मात्समुदिताणुसमवस्थानस्यार्थान्तरस्य जातिविशेषाभिव्यक्तिविषयत्वादवयव्यर्थान्तरभूत इति ॥ ३६ ॥

इत्यवयविपरीक्षाप्रकरणम् ॥ ४ ॥

---

त्वणूनां महत्त्वाभावादिति भावः ॥ ३६ ॥

इत्यवयविपरीक्षाप्रकरणम् ॥ ४ ॥

---

+ व्यधिकरणस्यानभीति । विगतमधिकरणं यस्य जातिविशेषस्य तस्यानभिव्यक्तेर्ज्ञानाभावापत्तेरधिकरणवचनं नाम जातिविशेषस्याधिकरणं वक्तव्यमित्यर्थः । अयं भावः— पूर्वोक्तरीत्या जातिविशेषस्य सिद्धत्वान्निरधिष्ठानस्य तस्य ज्ञानासंभवादधिष्ठानभूतस्यावयविनोऽगत्या स्वीकारो दुर्वार इति । विषय इति । जातिविशेषस्याधिकरणमित्यर्थः । अप्राप्ते ग्रहणमिति । अणुसमवस्थान इन्द्रियासंबद्धे सत्यपि जातिविशेषस्य ग्रहणं चेदित्यर्थः । गृह्येतेति । इन्द्रियासंबद्धत्वाविशेषादिति भावः । प्राप्ते ग्रहणमिति । इन्द्रियसंबद्धेऽणुसमवस्थाने सतीत्यर्थः । मध्यपरभागयोरप्राप्ताविति । आद्यभागेन व्यवधानात्तयोरिन्द्रियासंबन्धे सतीत्यर्थः । समुदिताणुसमेति । समुदिता अणवः समवस्थानमधिकरणं यस्यार्थान्तरस्य तस्य जातिविशेषाभिव्यक्तिहेतुत्वं नत्वणूनामिति सिध्यत्यवयवीति भावः ।

भा०-परीक्षितं प्रत्यक्षम् । अनुमानमिदानीं परीक्ष्यते—

रोधोपघा*तसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ ३७ ॥

अप्रमाणमिति एकदाऽप्यर्थस्य न प्रतिपादकमिति । रोधादपि नदी पूर्णा गृह्यते तदा चोपरिष्टाद् वृष्टो देव इति मिथ्यानुमानम् । नीडोपघातादपि पिपीलिकाण्डसंचारो भवति तदा च भविष्यति वृष्टिरिति मिथ्यानुमानमिति । पुरुषोऽपि मयूरवासितमनुकरोति तदाऽपि शब्दसादृश्यान्मिथ्यानुमानं भवति ॥३७॥

नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३८ ॥

भा०-नायमनुमानव्यभिचारः, अननुमाने तु खल्वयमनुमानाभिमानः । कथम् । नाविशिष्टो लिङ्गं भवितुमर्हति । पूर्वोदक+विशिष्टं

---

वृ०-अवसरेण क्रमप्राप्तमनुमानं परीक्षितुं पूर्वपक्षयति । अनुमानस्य त्रैविध्यं पूर्वमुक्तम् । तत्र त्रिविधस्याप्रामाण्ये साधितेऽनुमानमप्रमाणमर्थात्सिद्धमित्याशयेनेदम् । अनुमानमनुमानत्वेनाभिमतं न प्रमाणं प्रमितिकरणं व्यभिचारिहेतुकत्वात् । तत्र त्रिविधे व्यभिचारं दर्शयति—रोधेत्यादिना । नदीवृद्ध्या पिपीलिकाण्डसंचारेण मयूररुतेन च वृष्ट्यनुमानं त्रिविधमुदाहरणं न संभवति । नदीरोधाधीननदीवृद्ध्याऽऽश्रमोपघाताधीनपिपीलिकाण्डसंचारेण मनुष्यकर्तृकमयूररुतसदृशरुतेन व्यभिचारात् । पिपीलिकाण्डसंचारस्य वृष्टिहेतुत्वाभिप्रायेणेदम् । अथवा लक्षणसूत्रे पूर्ववत्पूर्वकालीनसाध्यानुमापकं शेषवदुत्तरकालीनसाध्यानुमापकं सामान्यतो दृष्टं विद्यमानसाध्यस्याप्यनुमापकमित्यर्थ इत्याशयः । एतेन त्रैकालिकसाध्यानुमापकत्वं संभवति । परे तु—पिपीलिकाण्डसंचारेणात्यन्तोष्मानुमानं ततश्च महाभूतक्षोभानुमानं तस्य च वृष्टिहेतुत्वात्तेन वृष्ट्यनुमानमिति वदन्ति । एवमन्यत्रापि व्यभिचारशङ्कासंभवादव्यभिचारनिश्चयस्यानुमितिहेतोरेव दुर्लभत्वात्तत्प्रामाण्यं न संभवतीत्याशयः ॥ ३७ ॥

वृ०-समाधत्ते—अनुमानाप्रामाण्यं न युक्तम् । एकदेशरोधजनदीवृद्धेस्त्रासज-

---

* अत्र रोधो नामापां स्यन्दमानानां द्रवत्वप्रतिबन्धहेतुः । उपघातो नाम पिपीलिकागृहाणामुपमर्दः । सादृश्यं नाम मयूरपुरुषशब्दयोः समानप्रत्ययकर्तृत्वम् । + पूर्वोदकाद्विशिष्टमिति विग्रहः ।

खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतरफेनफलपर्णकाष्ठादि-
वहनं चोपलभमानः पूर्णत्वेन नद्या उपरि वृष्टो देव इत्यनुमिनोति
नोदकवृद्धिमात्रेण पिपीलिकाप्रायस्याण्डसंचारे भविष्यति वृष्टि-
रित्यनुमीयते न कासांचिदिति। नेदं मयूरवाशितं तत्सदृशोऽयं
शब्द इति विशेषापरिज्ञानान्मिथ्यानुमानमिति। यस्तु विशिष्टा-
च्छब्दाद्विशिष्टं मयूरवाशितं गृह्णाति तस्य विशिष्टोऽर्थो गृह्य-
माणो लिङ्गं यथा सर्पादीनामिति। सोऽयमनुमातुरपराधो
नानुमानस्य योऽर्थविशेषेणानुमेयमर्थमविशिष्टार्थदर्शनेन बुभुत्सत
इति ॥ ३८ ॥

इत्यनुमानपरीक्षाप्रकरणम् ॥ ५ ॥

---

भा०—त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादित्युक्तमत्र च—

**वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥ ३९ ॥**

वृन्तात्प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्ध्वं स पति-
तोऽध्वा तत्संयुक्तः पतितकालः। योऽधस्तात्स पतितव्योऽध्वा
तत्संयुक्तः कालः पतितव्यकालः। नेदानीं तृतीयोऽध्वा वर्तते
यत्र पततीति वर्तमानः कालो गृह्येत। तस्माद्वर्तमानः कालो न
विद्यत इति ॥ ३९ ॥

---

पिपीलिकाण्डसंचारान्मयूररुतसदृशरुताच्च लिङ्गीभूतानां नदीवृद्ध्यादीनां भिन्न-
त्वान्न दोषः। न च सर्वत्र व्यभिचारशङ्का। सत्यां च तस्यां तर्केण तदप-
नयनान्न दोष इत्याशयः ॥ ३८ ॥

इत्यनुमानपरीक्षाप्रकरणम् ॥ ५ ॥

---

वृ०—अनुमानस्य त्रिकालविषयत्वमभिमतं तन्न युक्तम्। वर्तमानाभावेन तद-
धीनज्ञानयोरतीतानागतयोरभावेन कालत्रयात्मकविषयाभावादित्याशयेन वर्त-
मानपरीक्षाप्रकरणमारभमाणो वर्तमानमाक्षिपते—वर्तमानाभावः। अतीतानागत-
भिन्ने कालत्वाभावः। व्युत्पादयति—पतत इति। पततः फलादेर्वृक्षावधिकः
कश्चन देशः पतिताध्वा भूम्यवधिकः कश्चन पतितव्याध्वा न तु वर्तमानस्य
प्रसङ्गोऽपीति भावः ॥ ३९ ॥

तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात् ॥ ४० ॥

भा०-नाध्वव्यङ्ग्यः * कालः किं तर्हि क्रियाव्यङ्ग्यः । पततीति यदा पतनक्रिया व्युपरता भवति स कालः । यदोत्पत्स्यते स पतितव्यकालः । यदा द्रव्ये वर्तमाना क्रिया गृह्यते स वर्तमानः कालः । यदि चायं द्रव्ये वर्तमानं पतनं न गृह्णाति कस्योपरममुत्पत्स्यमानतां वा प्रतिपद्यते । पतितः काल इति भूता क्रिया । पतितव्यः काल इति चोत्पत्स्यमाना क्रिया । उभयोः कालयोः क्रियाहीनं द्रव्यमथ पततीति क्रियासंबद्धम् । सोऽयं क्रियाद्रव्ययोः

वृ०-समाधत्ते—वर्तमानाभावे तयोरतीतानागतयोरप्यभावः स्यात्तयोस्तद-

* पूर्वस्मिन्सूत्रेऽध्वव्यङ्ग्यः काल इति गृहीत्वा वर्तमानकालस्य खण्डनं कृतं तच्च न युक्तं तथा सति भूतभविष्यत्कालयोरपि अभावप्रसङ्गादित्याशयेन क्रियाव्यङ्ग्यत्वं कालस्योक्त्वा वर्तमानादीनां व्यवस्थां प्रतिपादयति । स काल इति । क्रियासमाप्त्यधिकरणभूतक्षणात्पूर्वः काल इत्यर्थः । द्रव्ये वर्तमाना क्रियेति अयं भावः—यस्मिन्क्षणे क्रियोत्पद्यते तत्क्षणादारभ्य क्रियासमाप्तिपर्यन्तो यः कालः स तत्क्रियानिरूपितो वर्तमानः । तत्क्रियासमाप्तौ स एव तत्क्रियानिरूपितो भूतकालः । क्रियोत्पत्तेरभावे स एव तत्क्रियां प्रति भविष्यत्कालः । एवं च वर्तमानकालत्वं नाम प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम् । भूतत्वं नाम वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितत्वम् । भविष्यत्त्वं च वर्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वमिति फलितम् । कालस्त्वेक एव । स च नातीतो भवति तस्य सर्वदा विद्यमानत्वात् । फलमपि नातीतम् । फलस्य चापतत्पतति पतिष्यतीति क्रियाप्रकारकज्ञानविषयत्वादतीतत्वादेः क्रियायां संभवो न तु फले । तस्मात्क्रियैव कालाभिव्यञ्जिका । अध्वनस्तु कालाभिव्यञ्जकत्वं न संभवति । तथाहि—योऽसौ गन्तव्योऽध्वाऽनुत्पन्नक्रियके फले यथाभूतः स तथाभूत एवोत्पन्नक्रिये फल इत्यभेदान्न कालाभिव्यञ्जक इति सिद्धम् । उभयोः कालयोः क्रियाहीनमिति । यत्क्रियानिरूपितो भूतभविष्यद्व्यवहारः कालस्य यदा विवक्षितस्तदा तत्क्रियाहीनं द्रव्यमिति त्वयाऽपि वक्तव्यमेव, किं चानुभवानुरोधात्पततीतिक्रियासंबद्धमित्यपि वक्तव्यम् । तथा च क्रियाविशिष्टं द्रव्यं यदा प्रतीयते स वर्तमानकाल इति सिद्धमिति भावः ।

१ क. ग. ङ. च. °मधः प° ।

संबन्धं गृह्णाति वर्तमानः कालस्तदाश्रयौ चेतरौ कालौ तदभावे न स्यातामिति ॥ ४० ॥

भा०—अथापि—

नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥ ४१ ॥

यद्यतीतानागतावितरेतरापेक्षौ सिध्येतां प्रतिपद्येमहि वर्तमानविलोपम्। नातीतापेक्षाऽनागतसिद्धिः। नाप्यनागतापेक्षाऽतीतसिद्धिः। कया युक्त्या। केन कल्पेनातीतः कथमतीतापेक्षाऽनागतसिद्धिः केन च कल्पेनानागत इति नैतच्छक्यं निर्वक्तुमव्याकरणीयमेतद्वर्तमानलोप इति। यच्च मन्येत ह्रस्वदीर्घयोः स्थलनिम्नयोश्छायातपयोश्च यथेतरेतरापेक्षया सिद्धिरेवमतीतानागतयोरिति तन्नोपपद्यते विशेषहेत्वभावात्। दृष्टान्तवत्प्रतिदृष्टान्तोऽपि प्रसज्यते यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ सिध्यत[1] एवमतीतानागताविति नेतरेतरापेक्षा कस्यचित्सिद्धिरिति। यस्मादेकाभावेऽन्यतराभावादुभयाभावः। यद्येकस्यान्यतरापेक्षा सिद्धिरन्यतरस्येदानीं किमपेक्षा। यद्यन्यतरस्यैकापेक्षा सिद्धिरेकस्येदानीं किमपेक्षा। एवमेकस्याभावेऽन्यतरन्न सिध्यतीत्युभयाभावः प्रसज्यते। अर्थसद्भावव्यङ्ग्यश्चायं वर्तमानः कालः। विद्यते द्रव्यं विद्यते गुणः, विद्यते कर्मेति ॥ ४१ ॥

भा०—यस्य चायं नास्ति तस्य—

वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४२ ॥

प्रत्यक्षमिन्द्रियार्थसंनिकर्षजम्। न चाविद्यमानमसदिन्द्रियेण

---

पेक्षत्वात्। वर्तमानध्वंसप्रतियोगित्वं ह्यतीतत्वम्। वर्तमानप्रागभावप्रतियोगित्वं ह्यनागतत्वमिति भावः ॥ ४० ॥

वृ०—ननु तयोः परस्परापेक्षयैव सिद्धेर्न वर्तमानापेक्षेत्यत आह। अन्योन्याश्रयादिति भावः ॥ ४१ ॥

वृ०—तयोरप्यभावे का क्षतिरतो युक्त्यन्तरमाह—वर्तमानाभावे प्रत्यक्षं नोप-

---

१ क. ख. ग. घ. च. सिध्येते ए°।

संनिकृष्यते । न चायं विद्यमानं सत्किंचिदनुजानाति प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षज्ञानं सर्वं नोपपद्यते * । प्रत्यक्षानुपपत्तौ च तत्पूर्वकत्वादनुमानागमयोरनुपपत्तिः । सर्वप्रमाणविलोपे सर्वग्रहणं न भवतीति । उभयथा च वर्तमानः कालो गृह्यते क्वचिदर्थसद्भावव्यङ्ग्यः, यथाऽस्ति द्रव्यमिति क्वचित्क्रियासंतानव्यङ्ग्यः, यथा पचति च्छिनत्तीति । नानाविधा चैकार्था क्रिया क्रियासंतानः क्रियाभ्यासश्च । नानाविधा चैकार्था क्रिया पचतीति स्थाल्यधिश्रयणमुदकासेचनं तण्डुलावपनमेधोपसर्पणमग्न्यभिज्वालनं दर्वीघट्टनमण्डस्रावणमधोऽवतारणमिति । छिनत्तीति क्रियाभ्यासः । उद्यम्योद्यम्य परशुं दारुणि निपातयंश्छिनत्तीत्युच्यते ॥ ४२ ॥

भा०—यच्चेदं पच्यमानं छिद्यमानं च तत्क्रियमाणं तस्मिन्क्रियमाणे—

**कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ॥ ४३ ॥**

क्रियासंतानोऽनारब्धश्चिकीर्षितोऽनागतः कालः पक्ष्यतीति । प्रयोजनावसानः क्रियासंतानोपरमोऽतीतः कालोऽपाक्षीदिति ।

---

पद्यते प्रत्यक्षस्य वर्तमानविषयत्वात् । अत एवाऽऽह—संबद्धं वर्तमानं च गृह्यते चक्षुरादिनेति । प्रत्यक्षाभावे च सर्वमेव ग्रहणं ज्ञानं न स्यात् । प्रत्यक्षमूलकत्वादितरज्ञानानामिति भावः ॥ ४२ ॥

वृ०—ननु यदि वर्तमानध्वंसप्रतियोगित्वमतीतत्वं वर्तमानप्रागभावप्रतियोगित्वं च भविष्यत्त्वं तदा वर्तमान एव घटे कथं श्याम आसीद्रक्तो भविष्यतीति धीरत आह । वर्तमानस्यापि घटादेः श्यामरक्तरूपादीनां कृतताकर्तव्यतयो-

---

* ननु वर्तमानाभावे कथं प्रत्यक्षानुपपत्तिरिति चेत् । शृणु । प्रत्यक्षं पक्षीकृत्य साधारत्वं साध्यते कार्यत्वाद्धेतोः । यत्र यत्र कार्यत्वं तत्र तत्र साधारत्वं यथा क्षीरम् । प्रत्यक्षं च कार्यमेव । तस्मात्साधारं प्रत्यक्षम् । आधारश्च तस्य वर्तमानकाल एव । वर्तमानकालानभ्युपगमे तु निराधारं प्रत्यक्षं प्राप्नोति । न हि कार्यं निराधारं क्वचिद्दृष्टं येन प्रत्यक्षोपपत्तिः स्यात् । तथा च प्रत्यक्षानुपपत्तिरिति भावः ।

---

१ ख. ग. ङ. च. °थ. क्वचे°द° ।

आरब्धक्रियासंतानो वर्तमानः कालः पचतीति तत्र यो *परता सा कृतता। या चिकिर्षिता सा कर्तव्यता। या विद्यमाना सा क्रियमाणता। तदेवं क्रियासंतानस्थस्त्रैकाल्यसमाहारः पचति पच्यत इति वर्तमानग्रहणेन गृह्यते। क्रियासंतानस्य ह्यत्राविच्छेदो विधीयते नाऽऽरम्भो नोपरम इति। सोऽयमुभयथा वर्तमानो गृह्यतेऽपवृक्तो व्यपवृक्तश्च। अतीतानागताभ्यां स्थितिव्यङ्ग्यो विद्यते द्रव्यमिति। क्रियासंतानाविच्छेदाभिधायी च त्रैकाल्यान्वितः पचति छिनत्तीति। अन्यश्च प्रत्यासत्तिप्रभृतेरर्थस्य विवक्षायां तदभिधायी बहुप्रकारो लोकेषूत्प्रेक्षितव्यः। तस्मादस्ति वर्तमानः काल इति॥ ४३॥

इति वर्तमानपरीक्षाप्रकरणम्॥ ६॥

---

**अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः॥ ४४॥**

भा०—अत्यन्तसाधर्म्यादुपमानं न सिध्यति न चैवं भवति यथा गौरेवं गौरिति। प्रायः साधर्म्यादुपमानं न सिध्यति। नहि

---

रतीतताभविष्यत्तयोरुपपत्तेर्घटादेरपि अतीतानागतत्वेन व्यवहारः परम्परासंबन्धादित्यर्थः॥ ४३॥

इति वर्तमानपरीक्षाप्रकरणम्॥ ६॥

---

वृ०—अथावसरेण क्रमप्राप्तोपमानं परीक्षितुं पूर्वपक्षयति। प्रसिद्धसाधर्म्यादुपमानमुक्तं तन्न युक्तम्। यतः साधर्म्यमात्यन्तिकं प्रायिकमैकदेशिकं वा न संभ

---

* उपरता या क्रिया सा कृतता। अयं भावः—कृतं नाम भूतकालिकक्रियाश्रयं तस्य भावः कृतता। यथा च प्रकृतिजन्यबोधे प्रकारो भाव इत्यनया रीत्या कृततोशब्दशक्त्यैव प्रतीयते तस्याश्चोपरतापदार्थेनाभेदान्वय इति। एवमेव चिकीर्षित.कर्तव्यतापदार्थयो विंद्यमानाक्रियमाणतापदार्थयोश्चाभेदान्वयो बोध्यः। विशेषस्तु—कर्तव्यतेत्यत्र भविष्यत्काल क्रियमाणतेत्यत्र वर्तमानकाल इति। त्रैकाल्यसमाहार इति। त्रयः कालास्त्रैकाल्यं चतु वर्णादीनां स्वार्थे उपसंख्यानमित्यनेन स्वार्थे ष्यञ्।

---

१ ख. ग. घ. °नस्थ त्रैका°।

भवति यथाऽनडुवानेवं महिष इति । एकदेशसाधर्म्यादुपमानं न सिध्यति । नहि सर्वेण सर्वमुपमीयत इति ॥ ४४ ॥

प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४५ ॥

भा०—न साध्यस्य कृत्स्नस्य प्रावल्यभावमाश्रित्योपमानं प्रवर्तते किं तर्हि प्रसिद्धसाधर्म्यात्साध्यसाधनभावमाश्रित्य प्रवर्तते । यत्र चैतदस्ति न तत्रोपमानं प्रतिषेद्धुं शक्यं तस्माद्यथोक्तदोषो नोपपद्यत इति ॥ ४५ ॥

भा०—अस्तु तर्ह्युपमानमनुमानम् —

प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४६ ॥

यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानमेवं गवा प्रत्यक्षेणाप्रत्यक्षस्य गवयस्य ग्रहणमिति नेदमनुमानाद्विशिष्यते ॥ ४६ ॥

---

वति । न ह्यात्यन्तिकसाधर्म्येण गौरिव गौरित्यनुमानं प्रवर्तते । न वा प्रायिकसाधर्म्येण गौरिव महिष इति । न च यत्किंचित्साधर्म्येण मेरुरिव सर्षप इति । साधर्म्यस्य चोपलक्षणत्वाद्वैधर्म्योपमानमप्येवं खण्डनीयम् ॥ ४४ ॥

वृ०—समाधत्ते—प्रसिद्धं प्रकर्षेण महिषादिव्यावृत्त्या सिद्धं ज्ञातं यत्साधर्म्यं तज्ज्ञानस्योपमितिकरणत्वान्न दोषः । साधर्म्यं च प्रकरणाद्यनुसारात्कचित्किंचिदिति ॥ ४५ ॥

वृ०—अनुमानेन चरितार्थं नोपमानं प्रमाणान्तरमिति वैशेषिकमतमाशङ्कते—प्रत्यक्षेण गोसादृश्यविशेषेणाप्रत्यक्षस्य गवयपदवाच्यत्वस्यानुमितेर्नोपमानं मानान्तरमिति ॥ ४६ ॥

---

* तथा च सर्वथाभावरूपादत्यन्तसाधर्म्यादुपमानं सिध्यति यथा रामरावणयोर्युद्धं रामरावणयोरिवेति । अत्र हि तत्क्रियैव तत्क्रियोपमीयते । भूयःसाधर्म्येणापि उपमानं सिध्यति यथा गौस्तथा महिष इति । यदा गोर्बलप्रकर्षजिज्ञासा भवति तदेदं भूयःसाधर्म्येणोपमानं बोध्यम् । एकदेशसाधर्म्येणापि सिध्यत्युपमानं यथा—मेरोः सत्ता निरूपेति पृष्टे ' यथा सर्षपस्य तथा मेरोः ' इत्युच्यते । अत्र हि सन्मात्रं जिज्ञासितं भवति । तस्मादुपमानस्य प्रतिषेधो नोपपद्यत इति बोध्यम् ।

भा०-विशिष्यत इत्याह । कया युक्त्या—

**नाप्रत्यक्षे गवये प्रमाणार्थमुप-**
**मानस्य पश्याम इति ॥ ४७ ॥**

यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवा समानमर्थं पश्यति तदाऽयं गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते न चैव-मनुमानमिति । परार्थं चोपमानं यस्य ह्युपमानमप्रसिद्धं तदर्थं प्रसिद्धोऽ*भयेन क्रियत इति ।

परार्थमुपमानमिति चेन्न स्वयमध्यवसायात् । भवति च भोः स्वयमध्यवसायो यथा गौरेवं गवय इति । नाध्यवसायः प्रति-षिध्यत उपमानं तु तन्न भवति प्रसिद्धसाधर्म्यात्साध्यसाधन-मुपमानम् ( १ । १ । ६ ) । न च यस्योभयं प्रसिद्धं तं प्रति साध्यसाधनभावो विद्यत इ+ति ॥ ४७ ॥

---

वृ०-अत्रोत्तरयति—अप्रत्यक्षे व्याप्यवत्तयाऽप्रत्यक्षेऽनुमानत्वेन प्रमाणार्थं प्रमाप्रयोजनमुपमानस्य न × पश्याम इत्यर्थः । अथवा गवये गवयवृत्तावप्र-त्यक्षे गवयपदवाच्यत्वे, उपमानस्य प्रमाणार्थम्—उपमानजन्यां प्रमामनुमान-त्वेन न पश्याम इत्यर्थः । व्याप्तिज्ञानाभावादिति भावः ॥ ४७ ॥

---

* प्रसिद्धमुभयं यस्येति विग्रहः । एवं च यस्य पुरुषस्योपमानोपमेयरूपमुभयं प्रसिद्धं तेन प्रयोजकेनाप्रसिद्धोपमानपुरुषार्थं प्रसिद्धं क्रियत इति परार्थं भवतीति भावः ।

\+ कारणभेदादपि उपमानं प्रमाणान्तरम् । तथाहि— ' यथा गौरेवं गवयः ' इत्याप्तवा-क्यमन्तरेण सारूप्यमात्रज्ञानं नोपमानं भवति तथा सारूप्यज्ञानमन्तरेणाऽऽप्तवाक्यमात्रं नोपमानं भवति । एवं च ' यथा गौरेवं गवयः ' इत्यादिवाक्यज्ञानमपि उपमानस्य सहायभूतत्वेनापेक्षितम् । न च तथाऽनुमाने । तस्माद्व्याप्तिस्मृत्यनुग्रहे सति यथा लिङ्ग-परामर्शोऽनुमानं तथाऽऽप्तवाक्याहितसंस्कारस्मृत्यपेक्षं सारूप्यप्रत्यक्षमुपमानं प्रमाणान्तरम् । प्रतिपत्तिभेदादपि प्रमाणान्तरत्वमुपमानस्य । उपमाने हि ' यथा गौरेवं गवयः ' इति प्रति-पत्तिर्भवति न तथाऽनुमाने ' यथा धूमस्तथा वह्निः ' इति प्रतिपत्तिरस्ति । यत्र च प्रति-पत्तिभेदस्तत्प्रमाणान्तरमिति क्लृप्तमेव । यथा प्रत्यक्षादनुमानं प्रमाणान्तरमिति बोध्यम् ।

× उपमानस्य प्रमारूपं प्रयोजनमनुमानत्वरूपेण न पश्यामः, किन्तूपमानत्वेनैवेति भावः ।

---

१ क. ग. ङ. च. गवयप्र । २ छ. °णार्थं प्रमामु ।

भा०—अथापि—

तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४८ ॥

तथेति समानधर्मोपसंहारादुपमानं सिध्यति नानुमानम् । अयं चानयोर्विशेष इति ॥ ४८ ॥

इत्युपमानप्रामाण्यपरीक्षाप्रकरणम् ॥ ७ ॥

---

शब्दो*ऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४९ ॥

भा०—शब्दोऽनुमानं न प्रमाणान्तरम् । कस्मात् । शब्दार्थस्यानुमेयत्वात् । कथमनुमेयत्वम् । प्रत्यक्षतोऽनुपलब्धेः । यथाऽनुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चान्मीयत इति अनुमानम् ।

---

वृ०—ननु व्याप्तिज्ञाननियमः कल्प्यतामित्यनुशयेन युक्त्यन्तरमाह—अनुमानादुपमानस्य नाविशेषस्तथेत्युपसंहारात् । यथा गौस्तथा गवय इति ज्ञानादुपमानसिद्धेरुपमानाधीनसिद्धेरुपमितेः । तथा च व्याप्तिज्ञानानपेक्षसादृश्यज्ञानाधीनोपमितिरित्यनुभवसिद्धम् । किंच नानुमिनोमि किंतूपमिनोमीत्यनुव्यवसायसिद्धोपमितिर्नापलपितुं शक्यत इत्याशयः ॥ ४८ ॥

इत्युपमानप्रामाण्यपरीक्षाप्रकरणम् ॥ ७ ॥

---

वृ०—क्रमप्राप्तं शब्दं परीक्षितुं पूर्वपक्षयति—शब्दोऽनुमानमित्यस्य शाब्दबोधोऽनुमितिरिति पर्यवसितार्थः । तथा च शब्दो लिङ्गविधयाऽनुमितिकरणम् ।

---

* ननु विद्यमानस्याप्यश्रूयमाणस्य शब्दस्य प्रमितिजनकत्वाभावाच्छब्दो न प्रमाणमिति चेत् । उच्यते । श्रूयमाणाच्छब्दात्क्वचित्प्रमितिजनने प्रमाणत्वोपपत्तिः । एवं च क्वचिदश्रवणादिना प्रमित्यभावेऽपि न प्रमाणत्वस्य हानिः । न च विषयाभावान्न शब्दः प्रमाणमिति मन्तव्यम् । प्रत्यक्षाद्यपेक्षया भिन्नविषयस्य पूर्वं प्रतिपादितत्वात् । न चाविज्ञानात्मकत्वाद्बहिरिन्द्रियप्रत्यक्षत्वादात्मासमवेतत्वाद्घटादिवत् , आकाशगुणत्वाच्च संख्यावदप्रमाणमिति वाच्यम् । आद्यानां त्रयाणां प्रदीपे व्यभिचारात् । चतुर्थस्यापि स्वप्रत्यक्षहेतावाकाशमहत्त्वे व्यभिचारात् । अस्तु तर्हि स्मृत्यपेक्षत्वादनुमानमेव शब्दः, त्रिकालविषयत्वाद्यत्सत्त्वे यत्सत्त्वं यदभावे यदभाव इत्याकारकान्वयव्यतिरेकोपन्यासेत्यभिप्रेत्याऽऽह— शब्दोऽनुमानमिति ।

एवं ि तेन शब्देन पश्चान्मीयतेऽर्थोऽनुपलभ्यमान इत्यनुमानं शब्दः ॥ ४९ ॥

भा०—इतश्चानुमानं शब्दः—

उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥

प्रमाणान्तरभावे द्विप्रवृत्तिरुपलब्धिः, अन्यथा ह्युपलब्धिरनुमानेऽन्यथोपमाने तद्व्याख्यातम्। शब्दानुमानयोस्तूपलब्धिरद्विप्रवृत्तिर्यथाऽनुमाने प्रवर्तते तथा शब्देऽपि विशेषाभावादनुमानं शब्द इति ॥ ५० ॥

संबन्धाच्च ॥ ५१ ॥

भा०—शब्दोऽनुमानमिति वर्तते। संबद्धयोश्च शब्दार्थयोः संबन्धप्रसिद्धौ शब्दोपलब्धेरर्थग्रहणं यथा संबद्धयोर्लिङ्गलिङ्गिनोः संबन्धप्रतीतौ लिङ्गोपलब्धौ लिङ्गग्रहणमिति ॥ ५१ ॥

भा०—यत्तावदर्थस्यानुमेयत्वादिति * तत्र—

आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः ॥ ५२ ॥

स्वर्गः, अप्सरसः, उत्तराः कुरवः, सप्त द्वीपाः, समुद्रः,

---

अर्थस्य शब्दप्रतिपाद्यस्यानुपलब्धेरप्रत्यक्षत्वादनुमेयत्वादिति। तथा च शाब्दज्ञानमनुमितिरप्रत्यक्षविषयत्वात्प्रत्यक्षभिन्नत्वाद्वेत्यत्र तात्पर्यम् ॥ ४९ ॥

वृ०—हेत्वन्तरमाह—उपलब्धेः शाब्दबोधत्वेनाभिमताया अनुमितित्वेनाभिमतायाश्च द्विप्रवृत्तित्वाद्द्विप्रकारत्वादनुमितित्वं शाब्दत्वं च न जातिद्वयं शब्दस्य लिङ्गविधया बोधकत्वाल्लिङ्गान्तरजज्ञानवद्विजातीयत्वाभावात् ॥ ५० ॥

वृ०—हेत्वन्तरमाह— संबन्धान्नियतसंबन्धाज्ज्ञायमानादिति शेषः। शब्दो हि व्याप्तिग्रहसापेक्षो बोधयति तेन शाब्दबोधोऽनुमितिरिति भावः ॥ ५१ ॥

वृ०—सिद्धान्तसूत्रम्। आप्तस्य भ्रमादिशून्यस्य य उपदेशः शब्दस्तत्र यत्सा-

---

* यत्तावत्पूर्वं स्मृत्यपेक्षत्वादनुमानं शब्द इत्युक्तं तदयुक्तम्। संशये तर्क उपमाने च स्मृत्यपेक्षत्वेनानैकान्तिकत्वात्। एतेन त्रिकालविषयत्वाच्चेति हेतुरपि निरस्तः। अन्वयव्यतिरेकोपपत्तिस्तु प्रत्यक्षेऽपि सत्त्वादव्यभिचारिता, घटसत्त्वे घटप्रत्यक्षं घटाभावे घटप्रत्यक्षाभाव इति वक्तुं शक्यत्वात्। किं च प्रत्यायनाङ्गभूतं ज्ञानमपि शब्देऽन्यादृशम्, अनुमाने त्वन्यादृशम्। अनुमाने हि पक्षधर्मतापेक्षं तदनपेक्षं च शब्दे।

---

१ क. ख. ग. घ च 'र्थोऽस्मनु'। २ क. . ङ. च. तत्र—आ'।

लोकसंनिवेशः, इत्येवमादेरप्रत्यक्षस्यार्थस्य न शब्दमात्रात्प्रत्ययः किं तर्हि आप्तैरयमुक्तः शब्द इत्यतः संप्रत्ययः । विपर्ययेण संप्रत्ययाभावात् । नत्वेवमनुमानमिति । यत्पुनरुपलब्धेरद्विप्रवृत्तित्वादिति अयमेव शब्दानुमानयोरुपलब्धेः प्रवृत्तिभेदः । तत्र विशेषे सत्यहेतुर्विशेषाभावाभावादिति । यत्पुनरिदं संबन्धाच्चेति अस्ति शब्दार्थयोः संबन्धोऽनुज्ञातः, अस्ति च प्रतिषिद्धः । अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः, प्राप्तिलक्षणस्तु संबन्धः प्रतिषिद्धः । कस्मात्—

प्रमाणतोऽनुप * लब्धेः । प्रत्यक्षस्तावच्छब्दार्थप्राप्तेर्नोपलब्धिरतीन्द्रियत्वात् । येनेन्द्रियेण गृह्यते शब्दस्तस्य विषयभावमतिवृत्तोऽर्थो न गृह्यते । अस्ति चातीन्द्रियविषयभूतोऽप्यर्थः । समानेन चेन्द्रियेण गृह्यमाणयोः प्राप्तिर्गृह्यत इति । प्राप्तिलक्षणे च गृह्यमाणे संबन्धे शब्दार्थयोः शब्दान्तिकं वाऽर्थः स्यादर्थान्तिके वा शब्दः स्यादुभयं वोभयत्र ॥ ५२ ॥

भा०—अथ खल्वयम्—

पूरणप्रदाहपाटनानुपलब्धे-
श्च संबन्धाभावः ॥ ५३ ॥

स्थानकरणाभावादिति चार्थः । नचायमनुमानतोऽप्युपलभ्यते

---

मर्थ्यमाकाङ्क्षायोग्यतादिमत्त्वं ततः, अथवाऽऽप्तं प्राप्तं यदुपदेशसामर्थ्यमाकाङ्क्षादिमत्त्वं ततस्तत्सहकारात्, साधारणश्चायं निर्देशः । तेन व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादर्थे संप्रत्ययः शाब्दबोधः संभवतीति नानुमानान्तर्भावः शब्दस्येत्यर्थः । शब्दादमुमर्थं प्रत्येमि न त्वनुमिनोमीत्यनुभवादिति भावः ॥ ५२ ॥

वृ०—शब्दार्थयोः संबन्धाभाव इत्यप्याह—शब्देन सहार्थस्य संबन्धाभावो

---

* क्वचित्पुस्तके सूत्रत्वेनास्य लेखो दृश्यते ।

---

१ ख. ग. ङ. °स्ति च श° । २ ख. ग. वाक्यार्थस्य वि° ।

शब्दान्तिकेऽर्थ इति[1] । यत्तस्मिन्पक्षेऽप्यास्यस्थानकरणोच्चारणीयः[2] शब्दस्तदन्तिकेऽर्थ इति अन्नाग्न्यसिशब्दोच्चारणे पूरणप्रदाहपाटनानि गृह्येरन्, न च प्रगृह्यन्ते । अग्रहणान्नानुमेयः प्राप्तिलक्षणः संबन्धोऽर्थान्तिके शब्द* इति । स्थानकरणासंभवादनुच्चारणं स्थानं कण्ठादयः करणं प्रयत्नविशेषस्तस्यार्थान्तिकेऽनुपपत्तिरिति । उभयप्रतिषेधाच्च नोभयम् । तस्मान्न शब्देनार्थः प्राप्त इति ॥ ५३ ॥

शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५४ ॥

भा०—शब्दार्थप्रत्ययस्य व्यवस्थादर्शनादनुमीयतेऽस्ति शब्दार्थसंबन्धो

---

व्याप्त्यभावः । हेतुमाह—पूरणेति । यदि शब्दस्यार्थेन व्याप्तिः स्यात्तदाऽन्नाग्निवासीशब्दैर्मुखपूरणमुखप्रदाहमुखपाटनानि स्युः शब्दस्य व्याप्यस्य सत्त्वेऽन्नादेरर्थस्यापि सत्त्वात् ॥ ५३ ॥

वृ०—तत्किं शब्दोऽसंबद्धमेवार्थं प्रत्याययति । तथा सत्यतिप्रसङ्ग इत्याशङ्कते—अप्रतिषेधः शब्दार्थयोः संबन्धप्रतिषेधो न शब्दार्थयोर्व्यवस्थितत्वात् । कश्चि-

---

* ननु नित्यः शब्दोऽर्थान्तिकमुपपद्यत इति चेत् । अत्रोच्यते । किं नित्यः शब्दः संतानानुवृत्त्याऽर्थान्तिकं गच्छति आहोस्वित्तत्रोत्पद्यते । नाऽऽद्यः । यदि नित्यस्तस्य संतानानुवृत्तिर्न संभवति । यदि संतानानुवृत्तिस्तस्य तर्हि नित्यत्वं न संभवति । तथा च नित्यः शब्दः संतानानुवृत्त्या गच्छतीति व्याहतम् । न द्वितीयः । यदि नित्यस्तस्योत्पत्त्यसंभवः, यदि उत्पत्तिर्न नित्यत्वम् । तथा च नित्यश्चोत्पद्यत इति पूर्ववद्व्याहतमेव । ननु नित्यः शब्दो न गच्छति न चोत्पद्यते किंतु एक एव व्यापकोऽवस्थितो व्यज्यत इति चेत् । अत्र ब्रूमः । यदि सर्व एव शब्दा व्यापकत्वेनावस्थिताः स्थानकरणादिसंनिधाने सति व्यज्यन्त इति ब्रूषे तर्हि सर्वार्थोपलब्धिप्रसङ्गः प्राप्नोति । यदेकस्य शब्दस्य व्यञ्जकं तदेव शब्दान्तराणामपीति वक्तुं शक्यत्वात् । न च सामान्यं यथा सर्वत्रावस्थितमपि न सर्वत्रोपलभ्यते तथा शब्दोऽपि नोपलभ्यतेति वाच्यम् । सामान्यं हि आश्रयोपलब्ध्या व्यज्यते न च तथा शब्दः । तस्मादर्थान्तिके शब्द इति प्राप्तिलक्षणः संबन्धो न कथमप्युपपद्यत इति बोध्यम् ।

---

१ क. ग. ङ. च. °ति । एतस्मि° । २ क. ग. ङ. च. °क्षेऽप्यस्य ।

व्यवस्थाकारणम् । असंबन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्गः । तस्मादप्रतिषेधः संबन्धस्येति ॥ ५४ ॥

भा०—अत्र समाधिः—

न सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य ॥ ५५ ॥

न संबन्धकारितं शब्दार्थव्यवस्थानं किं तर्हि समयकारितम् । यत्तदवोचामास्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः शब्दार्थयोः संबन्ध इति समयं तदवोचामेति । कः पुनरयं समयः । अस्य शब्दस्येदमर्थजातमभिधेयमिति अभिधानाभिधेयनियमनियोगः * । तस्मिन्नुपयुक्ते शब्दादर्थसंप्रत्ययो भवति ।

---

देव हि शब्दः कंचिदेवार्थं बोधयति न सर्वः सर्वमिति । इत्थं च संबन्धे स्वीकृते तेन संबन्धेन व्याप्तिरप्यावश्यकी । स च संबन्धो न मुखपूरणादिनियामक इति भावः ॥ ५४ ॥

वृ०—उत्तरयति—मन्मतेऽपि शब्दार्थयोरव्यवस्था न, शब्दाधीनस्यार्थसंप्रत्य-

---

* स च व्याकरणादितो गृह्यते । तथाहि—शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः । प्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति । उपमानाच्छक्तिग्रहो यथा—कश्चिद्गवयशब्दवाच्यमजानन्कुतश्चिदारण्यकपुरुषाद्गोसदृशो गवय इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन्गोसदृशं पिण्डं पश्यति । तदनन्तरम् ‘ अयं गवयशब्दवाच्यः ’ इत्युपमितिरुत्पद्यत इति । कोशात्तु प्रसिद्ध एव शक्तिग्रहः । आप्तवाक्याद्यथा—कोकिलः पिकपदवाच्य इत्यादिशब्दात्पिकादिशक्तिग्रहः । व्यवहाराद्यथा—बालस्तावत्स्तन्यदानादौ स्वकृतरोदनादिजनितमातृप्रवृत्तेः स्वाभिप्रायरूपप्रवर्तनाज्ञानजन्यत्वावधारणात् ‘ प्रयोजकवृद्धप्रयुक्तम् ‘ घटमानय ’ इत्याकारकं वाक्यं श्रुत्वा प्रयोज्यवृद्धेन घट आनीत इत्यवधार्य ’ घटानयनरूपं कार्यं ‘ घटमानय ’ इति शब्दप्रयोज्यमित्यवधारयति । ततश्च घटं नय गामानयेत्यादावावापोद्वापाभ्यां घटादिपदानां घटादौ शक्तिमवधारयति । वाक्यशेषाच्छक्तिग्रहो यथा—यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेष आर्याणां प्रयोगात्कङ्गौ च म्लेच्छानां प्रयोगात्संशयः किं दीर्घशूकविशेषो ग्राह्य आहोस्वित्कङ्गव इति । तत्र च ‘ अथान्या ओषधयो म्लायन्तेऽथैते मोदमाना उत्तिष्ठन्ति ’ इति वाक्यशेषाद्दीर्घशूकविशेषे शक्तिर्निर्णीयते । विवृतेः शक्तिग्रहो यथा—घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद्घटपदस्य कलशे शक्तिग्रहः ।

विपर्यये हि शब्दश्रवणेऽपि प्रत्ययाभावः । संबन्धवादिनाऽपि चायमवर्जनीय इति । प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानाम् । समयपालनार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं वाक्यलक्षणाया वाचोऽर्थो लक्षणम् । पदसमूहो वाक्यमर्थपरिसमाप्ताविति । तदेवं प्राप्तिलक्षणस्य शब्दार्थसंबन्धस्यार्थजुषोऽप्यनुमानहेतुर्न भवतीति ॥ ५५ ॥

जातिविशेषे चानियमात् ॥ ५६ ॥

भा०—सामयिकः शब्दादर्थसंप्रत्ययो न स्वाभाविकः । ऋष्यार्यम्लेच्छानां यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्तते । स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्यात् । यथा तैजसप्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति ॥ ५६ ॥

इति शब्दसामान्यपरीक्षाप्रकरणम् ॥ ८ ॥

———

यस्य सामयिकत्वाच्छक्तिग्रहाधीनत्वात् । शक्तिरूपसंबन्धेन न च व्याप्तिस्तस्या वृत्तिनियामकसंबन्धाधीनत्वादिति भावः ॥ ५५ ॥

वृ०—शब्दस्यार्थेन सह न स्वाभाविकः संबन्धो जातिविशेषेऽनियमात् । शब्दस्यानियतार्थकत्वदर्शनादार्या हि यवशब्दाद्दीर्घशूकविशेषं प्रतियन्ति म्लेच्छास्तु कङ्गुमिति । नियमे तु सर्वः सर्वं प्रतीयात् । आपाततश्चेदम् । नानाशक्तावपि यत्र यस्य शक्तिग्रहस्तस्य तदर्थोपस्थितेः ॥ ५६ ॥

इति शब्दसामान्यपरीक्षाप्रकरणम् ॥ ८ ॥

———

तदप्रामाण्यमनृतव्याघात-
पुनरुक्तदोषेभ्यः ॥ ५७ ॥

भा०—पुत्रकामेष्टिहवनाभ्यासेषु । तस्येति शब्दविशेषमेवाधि*कुरुते भगवानृषिः । शब्दस्य प्रमाणत्वं न संभवति । कस्मात् । अनृतदोषात्पुत्रकामेष्टौ । पुत्रकामः पुत्रेष्ट्या यजेतेति नेष्टौ संस्थितायां पुत्रजन्म दृश्यते । दृष्टार्थस्य वाक्यस्यानृतत्वाददृष्टार्थमपि वाक्यम् ' अग्निहोत्रं जुहुयात्स्वर्गकामः ' इत्याद्यनृतमिति ज्ञायते । विहितव्याघातदोषाच्च हवने । " उदिते होतव्यम्, अनुदिते होतव्यम्, समयाध्युषिते होतव्यम्, इति विधाय विहितं व्याहन्ति—श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति, शबलोऽस्याऽऽहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यावशबलौ वाऽस्याऽऽहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति " व्याघाताच्चान्यतरन्मिथ्येति । पुनरुक्तदोषाच्चाभ्यासे देश्यमाने । त्रिः प्रथमाम-

वृ०—शब्दस्य दृष्टादृष्टार्थकत्वेन द्वैविध्यमुक्तं तत्र चादृष्टार्थकशब्दस्य वेदस्य प्रामाण्यं परीक्षितुं पूर्वपक्षयति—तस्य दृष्टार्थकव्यतिरिक्तशब्दस्य वेदस्याप्रामाण्यम् । कुतः । अनृतत्वादिदोषात् । तत्र च पुत्रेष्टिकारीरीयागादौ क्वचित्फलानुत्पत्तिदर्शनादनृतत्वम् । व्याघातः पूर्वापरविरोधः । यथा—" उदिते जुहोति, अनुदिते जुहोति, समयाध्युषिते जुहोति । श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति, शबलोऽस्याऽऽहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यावशबलावस्याऽऽहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति " । अत्र चोदितादिवाक्यानां निन्दानुमितानिष्टसाधनताबोधकवाक्येन सह विरोधः । पौनरुक्त्यादप्रामाण्यं यथा—त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाहेत्यत्रोत्तमत्वस्य प्रथमत्वपर्यवसानात्त्रिःकथनेन पौनरुक्त्यम् । एतेषामप्रामाण्ये

* उद्देश्यत्वेन बोधयतीत्यर्थः । यतश्च प्रकरणप्राप्तमपि शब्दं तच्छब्देन पुनरभिधत्ते तज्ज्ञापयत्याचार्यः शब्दविशेषं प्रतीयं चिन्ता न तु शब्दसामान्यं प्रतीति । अत्राप्रामाण्यं नामार्थस्याप्रत्यायकत्वम् । अनृतत्वं हि अयथार्थाभिधानम् । व्याघातो नाम पदयोर्वाक्ययोर्वा सहासंभवः । पुनरुक्तं नाम पूर्वाभिहितार्थाभिधानम् ।

१ ख. घ. वा अस्या° ।

न्वाह त्रिरुत्तमामिति पुनरुक्तदोषो भवति । पुनरुक्तं च प्रमत्तवाक्यमिति । तस्मादप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्य इति ॥ ५७ ॥

न कर्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥

भा०—नानृतदोषः पुत्रकामेष्टौ । कस्मात् । कर्मकर्तृसाधनवैगुण्यात् । इष्ट्या पितरौ संयुज्यमानौ पुत्रं जनयत इति । इष्टिः करणं साधनं पितरौ कर्तारौ संयोगः कर्म त्रयाणां गुणयोगात्पुत्रजन्म वैगुण्याद्विपर्ययः । इष्ट्याश्रयं तावत्कर्मवैगुण्यं समीहाभ्रेषः । कर्तृवैगुण्यम्—अविद्वान्प्रयोक्ता कपूयचरणश्च । साधनवैगुण्यम् हविरसंस्कृतमुपहतमिति मन्त्रा न्यूनाधिकाः स्वरवर्णहीना इति । दक्षिणा दुरागता हीना निन्दिता चेति । अथोपजनाश्रयं कर्मवैगुण्यं मिथ्यासंप्रयोगः । कर्तृवैगुण्यं योनिव्यापादो बीजोपघातश्चेति । साधनवैगुण्यमिष्टावभिहितम् । लोके चाग्निकामो दारुणी मथ्नीयादिति विधिवाक्यं तत्र कर्मवैगुण्यं मिथ्याभिमन्थनं कर्तृवैगुण्यं प्रज्ञाप्रयत्नगतः प्रमादः । साधनवैगुण्यमार्द्रं सुषिरं दार्विति तत्र फलं न निष्पद्यत इति नानृतदोषः । गुणयोगेन फलनिष्पत्तिदर्शनात् । न चेदं लौकिकाद्भिद्यते पुत्रकामः पुत्रेष्ट्या यजेतेति ॥ ५८ ॥

अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५९ ॥

भा०—न व्याघातो हवन इत्यनुवर्तते । योऽभ्युपगतं हवनकालं

---

तद्दृष्टान्तेन तदेककर्तृकत्वेन तदेकजातीयत्वेन वा सर्ववेदाप्रामाण्यं साधनीयमिति भावः ॥ ५७ ॥

वृ०—सिद्धान्तसूत्रम् । न वेदाप्रामाण्यं कर्मकर्तृसाधनवैगुण्यात्फलाभावोपपत्तेः । कर्मणः क्रियाया वैगुण्यमयथाविधित्वादि । कर्तुर्वैगुण्यमविद्वत्त्वादि । साधनस्य हविरादेर्वैगुण्यमप्रोक्षितत्वादि । यथोक्तकर्मणः फलाभावे ह्यनृतत्वं न चैवमस्तीति भावः ॥ ५८ ॥

वृ०—व्याघातं परिहरति—न व्याघात इति शेषः । अग्न्याधानकाल

---

१ ख. घ. ङ. शब्द इति । अनृ° । २ क ग. च. इज्याश्र° । ३ क. च. °पयज° ।

भिनत्ति उतोऽन्यत्र जुहोति तत्रायमभ्युपगतकालभेदे दोष उच्यते श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति । तदिदं विधिभ्रंशे निन्दावचनमिति ॥ ५९ ॥

**अनुवादोपपत्तेश्च ॥ ६० ॥**

भा०—पुनरुक्तदोषोऽभ्यासेनेति प्रकृतम् । अनर्थकोऽभ्यासः पुनरुक्तः । अर्थवानभ्यासोऽनुवादः * । योऽयमभ्यासस्त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यनुवाद उपपद्यतेऽर्थवत्त्वात् । त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्चदशत्वं सामिधेनीनां भवति । तथा च मन्त्राभिवादः—इदमहं भ्रातृव्यं पञ्चदशारेण वाग्वज्रेण बाधे योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति पञ्चदश सामिधेनीर्वज्रमन्त्रोऽभिवदति तदभ्यासमन्तरेण न स्यादिति ॥ ६० ॥

**वाक्यविभागस्य चार्थग्रहणात् ॥ ६१ ॥**

भा०—प्रमाणं शब्दो यथा लोके ॥ ६१ ॥

---

उदितहोमादिकमभ्युपेत्य स्वीकृत्यानुदितहोमादिकरणे पूर्वोक्तदोषकथनान्न व्याघात इत्यर्थः ॥ ५९ ॥

वृ०—पौनरुक्त्यं परिहरति—च पुनरर्थे । अनुवादोपपत्तेः पुनर्न पौनरुक्त्यम् । निष्प्रयोजनत्वे हि पौनरुक्त्यं दोषः । उक्तस्थले त्वनुवादस्योपपत्तेः प्रयोजनस्य संभवात् । एकादशसामिधेनीनां प्रथमोत्तमयोस्त्रिरभिधाने हि पञ्चदशत्वं संभवति । तथा च पञ्चदशत्वं श्रूयते—' इममहं भ्रातृव्यं पञ्चदशावरेण[1] वाग्वज्रेण च बाधे योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ' इति ॥ ६० ॥

वृ०—अनुवादस्य सार्थकत्वं लोकसिद्धमित्याह—वाक्यविभागस्यानुवादत्वेन विभक्तवाक्यस्यार्थग्रहणात्प्रयोजनस्वीकारात् । शिष्टैरिति शेषः । शिष्टा हि विधायकानुवादकादिभेदेन वाक्यं विभज्यानुवादकस्यापि सप्रयोजनत्वं मन्यन्ते । वेदेऽप्येवमिति भावः ॥ ६१ ॥

---

* पुनरुक्तं नाम तस्यैवार्थस्यानङ्गीकृतविशेषस्य यत्पुनर्वचनं तत् । अनुवादो नाम श्रुतिसामान्यादङ्गीकृतविशेषस्यार्थस्य वादः । एवं च सति उक्तदोषो न भवतीति भावः ।

---

१ क. ङ. च. °शावरे° ।

भा०—विभागश्च ब्राह्मणवाक्यानां त्रिविधः—

विध्यर्थवादानुवादवचनविनियोगात् ॥ ६२ ॥

त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि विधिवचनान्यर्थवादवचनान्यनुवादवचनानीति ॥ ६२ ॥

भा०—तत्र—

विधिर्विधायकः ॥ ६३ ॥

यद्वाक्यं विधायकं चोदकं स विधिः। विधिस्तु नियोगोऽनुज्ञा वा। यथाऽग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादि ॥ ६३ ॥

स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥ ६४ ॥

भा०—विधेः फलवादलक्षणा या प्रशंसा सा स्तुतिः संप्रत्ययार्थं स्तूयमानं[१] श्रद्दधीतेति। प्रवर्तिका च फलश्रवणात्प्रवर्तते। सर्वजिता[२] वै देवाः सर्वमजयन्सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयतीत्येवमादि। अनिष्टफलवादो

वृ०—वेदे वाक्यविभागं दर्शयति—मन्त्रब्राह्मणभेदाद्द्विधा वेदः। तत्र ब्राह्मणस्यायं विभागः। विधिवचनत्वेनार्थवादवचनत्वेनानुवादवचनत्वेन च वेदस्य विनियोगाद्विभजनात्। अथवा विनियोगाद्भेदात्। तथा च विध्यादिभेदाद्ब्राह्मणभागस्त्रिधेति शेषः ॥ ६२ ॥

वृ०—तत्र विधिलक्षणमाह—इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधिः 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादि। अर्थवादः—अर्थस्य प्रयोजनस्य वदनं विध्यर्थप्रशंसापरं वचनमित्यर्थः। अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थं शीघ्रं प्रवृत्तये प्रशंसति ॥ ६३ ॥

वृ०—तत्र स्तुत्यादिभेदादर्थवादं विभजते—स्तुतिः साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम्। यथा—सर्वजिता वै देवाः सर्वमजयन्सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयतीत्यादि। अनिष्टबोधनद्वारा विध्यर्थप्रवर्तकं निन्दा। एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमीय एतेनानिष्ट्वाऽन्येन यजते

१ ख. घ. 'यार्था स्तू°। ग. 'यार्थः स्तू'। २ ख. घ. °जितो वै।

निन्दा वर्जनार्थं[1] निन्दितं न समाचरेदिति स एष वाव[2] प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो[3] य एतेनानिष्ट्वाऽन्येन यजते गर्ते पतत्ययमेवैतज्जीर्यते वा प्रमीयते वा, इत्येवमादि । अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः । हुत्वा वपामेवाग्रेऽभिघारयन्ति अथ पृषदाज्यं तदु ह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति[4] अग्नेः प्राणाः पृषदाज्यं स्तोममित्येवमभिदधतीत्येवमादि । ऐतिह्यसमाचरितो विधिः पुराकल्प इति । तस्माद्वा एतेन ब्राह्मणा बहिष्पवमानं सामस्तोममस्तौषन्योने[5] यज्ञं प्रतनवामह इत्येवमादिः । कथं परकृतिपुराकल्पावर्थवादाविति । स्तुतिनिन्दावाक्येनाभिसंबन्धाद्विध्याश्रयस्य कस्यचिदर्थस्य द्योतनादर्थवाद *इति ॥ ६४ ॥

विधिविहितस्यानुवचनमनुवादः ॥ ६५ ॥

भा०—विध्यनुवचनं चानुवादो विहितानुवचनं च । पूर्वः शब्दानुवादोऽपरोऽर्थानुवादः । यथा पुनरुक्तं द्विविधमेवमनुवादोऽपि ।

---

स गर्ते पतत्ययमेवैतज्जीर्यते प्र वा मीयत इत्यादि । पुरुषविशेषनिष्ठमिथोविरुद्धकथनं परकृतिः । यथा—हुत्वा वपामेवाग्रेऽभिघारयन्त्यथ पृषदाज्यं तदु ह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेः प्राणाः पृषदाज्यमित्यभिदधतीत्यादि । ऐतिह्यसमाचरिततया कीर्तनं पुराकल्पः । यथा–तस्माद्वा एतेन पुरा ब्राह्मणा बहिष्पवमानं[6] सामस्तोममस्तौषन्यज्ञं प्रतनवामह इत्यादि ॥ ६४ ॥

वृ०—अनुवादलक्षणमाह—प्राप्तस्यानु पश्चात्कथनं सप्रयोजनमनुवाद इति सामान्यलक्षणम् । तद्विशेषो विधिविहितस्येति । विध्यनुवादो विहितानुवाद-

---

* स चार्थवादः प्रकारान्तरेण त्रिविधः—गुणवादोऽनुवादो भूतार्थवादश्चेति । तत्र प्रमाणान्तरविरुद्धार्थबोधको गुणवादः । यथा—आदित्यो यूप इति । प्रमाणान्तरप्राप्तार्थबोधकोऽनुवादः । यथा—अग्निर्हिमस्य भेषजमिति । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवादः । यथा—इन्द्रो वृत्राय वज्रमुद्यच्छदिति । तदुक्तम्—विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ इति ।

---

१ ख. घ. नार्था नि॰ । २ ख. घ. वा च प्र॰ । ३ ग. ङ. यज्जोति॰ । ४ क. ख. ग. घ. च. ॰भिधार॰ । ५ ख. घ. ॰नं । वा पू॰ । ६ छ. ॰मानसा॰ ।

किमर्थं पुनर्विहितमनूद्यते । अधिकारार्थम्, विहितमधिकृत्य । स्तुतिर्बोध्यते निन्दा वा विधिशेषो वाऽभिधीयते । विहितानन्तरार्थोऽपि चानुवादो भवति एवमन्यदप्युत्प्रेक्षणीयम् । लोकेऽपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम् । ओदनं पचेदिति विधिवाक्यम् । अर्थवादवाक्यमायुर्वर्चो बलं सुखं प्रतिभानं चान्ने प्रतिष्ठितम् । अनुवादः पचतु पचतु भवानित्यभ्यासः क्षिप्रं पच्यतामिति वाऽङ्ग पच्यतामित्यध्येषणार्थम् । पच्यतामेवेति[१] वाऽवधारणार्थम् । यथा लौकिके वाक्ये विभागेनार्थग्रहणात्प्रमाणत्वमेवं वेदवाक्यानामपि विभागेनार्थग्रहणात्प्रमाणत्वं भवितुमर्हतीति ॥ ६५ ॥

**नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥ ६६ ॥**

भा०—पुनरुक्तमसाधु साधुरनुवाद इत्ययं विशेषो नोपपद्यते । कस्मात् । उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते चरितार्थस्य शब्दस्याभ्यासादुभयमसाध्विति* ॥ ६६ ॥

**शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६७ ॥**

भा०–नानुवादपुनरुक्तयोरविशेषः । कस्मात् । अर्थवतोऽभ्यासस्यानुवादभावात् । समानेऽभ्यासे पुनरुक्तमनर्थकम् । अर्थवानभ्यासोऽनुवादः शीघ्रतरगमनोपदेशवत् । शीघ्रं शीघ्रं गम्यतां शीघ्रतरं गम्यतामिति क्रियातिशयोऽभ्यासेनैवोच्यते । उदाहरणार्थं

---

श्चेत्यर्थः । अयं चार्थवादानुवादविभागो विधिसमभिव्याहृतवाक्यानां तेन भूतार्थवादरूपाणां वेदान्तवाक्यानामपरिग्रहान्न न्यूनता ॥ ६५ ॥

वृ०—शङ्कते–शब्दाभ्यासस्य बोधितार्थकशब्दस्य योऽभ्यासः पुनः प्रयोगस्तस्योपपत्तेः सत्त्वादनुवादः पुनरुक्तान्न भिद्यत इत्यर्थः ॥ ६६ ॥

वृ०—समाधत्ते—अनुवादस्य पुनरुक्तान्नाविशेषः । अभ्यासादभ्यासस्य सप्रयोजनत्वात् । तत्र दृष्टान्तमाह—शीघ्रेति । यथा लोके गम्यतामित्युक्त्वा

---

* प्रतीतार्थशब्दाभ्यासोऽर्थवादपुनरुक्तयोः सामान्यम् । अतः प्रतीतार्थशब्दाभ्यासादुभयमसाध्विति भावः ।

---

१ ङ. °ति चाव° ।

चेदम् । एवमन्योऽप्यभ्यासः । पचति पचतीति क्रियानुपरमः । ग्रामो ग्रामो रमणीय इति व्याप्तिः । परि परि त्रिगर्तेभ्यो वृष्टो देव इति परिवर्जनम् । अध्यधि कुड्यं निषण्णमिति सामीप्यम् । तिक्तं तिक्तमिति प्रकारः । एवमनुवादस्य स्तुतिनिन्दाशेषविधिष्वधिकारार्थता विहितानन्तरार्थता चेति ॥ ६७ ॥

भा०—किं पुनः प्रतिषेधहेतूद्धारादेव शब्दस्य प्रमाणत्वं सिध्यति ।

अतश्च—

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६८ ॥

किं पुनरायुर्वेदस्य प्रामाण्यम् । यत्तदायुर्वेदेनोपदिश्यत इदं कृत्वेष्टमधिगच्छति, इदं वर्जयित्वाऽनिष्टं जहाति तस्यानुष्ठीयमानस्य तथाभावः सत्यार्थताऽविपर्ययः । मन्त्रपदानां च विषभूताशनिप्रतिषेधार्थानां प्रयोगेऽर्थस्य तथाभाव एतत्प्रामाण्यम् । किंकृतमेतत् । आप्तप्रामाण्यकृतम् । किं पुनराप्तानां प्रामाण्यम् । साक्षात्कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषेति । आप्ताः खलु साक्षात्कृतधर्माण इदं हातव्यमयमस्य हानिहेतुरिदमस्याधिगन्तव्यमयमस्याधिगमहेतुरिति भूतान्यनुकम्पन्ते । तेषां खलु वै प्राणभृतां स्वयमनवबुध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति । न चानवबोधे समीहावर्जनं वा न वाऽकृत्वा स्वस्तिभावो नाप्यस्यान्य उपकारकोऽप्यस्ति हन्त वयमेभ्यो यथादर्शनं

---

पुनर्गम्यतां गम्यतामित्यादि कर्माविलम्बादिबोधार्थमुच्यते तथा प्रकुलेऽपीति ॥ ६७ ॥

वृ०—एवमप्रामाण्यसाधकं निरस्य प्रामाण्यं साधयति—आप्तस्य वेदकर्तुः प्रामाण्याद्यथार्थोपदेशकत्वाद्वेदस्य तदुक्तत्वमर्थाल्लब्धं तेन हेतुना वेदस्य

---

१ ख. ग. घ प्राकृ° ।

यथाभूतमुपदिशामस्त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्त्यधिगन्तव्यमेवाधिगमिष्यन्तीति। एवमाप्तोपदेशः। एतेन त्रिविधेनाऽऽप्तप्रामाण्येन परिगृहीतोऽनुष्ठीयमानोऽर्थस्य साधको भवति। एवमाप्तोपदेशः प्रमाणमेवमाप्ताः प्रमाणम्। दृष्टार्थेनाऽऽप्तोपदेशेनाऽऽयुर्वेदेनादृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणमिति। आप्तप्रामाण्यस्य हेतोः समानत्वादिति। अस्यापि चैकदेशो ग्रामकामो यजेतेत्येवमादिर्दृष्टार्थस्तेनानुमातव्यमिति। लोके च भूयानुपदेशाश्रयो व्यवहारः। लौकिकस्याप्युपदेष्टुरुपदेष्टव्यार्थज्ञानपरानुजिघृक्षया यथाभूतार्थचिख्यापयिषया च प्रामाण्यं तत्परिग्रहादाप्तोपदेशः प्रमाणमिति। द्रष्टृप्रवक्तृसामान्याच्चानुमानं य एवाऽऽप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवाऽऽयुर्वेदप्रभृतीनामित्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यमनुमातव्यमि*ति। नित्यत्वाद्वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्ययुक्तम्। शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वं न नित्यत्वात्। नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थानुपपत्तिः। नानित्यत्वे वाचकत्वमिति चेन्न लौकिकेष्वर्थदर्शनात्। तेऽपि नित्या इति चेन्नानाप्तोपदेशादर्थविसंवादोऽनुपपन्नः। नित्यत्वाद्धि शब्दः प्रमाणमिति। अनित्यः स इति वेदविशेषवचनम्। अनाप्तोपदेशो लौकिको न नित्य इति कारणं वाच्यमिति। यथानियोगं चार्थस्य प्रत्यायनान्नामधेयशब्दानां लोके प्रामाण्यं नित्यत्वात्प्रामाण्यानुपपत्तिः।

---

प्रामाण्यमनुमेयम्। तत्र दृष्टान्तमाह—मन्त्रायुर्वेदवदिति। मन्त्रो विषा-

---

* तथा च प्रयोगः—वेदवाक्यानि पक्षीकृत्य प्रामाण्यं साध्यते वक्तृविशेषाभिहितत्वान्मन्त्रायुर्वेदवाक्यवदिति।

---

१ ङ. °थायो°।

यत्रार्थे नामधेयशब्दो नियुज्यते लोके तस्य नियोगसामर्थ्यात्प्रत्यायको भवति न नित्यत्वात् । मन्वन्तरयुगान्तरेषु चातीतानागतेषु संप्रदायाभ्यासप्रयोगाविच्छेदो वेदानां नित्यत्वम् × ।

---

दिनाशकः । आयुर्वेदभागश्च वेदस्थ एव तत्र संवादेन प्रामाण्यग्रहात् । तद्ध-

---

× अत्रेदं बोध्यम्—मन्वन्तरयुगान्तरेषु तान्येव वेदवाक्यानि संप्रदायाभ्यासाविच्छेदेन प्रवर्तन्ते तदपेक्षया लौकिकाः ' नित्या वेदाः ' इति प्रयुञ्जते नित्याः पर्वता इति यथा । न तु वास्तवनित्यत्वापेक्षया तथा प्रयोगः । अनित्यत्वप्रमाणानामव्याहतत्वात् । नित्यत्वं त्वौपचारिकमेव । ननु अपौरुषेया वेदाः संप्रदायाविच्छेदे सति अस्मर्यमाणकर्तृकत्वादात्मवदिति चेत् । नैतद्युक्तम् । पौरुषेयत्ववादिभिः प्रलये संप्रदायविच्छेदस्याङ्गीकाराद्विशेषणासिद्धेः । किं च किमिदमस्मर्यमाणकर्तृकत्वं नामाप्रमाणसिद्धकर्तृकत्वमाहोस्विदस्मरणगोचरकर्तृकत्वम् । नाऽऽद्यः । परमेश्वरस्य कर्तुः प्रमितेरभ्युपगमात् । न द्वितीयः । तथाहि—किमेकेनास्मरणमभिप्रेयते सर्वैर्वा । न प्रथमः । ' यो धर्मशीलो जितमानरोषः ' इत्याद्युक्तिषु व्यभिचारात् । न द्वितीयः । सर्वास्मरणस्यासर्वज्ञैर्ज्ञातुमशक्यत्वात् । पौरुषेयत्वे प्रमाणसंभवाच्च । तथा च प्रयोगः—वेदवाक्यानि पौरुषेयाणि वाक्यत्वात्कालिदासादिवाक्यवत् । वेदवाक्यान्याप्तप्रणीतानि प्रमाणत्वे सति वाक्यत्वान्मन्वादिवाक्यवदिति । ननु ' वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । वेदाध्ययनसामान्यादधुनाऽध्ययनं यथा इत्यनुमानं प्रतिसाधनमग्रे धावतीति चेत् । तदपि न । ' भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । भारताध्ययनत्वेन सांप्रताध्ययनं यथा ' ॥ इति आभाससमानयोगक्षेमत्वात् । ननु तत्र व्यासः कर्तेति ' को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ' इत्यादौ स्मर्यत इति चेत् । सत्यम् । ' ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ' इति पुरुषसूक्ते वेदस्य सकर्तृकताप्रतिपादनात् । किं चानित्यः शब्दः सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वाद्घटवत् । नन्विदमनुमानं स एवायं गकार इति प्रत्यभिज्ञाप्रमाणप्रतिहतमिति चेत् । तत्तुच्छम् । लूनपुनर्जातकेशदलितकुन्दादाविव प्रत्यभिज्ञायाः सामान्यविषयत्वेन बाधकत्वाभावात् । ननु अशरीरस्य परमेश्वरस्य ताल्वादिस्थानाभावेन वर्णोच्चारणासंभवात्कथं तत्प्रणीतत्वं वेदस्य स्यादिति चेत् । शृणु । स्वभावतोऽशरीरस्यापि तस्य भक्तानुग्रहार्थं लीलाशरीरग्रहणसंभवः । तस्माद्वेदस्यापौरुषेयत्ववाचोयुक्तिर्न युक्ता ।

---

१ ङ. तत्र नि° ।

आप्तप्रामाण्याच्च प्रामाण्यं लौकिकेषु शब्देषु चैतत्समानमिति ॥ ६८ ॥

इति शब्दविशेषपरीक्षाप्रकरणम् ॥ ९ ॥

इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्याऽऽद्यमाह्निकम् ॥ १ ॥

---

भा०—अयथार्थः प्रमाणोद्देश इति मत्वाऽऽह—

**न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात् ॥ १ ॥**

न चत्वार्येव प्रमाणानि किं तर्हि ऐतिह्यमर्थापत्तिः संभवोऽभाव इत्येतान्यपि प्रमाणानि[1] । इति होचुरित्यनिर्दिष्टप्रवक्तृकं

---

ष्टान्तेन वेदत्वावच्छेदेन प्रामाण्यमनुमेयम् । आप्तं गृहीतं प्रामाण्यं यत्र स वेदस्तादृशेन वेदत्वेन प्रामाण्यमनुमेयमिति केचित् ॥ ६८ ॥

इति शब्दविशेषपरीक्षाप्रकरणम् ॥ ९ ॥

---

इति श्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ विभागपरीक्षानिरपेक्षसाङ्गप्रमाणपरीक्षणं नाम द्वितीयाध्यायस्याऽऽद्यमाह्निकम् ॥ १ ॥

---

वृ०—अथ विभागसापेक्षं प्रमाणपरीक्षणं तदेव चाऽऽह्निकार्थः । चत्वारि चात्र प्रकरणानि । तत्राऽऽदौ चतुष्ट्वपरीक्षाप्रकरणम् । अन्यानि च तत्र तत्र वक्ष्यन्ते । तत्राऽऽक्षेपसूत्रम् । प्रमाणानां न चतुष्ट्वम् । प्रमाणत्वं नोक्तचतुष्कान्यतमत्वव्याप्यमुक्तान्यवृत्तित्वात् । तत्रान्यवृत्तित्वं व्युत्पादयति—ऐतिह्येत्यादि । ऐतिह्यम्—इति होचुरित्यनेन प्रकारेण यदुच्यते । तद्धि अनिर्दिष्टप्रवक्तृकं परम्परागतं वाक्यम् । यथा वटे वटे यक्ष इत्यादि । तस्य चाऽऽप्तोक्तत्वानिश्चयान्न शब्देऽन्तर्भाव इति भावः । अर्थापत्तिः—अनुपपद्यमानेनार्थेनोपपादककल्पनम् । यथा वृष्ट्या मेघज्ञानम् । वृष्ट्या सह मेघस्य

---

१ ख. ब. ङ. °नि तानि कस्मान्नोक्तानि । इ° ।

प्रवादपारम्पर्यमैतिह्यम् । अर्थादापत्तिरर्थापत्तिः+ । आपत्तिः प्राप्तिः प्रसङ्गः । यत्राभिधीयमानेऽर्थे योऽन्योऽर्थः प्रसज्यते सोऽर्थापत्तिः । यथा मेघेष्वसत्सु वृष्टिर्न भवतीति । किमत्र प्रसज्यते । सत्सु भवतीति । संभवो नाम—अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम् । यथा—द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम्, आढकस्य सत्ताग्रहणात्प्रस्थस्येति । अ-

---

वैयधिकरण्यान्न व्याप्तिरिति नानुमानेऽन्तर्भावः । संभवः—भूयःसहचाराधीनज्ञानम् । यथा संभवति ब्राह्मणे विद्या । संभवति सहस्रे शतम् । अत्र च व्याप्तिर्नापेक्षितेत्याशयः । अभावस्तु—विरोध्यभावज्ञानाधीनविरोध्यन्तरक-

---

+ अयं भावः—उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः । तत्रोपपाद्यज्ञानं करणम् । उपपादकज्ञानं फलम् । येन विना यदनुपपन्नं तत्तत्रोपपाद्यम् । यस्याभावे यस्यानुपपत्तिस्तत्तत्रोपपादकम् । यथा—रात्रिभोजनेन विना दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृशपीनत्वमुपपाद्यम् । यथा वा—रात्रिभोजनस्याभावे तादृशपीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकम् । अर्थस्याऽऽपत्तिः कल्पनेति षष्ठीसमासेन रात्रिभोजनकल्पनारूपायां प्रमितावर्थापत्तिशब्दो वर्तते । अर्थस्याऽऽपत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन कल्पनाकरणे पीनत्वादिज्ञाने वर्तत इति फलकरणयोरुभयोरर्थापत्तिपदप्रयोगः । सा चार्थापत्तिर्द्विविधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति । तत्र दृष्टार्थापत्तिर्यथा—पुरोवर्तिन्यां शुक्तौ ‘ इदं रजतम् ’ इति प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैव निषिध्यमानत्वं सत्यत्वे सति अनुपपन्नमिति रजतस्य सद्भिन्नत्वं सत्त्वात्यन्ताभाववत्त्वं वा मिथ्यात्वं कल्पयति । श्रुतार्थापत्तिर्नाम यत्र श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थान्तरकल्पनम् । यथा—तरति शोकमात्मविदित्यत्र श्रुतस्य शोकशब्दवाच्यस्य बन्धजातस्य ज्ञाननिवर्त्यत्वानुपपत्त्या बन्धस्य मिथ्यात्वं कल्प्यते । श्रुतार्थापत्तिश्च द्विधा । अभिधानानुपपत्तिरभिहितानुपपत्तिश्च । यत्र वाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्याऽन्वयाभिधानोपयोगिपदान्तरं कल्प्यते तत्राभिधानानुपपत्तिः । यथा—द्वारमित्यत्र पिधेहीत्यध्याहारः । अभिहितानुपपत्तिस्तु यत्र वाक्यावगतोऽर्थोऽनुपपन्नत्वेन ज्ञातः सन्नर्थान्तरं कल्पयति तत्र द्रष्टव्या । यथा—स्वर्गकामो ज्योतिष्टोमेन यजेतेत्यत्र क्षणिकतयाऽवगतस्य ज्योतिष्टोमस्य स्वर्गसाधनत्वानुपपत्त्या मध्यवर्ति अपूर्वं कल्प्यत इति ।

---

१ ख. ग. ङ. यथाऽभि° ।

भावो विरोध्यभूतं भूतस्य । अविद्यमानं वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकं विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म न भवतीति । सत्यम् । एतानि प्रमाणानि न तु प्रमाणान्तराणि ॥ १ ॥

भा०—प्रमाणान्तरं च मन्यमानेन प्रतिषेध उच्यते । सोऽयम्—

**शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसंभवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥**

अनुपपन्नः प्रतिषेधः । कथम् । आप्तोपदेशः शब्द इति । न च शब्दलक्षणमैतिह्याद्व्यावर्तते । सोऽयं भेदः सामान्यात्संगृह्यत इति । प्रत्यक्षेणाप्रत्यक्षस्य संबन्धस्य प्रतिपत्तिरनुमानम् । तथा चार्थापत्तिसंभवाभावाः । वाक्यार्थसंप्रत्ययेनानभिहितस्यार्थस्य प्रत्यनीकभावाद्ग्रहणमर्थापत्तिरनु+मानमेव । अविनाभाववृत्त्या च संबद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं संभवः, तदप्यनुमानमेव । अस्मिन्सतीदं नोपपद्यत इति विरोधित्वे प्रसिद्धे

---

ल्पनम् । यथा नकुलाभावज्ञानेन नकुलविरोधिनो व्यालस्य कल्पनम् । अत्रापि व्याप्तिर्नापेक्षितेत्याशयः । अथवा कारणाभावादिना कार्याभावादिज्ञानमभावः । भावनिष्ठव्याप्तिरेवानुमानाङ्गमित्याशयः ॥ १ ॥

वृ०—सिद्धान्तसूत्रम् । न प्रमाणचतुष्टयस्य प्रतिषेधः । शब्द ऐतिह्यस्यानर्थान्तरभावादन्तर्भावात् । सामान्यत आप्तोक्तत्वज्ञानसंभवात् । वस्तुत आप्तोक्तत्वज्ञानं न शाब्दे कारणं किंतु आकाङ्क्षादिज्ञानम् । योग्यताप्रमाधीना च शाब्दप्रमेति अर्थापत्त्यादेरनुमानेऽन्तर्भावः । उपपादककल्पनं हि विना व्याप्तिज्ञानं न संभवति । वृष्टित्वादावपि मेघजन्यत्वव्याप्तिरस्त्येव । संभवोऽपि व्याप्तिमूलकत्वादनुमानम् । व्याप्त्यनपेक्षत्वे च व्यभिचारादप्रमाणम् । एवम-

---

+ अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते । व्यतिरेकव्याप्तिबुद्ध्या चारितार्था हि सा यतः ।

---

१ क. च. तथा चा'

कार्यानुत्पत्त्या कारणस्य प्रतिबन्धकमनुमीयते सोऽयं यथार्थ एव प्रमाणोद्देश इति ' सत्यम् । एतानि प्रमाणानि न तु प्रमाणान्तराणि ' इत्युक्तम् ॥ २ ॥

भा०—अत्रार्थापत्तेः प्रमाणाभावाभ्यनुज्ञा नोपपद्यते । तथाहि—इयम्—

अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ॥ ३ ॥

असत्सु मेघेषु वृष्टिर्न भवतीति सत्सु भवतीत्येतदर्थादापद्यते । सत्स्वपि चैकदा न भवति सेयमर्थापत्तिरप्रमाणमिति ॥ ३ ॥

भा०—नानैकान्तिकत्वमर्थापत्तेः—

अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥

असति कारणे कार्यं नोत्पद्यत इति वाक्यात्प्रत्यनीकभूतोऽर्थः[1] सति कारणे कार्यमुत्पद्यत इत्यर्थादापद्यते । अभावस्य हि भावः प्रत्यनीक इति सोऽयं कार्योत्पादः सति कारणेऽर्थादापद्यमानो न कारणस्य सत्तां व्यभिचरति । न खल्वसति कारणे कार्यमुत्पद्यते तस्मान्नानैकान्तिकी । यत्तु सति कारणे निमित्तप्रतिबन्धात्कार्यं नोत्पद्यत इति कारणधर्मोऽसौ न त्वर्थापत्तेः प्रमेयम् । किं तर्ह्यस्याः प्रमेयम् । सति कारणे कार्यमुत्पद्यत इति योऽसौ कार्योत्पादः कारणस्य सत्तां न व्यभिचरति एतदस्याः

---

भावो व्याप्तिसापेक्षोऽनुमानम् । अभावनिष्ठव्याप्तेश्चानुमानाङ्गत्वे न विरोध इति भावः ॥ २ ॥

वृ०—सति अर्थापत्तेः प्रामाण्ये बहिर्भावान्तर्भावचिन्ता । तदेव तु नास्तीति तटस्थः शङ्कते—असति मेघे वृष्टिर्न भवतीत्यनेन सति मेघे वृष्टिर्भवतीत्यर्थापत्तिविषयः । तत्र च न प्रामाण्यम् । सत्यपि मेघे वृष्ट्यभावादनैकान्तिकत्वात् ॥३॥

वृ०—समाधत्ते—अर्थापत्तेर्नानैकान्तिकत्वमिति शेषः । असत्सु मेघेषु न वृष्टिरित्यनेन सति मेघे वृष्टिरिति । तत्र च वृष्ट्या मेघज्ञानमभिमतम् । यत्र च मेघे न वृष्टिज्ञानं तत्रानर्थापत्तावर्थापत्तिभ्रमः । न चैतावता प्रामाण्यविरोधः ।

---

१ ग. ङ. हि वाक्यात्प्र°।

प्रमेयम् । एवं तु सति अनर्थापत्तावर्थापत्त्यभिमानं कृत्वा प्रतिषेध उच्यत इति । दृष्टश्च कारणधर्मो न शक्यः प्रत्याख्यातुमिति ॥४॥

**प्रतिषेधाप्रामाण्यं चानै-कान्तिकत्वात् ॥ ५ ॥**

भा०—अर्थापत्तिर्न प्रमाणमनैकान्तिकत्वादिति वाक्यं प्रतिषेधः । तेनानेनार्थापत्तेः प्रमाणत्वं प्रतिषिध्यते न सद्भाव*ः । एवमनैकान्तिको भवति । अनैकान्तिकत्वादप्रमाणेनानेन न कश्चिदर्थः प्रतिषिध्यत इति ॥ ५ ॥

भा०—अथ मन्यसे नियतविषयेष्वर्थेषु स्वविषये व्यभिचारो भवति न च प्रतिषेधस्य सद्भावो विष+यः । एवं तर्हि—

**तत्प्रामाण्ये वा नार्थाप-त्त्यप्रामा×ण्यम् ॥ ६ ॥**

अर्थापत्तेरपि कार्योत्पादेन कारणसत्ताया अव्यभिचारो

---

व्याप्त्यादिभ्रमाद्भ्रमानुमितिदर्शनादनुमानस्याप्यप्रामाण्यापत्तेर्नानैकान्तिकत्वमर्थापत्तेरितिभाष्यस्थावतारणिकां सूत्रादौ केचिल्लिखन्ति ॥ ४ ॥

वृ०—प्रतिबन्धिमप्याह—त्वदुक्तरीत्या त्वदीयप्रतिषेधस्याप्रामाण्यं स्यादनैकान्तिकत्वात् । यत्र कुत्रचिदनैकान्तिकत्वस्य प्रतिषेधासाधकत्वादनैकान्तिकत्वात् ॥ ५ ॥

वृ०—अथ यत्र कुत्रचिदनैकान्तिकत्वं न दोषाय किंतु स्वविषये, इति यदि तदाऽर्थापत्तेरपि नाप्रामाण्यमित्याह । अनैकान्तिकत्वस्य स्वविषये साधक-

---

* ननु सत्ताप्रतिषेधः कथं नेति चेत् । शृणु यस्मादर्थापत्तिविशेषः प्रतिषिध्यते नत्वर्थापत्तिमात्रं तेन सत्ताया अप्रतिषेधादनैकान्तिको भवतीति भावः । + अयं भावः—उक्तप्रतिषेधस्य न सत्त्वं विषयः किंतु प्रमाणत्वम् । सोऽयं स्वविषये विद्यमानो नानैकान्तिको भवितुमर्हति । अनैकान्तिको हि स ज्ञेयो यः स्वविषयतज्जातीयान्यवृत्तिः । न ह्यनैकान्तिकं प्रमाणमस्ति । तस्मान्नानैकान्तिकः प्रतिषेध इति । × यदि स्वविषयतज्जातीयान्यवृत्तिरनैकान्तिक इत्युच्यते तर्हि अर्थापत्तिरपि अनैकान्तिकी न भवति । न ह्यसति कारणे कार्यमुत्पद्यमानं दृष्टमिति भावः ।

विषयः । न च कारणधर्मो निमित्तप्रतिबन्धात्कार्यानुत्पादकत्व-
मिति ॥ ६ ॥

भा०–अभावस्य तर्हि प्रमाणभावाभ्यनुज्ञा नोत्पद्यते कथमिति—

नाऽभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥

अभावस्य भूयसि प्रमेये लोकसिद्धे वैयात्यादुच्यते–नाभा-
वप्रामाण्यं प्रमेयासिद्धेरिति ॥ ७ ॥

भा०–अथायमर्थबहुत्वादर्थैकदेश उदाह्रियते—

लक्षितेष्वलक्षणलक्षितत्वादलक्षि-
तानां तत्प्रमेयसिद्धिः ॥ ८ ॥

तस्याभावस्य सिध्यति प्रमेयम् । कथम् । लक्षितेषु वासःसु
अनुपादेयेषु, उपादेयानामलक्षितानामलक्षणलक्षितत्वाल्लक्षणाभा-
वेन लक्षितत्वादिति । उभयसंनिधावलक्षितानि वासांस्यानयेति

---

त्वाद्यदि स्वहेतोः प्रामाण्यं मन्यसे तदाऽर्थापत्तेरपि स्वविषये प्रामाण्य-
मिति ॥ ६ ॥

वृ०–अभावस्य न प्रमाणेऽन्तर्भाव इति तटस्थः शङ्कते—अभावनामकं
प्रमाणं तदा स्याद्यदि तस्य प्रमेयं सिध्येत्तदेव तु नास्ति । अभावस्य तुच्छ-
त्वान्न तत्र प्रमाणप्रवृत्तिरिति भावः ॥ ७ ॥

वृ०–सिद्धान्तसूत्रम् । तस्याभावप्रमाणस्य प्रमेयसिद्धिः । भावप्रधानो निर्देशः
किं तत्प्रमेयमित्यत्राऽऽह—लक्षितेष्विति । लक्षितेषु घटादिष्वलक्षितानां तत्प्र-
मेयसिद्धिः । अलक्षितानां कथं प्रमेयत्वमत आह—अलक्षणलक्षितत्वादिति ।
यद्यप्यभावस्य गुणकर्मादिभिर्लक्षणं न संभवति तथाऽप्यलक्षणेनैव तल्लक्षितं

---

* नाभावः प्रमाणं विषयाभावात् । यच्चाविषयं तदप्रमाणम् । यथा गोशब्दोऽश्वप्र-
तिपादने तथा चाभावः । तस्मादप्रमाणमित्याशयः ।

---

१ क. ग. च. वैजात्या° । २ क. ग. ङ. च. °सिद्धेः ॥ ८ ॥ त° ।

प्रयुक्तो येषु वासःसु लक्षणानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यते प्रतिपद्य चाऽऽनयति। प्रतिपत्तिहेतुश्च प्रमाणमिति ॥८॥

**असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥**

भा०—यत्र भूत्वा किंचिन्न भवति तत्र तस्याभाव उपपद्यते । अलक्षितेषु च वासःसु न लक्षणानि भूत्वा न भवन्ति। तस्मात्तेषु लक्षणाभावोऽनुपपन्न इति । नान्यलक्षणोपपत्तेः । यथाऽयमन्येषु वासःसु लक्षणानामुपपत्तिं पश्यति नैवमलक्षितेषु । सोऽयं लक्षणाभावं पश्यन्नभावेनार्थं प्रतिपद्यत इति ॥ ९ ॥

**तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥**

भा०—तेषु वासःसु लक्षितेषु सिद्धिर्विद्यमानता येषां भवति न तेषामभावो लक्षणानाम् । यानि च लक्षितेषु विद्यन्ते लक्षणानि तेषामलक्षितेष्वभाव इत्यहेतुः । यानि खलु भवन्ति तेषामभावो व्याहत इति ॥ १० ॥

**न लक्षणावस्थितापेक्षासिद्धेः ॥ ११ ॥**

भा०—न ब्रूमो यानि लक्षणानि भवन्ति तेषामभाव इति किंतु केषुचिल्लक्षणान्यवस्थितानि अनवस्थितानि केषुचिदपेक्षमाणो येषु

---

भवति । अनीलमानयेत्युक्ते नीलाभावो हीतरव्यावर्तकतया लक्षणमतोऽभावो नाप्रामाणिक इति भावः ॥ ८ ॥

वृ०—आक्षिप्य समाधत्ते—असति प्रतियोगिन्यभावो वक्तुं न शक्यते सति च प्रतियोगिनि कथं तदभाव इति चेत् । न । अन्यत्र लक्षणेन सत्त्वेनार्थात्प्रतियोगिन उपपत्तेरभावोपपत्तेः । न हि तत्रैव प्रतियोगिनः सत्त्वमपेक्षितम् ॥ ९ ॥

वृ०—शङ्कते—लक्षितेषु लक्षणस्य तत्सिद्धेर्व्यावर्तकत्वसिद्धेरलक्षितेष्वभावेष्वहेतुरहेतुत्वं व्यावृत्त्यहेतुत्वम् । अभावस्य लक्षणाभावानिःस्वरूपस्य न व्यावर्तकत्वमिति भावः ॥ १० ॥

वृ०—समाधत्ते—पूर्वपक्षो न युक्तः । प्रतियोगिनो लक्षणस्य यदवस्थितमव-

---

१ ङ. च. °सु ल° । ख. घ. °सु अल° ।

लक्षणानां भावं न पश्यति तानि लक्षणाभावेन प्रतिपद्यत इति ॥ ११ ॥

प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

भा०—अभावद्वैतं खलु भवति प्राक् चोत्पत्तेरविद्यमानता । उत्पन्नस्य चाऽऽत्मनो हानादविद्यमानता । तत्रालक्षितेषु वासःसु प्रागुत्पत्ते-रविद्यमानतालक्षणो लक्षणानामभावो नेतर इति ॥ १२ ॥

इति प्रमाणचतुष्टप्रकरणम् ॥ १ ॥

---

भा०—‘ आप्तोपदेशः शब्दः ’ ( १ । १ । ७ ) इति प्रमाणभावे विशे*षणं ब्रुवता नानाप्रकारः शब्द इति ज्ञाप्यते । तस्मिन्सा-मान्येन विचारः—किं नित्योऽथानित्य इति । ‘ विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः +’ । आकाशगुणः शब्दो विभुर्नि×त्योऽ-भिव्यक्तिधर्मक = इत्येके । गन्धादिसहवृत्तिर्द्रव्येषु संनिविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक ÷ इत्यपरे । आकाशगुणः

---

स्थानं तस्यापेक्षया तादृशसिद्धेः । अयमर्थः—प्रतियोगिस्वरूपज्ञानादेवाभाव-स्वरूपनिरूपणसंभवान्नाभावलक्षणापेक्षेति भावः ॥ ११ ॥

वृ०—प्रमेयसिद्धिरिति मण्डूकप्लुत्याऽनुवर्तते । प्रतियोगिन उत्पत्तेः प्राक्, अभावस्योपपत्तेरुपलम्भाद्घटो भविष्यतीत्यादिप्रागभावविषयकप्रत्यक्षस्य सार्व-लौकिकत्वादिति भावः । चकारेण ध्वंसादेरपि प्रत्यक्षसिद्धत्वं समुच्चीयते । चे-ष्टाया निर्व्यापारत्वेन न प्रामाण्यम् । वस्तुतो लिप्यादिवत्साङ्केतिकत्वात्तस्या अप्यनुमाने शब्दे वाऽन्तर्भाव इति ॥ १२ ॥

इति प्रमाणचतुष्टप्रकरणम् ॥ १ ॥

---

वृ०—वेदस्य प्रामाण्यमाप्तप्रामाण्यात्सिद्धम् । न चेदं युज्यते । वेदस्य नित्यत्वा-

---

* ‘ आप्तोपदेशः ’ इत्याकारकमित्यर्थः । + अस्य सूत्रत्वेन लेखः क्वचिद्दृश्यते । × अत्रायं प्रयोगः—शब्दो नित्योऽविनश्यदाधारैकद्रव्यवृत्तित्वादाकाशगतमहत्त्ववदिति । सोऽयं नित्यः सन्नभिव्यक्तिधर्मा । तस्याभिव्यञ्जकाः संयोगविभागनादाः । = मीमांसकाः । ÷ सांख्याः ।

शब्द उत्पत्तिनिरोधधर्मको बुद्धिवदित्य*परे । महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक + इत्यन्ये । अतः संशयः किमत्र तत्त्वमिति । अनित्यः शब्द इत्युत्तरम् । कथम्—

आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च ॥ १३ ॥

आदिर्योनिः कारणम्, आदीयतेऽस्मादिति । कारणवद×नित्यं दृष्टम् । संयोगविभागजश्च शब्दः कारणवत्त्वादनित्य इति । का पुनरियमर्थदेशना कारणवदिति । उत्पत्तिधर्मकत्वादनित्यः शब्द इति । भूत्वा न भवति विनाशधर्मक इति । सांशयिकमेतत्किमुत्पत्तिकारणं संयोगविभागौ शब्दस्याऽऽहोस्विदभिव्यक्तिकारणमित्यत आह–ऐन्द्रियकत्वात् । इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः । किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत्, अथ संयोगजाच्छब्दाच्छब्दसंताने सति श्रोत्रप्रत्यासन्नो गृह्यत इति ।

---

दित्याशङ्कायां वर्णानामनित्यत्वात्कथं तत्समुदायरूपस्य वेदस्य नित्यत्वमित्याशयेन शब्दानित्यत्वप्रकरणमारभते । तत्र सिद्धान्तसूत्रम् । शब्दोऽनित्य इत्यादिः । आदिमत्त्वात्सकारणकत्वात् । ननु न सकारणकत्वं कण्ठताल्वाद्यभिघातादेर्व्यञ्जकत्वेनाप्युपपत्तेरत आह— ऐन्द्रियकत्वादिति । सामान्यवत्त्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादित्यर्थः । परे तु—ऐन्द्रियकत्वं लौकिकप्रत्यक्षविशेष्यत्वम् । सामान्यसमवाययोस्तु न तथात्वम् । जातित्वादिना विशेष्यत्वसंभवेऽपि जातित्वादेरप्रत्यक्षत्वान्न व्यभिचारः । मनस इन्द्रियत्वाभावाच्च नाऽऽत्मनि व्यभिचारः । आत्मन ऐन्द्रियकत्वाभावाद्वेत्याहुः । अप्रयोजकत्वमाशङ्क्याऽऽह–कृतकेति । कृतके घटादौ यथोपचारो ज्ञानं तथैव कार्यत्वप्रकारकप्रत्यक्षविषयत्वादित्यर्थः । तथा च कार्यत्वेनानाहार्यसार्वलौकिकप्रत्यक्षबलादनित्यत्वमेव सिध्यति । केचित्तु—उपचाराद्विनाशित्वात्कृतकवदिति दृष्टान्त

---

* वैशेषिकाः । + बौद्धाः । × उत्पत्तिनाशान्तरालपरिच्छिन्नवस्तुसत्ताऽनित्यता । उत्पत्तिनाशान्तरालापरिच्छिन्ना वस्तुसत्ता च नित्यता । प्रागभावप्रध्वंसाभावसंबन्धित्वमनित्यत्वमिति न युक्तम् । भावाभावयोः संबन्धस्य दुर्निरूपत्वात् । उत्पत्त्यनन्तरं विनाशतः प्राक् च प्रागभावप्रध्वंसयोरभावेन तदानींतनवस्तुनोऽनित्यत्वव्यवहारानुपपत्तेश्च ।

संयोगनिवृत्तौ शब्दग्रहणान्न व्यञ्जकेन[1] समानदेशस्य ग्रहणम् । दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते । न च व्यञ्जकाभावे व्यङ्ग्यस्य ग्रहणं भवति तस्मान्न व्यञ्जकः संयोगः । उत्पादके तु संयोगे संयोगजाच्छब्दाच्छब्दसंताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणमिति युक्तं संयोगनिवृत्तौ शब्दस्य ग्रहणमिति । इतश्च शब्द उत्पद्यते नाभिव्यज्यते कृतकवदुपचारात् । तीव्रं मन्दमिति कृतकमुपचर्यते तीव्रं सुखं मन्दं सुखं तीव्रं दुःखं मन्दं दुःखमिति उपचर्यते च तीव्रः शब्दो मन्दः * शब्द इति ।

व्यञ्जकस्य तथाभावाद्ग्रहणस्य तीव्रमन्दतारूपवदिति चेन्नाभिभवोपपत्तेः । संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति न तु शब्दो भिद्यते । यथा प्रकाशस्य तीव्रमन्दतया रूपग्रहणस्येति । तच्च नैवम् । अभिभवोपपत्तेः । तीव्रो भेरीशब्दो मन्दं तन्त्रीशब्दमभिभवति न मन्दः । न च शब्दग्रहणमभिभावकम् । शब्दश्च न भिद्यते । शब्दे तु भिद्यमाने युक्तोऽभिभवः । तस्मादुत्पद्यते + शब्दो नाभिव्यज्यत इति ।

अभिभवानुपपत्तिश्च व्यञ्जकसमानदेशस्याभिव्यक्तौ प्राप्त्यभावात् । व्यञ्जकेन समानदेशोऽभिव्यज्यते शब्द इत्येतस्मिन्पक्षे नोपपद्यतेऽभिभवः । नहि भेरीशब्देन तन्त्रीस्वनः प्राप्त इति ।

अप्राप्तेऽभिभव इति चेच्छब्दमात्राभिभवप्रसङ्गः । अथ मन्येतासत्यां प्राप्तावभिभवो भवतीति । एवं सति यथा भेरीशब्दः[2]

---

इति । परे तु—कृतकवदुपचारात्कृतकसुखदुःखादिवद्व्यवहारात् । यथा हि

---

* तथा च प्रयोगः—अनित्यः शब्दस्तीव्रमन्दशब्दविषयत्वात्सुखवदिति । + ननु शब्दस्यैकत्वेऽपि निमित्तभेदाद्ग्रहणभेदः, ग्रहणभेदाच्चाभिभव इति चेत् । न । एकत्र ग्रहणभेदस्यादृष्टत्वात् । अन्यथा नित्यं ग्रहणभेदापत्तेः । ततश्च 'भिन्नः, अभिन्नः' इति भिन्नाभिन्नप्रत्ययौ न स्याताम् । ग्रहणयोर्युगपदसंभवादभिभवानुपपत्तेश्च । तस्माद्भिद्यते शब्दः ।

---

१ न. 'कें स° । २ क. ग. च. ° ब्दः कश्चित्त° ।

कंचित्तन्त्रीस्वनमभिभवति एवमन्तिकस्थोपादानमिव दवीयस्थोपादानानपि तन्त्रीस्वनानभिभवेत्! अप्राप्तेरविशेषात् । तत्र क्वचिदेव भेर्यां प्रणादितायां सर्वलोकेषु समानकालास्तन्त्रीस्वना न * श्रूयेरन्निति । नानाभूतेषु शब्दसंतानेषु सत्सु श्रोत्रप्रत्यासत्तिभावेन कस्यचिच्छब्दस्य तीव्रेण मन्दस्याभिभवो + युक्त इति । कः पुनरयमभिभवो नाम । ग्राह्यसमानजातीयग्रहणकृतमग्रहणमभिभवः । यथा—उल्काप्रकाशस्य ग्रहणार्हस्याऽऽदित्यप्रकाशेनेति ॥ १३ ॥

न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ॥ १४ ॥

भा०—न खलु आदिमत्त्वादनित्यः शब्दः । कस्मात् । व्यभिचारात् । आदिमतः खलु घटाभावस्य दृष्टं नित्यत्वम् । कथमादिमान् । कारणविभागेभ्यो हि घटो × न भवति । कथमस्य नित्यत्वम् ।

---

सुखादौ तीव्रमन्दादिव्यवहारः शब्देऽप्येवं न तु नित्ये तथेत्याहुः ॥ १३ ॥

वृ०—यथाश्रुते हेतूनां व्यभिचारमाशङ्कते—नोक्ता हेतवो घटाभावस्य । घटध्वंसस्य नित्यत्वादविनाशित्वादादिमत्त्वं व्यभिचारि । ऐन्द्रियकत्वं सामान्ये

---

* न च शब्दानां विभुत्वेन नायं दोष इति वाच्यम् । तथा सति एकव्यञ्जकसंनिपाते सर्वशब्दोपलब्धिप्रसङ्गात् । तीव्रेण मन्दस्याभिभवाभ्युपगमे सर्वशब्दानां समानदेशत्वाच्छङ्खशब्देन वीणाशब्दाभिभवाद्वीणाशब्दस्याश्रवणप्रसङ्गः स्यात् । तस्माच्छब्दा भिद्यन्त एवेति बोध्यम् । + ननु शब्दसंतानाभ्युपगमे तेषु पूर्वेण शब्द उत्तरेण शब्द इति दिग्देशप्रत्ययानुपपत्तिः कर्णशष्कुलीप्रत्यासन्नस्यैव ग्रहणादिति चेत् । नैवम् । तस्योपादाननिमित्तकत्वात् । यानि हि शब्दकारणस्य संयोगस्यानुग्रहकारीणि निमित्तानि दिग्देशवन्ति तेषां निमित्तानां भेदाद्दिग्देशभेदप्रत्ययः । अत एव तस्य ग्रहण एव पूर्वादिप्रत्ययो नान्यथेति सिध्यतीति भावः । = पूर्वहेतूनामनैकान्तिकत्वज्ञापनमेतत्सूत्रार्थः । × नश्यतीत्यर्थः ।

---

१ क. ग च दनमपि । २ क च. 'स्वनमभि' । ३ ग. 'ष्वनि' ।

योऽसौ कारणविभागेभ्यो न भवति न तस्याभावो भावेन कदाचिन्निवर्त्यत इति । यदप्यैन्द्रियकत्वात्तदपि व्यभिचरति । ऐन्द्रियकं च सामान्यं नित्यं चेति । यदपि कृतकवदुपचारादिति तदपि व्यभिचरति नित्येष्वनित्यवदुपचारो दृष्टः । यथा हि भवति वृक्षस्य प्रदेशः कम्बलस्य प्रदेश एवमाकाशस्य प्रदेश आत्मनः प्रदेश इति भवतीति ॥ १४ ॥

तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः ॥ १५ ॥

भा०—नित्यमित्यत्र किं तावत्तत्त्वम् । आत्मान्तरस्यानुत्पत्तिधर्मकस्याऽऽत्महानानुपपत्तिर्नित्यत्वं तच्चाभावे नोपपद्यते । भाक्तं तु भवति । * यत्तत्राऽऽत्मानमहासीद्यद्भूत्वा न भवति न जातु तत्पुनर्भवति । तत्र नित्य इव नित्यो घटाभाव इत्ययं पदार्थ इति । तत्र यथाजातीयकः शब्दो न तथाजातीयकं कार्यं किंचिन्नित्यं दृश्यत इत्यव्यभिचारः ॥ १५ ॥

---

व्यभिचारि । नित्येष्वप्यनित्यवदुपचारात् । यथा—घटाकाशमुत्पन्नम्, अहं सुखी जात इत्यादि ॥ १४ ॥

वृ०—प्रथमे व्यभिचारं परिहरति—तत्त्वस्य पारमार्थिकस्य भाक्तस्य च नानात्वस्य भेदस्य विभागाद्विवेकान्न व्यभिचारः । ध्वंसे हि उत्पत्तिमत्त्वलक्षणमादिमत्त्वं त्रैकालिकत्वरूपनित्यत्वाभावरूपं चानित्यत्वमस्त्येव । अविनाशित्वान्नित्यत्वमौपचारिकमतो न व्यभिचारः । आदिमत्त्वं प्रागभावावच्छिन्नसत्त्वं न चैतदभाव इति वाऽर्थः ॥ १५ ॥

---

* भाक्तत्वमेव स्पष्टयति—यत्तत्रेत्यादिना । अयं भावः—यद्घटादि वस्तु स्वस्वरूपमहासीत्तत्खलूत्पद्य नश्यति । न कदाचिदपि पुनरुत्पद्यते । एवं च घटादिध्वंसस्योत्पत्तिमत्त्वेऽपि नाशाभावरूपनित्यसादृश्यान्नित्यो घटाभाव इति भाक्तः प्रयोग इति ।

---

१ ख. ग. ङ. °ति एव° । २ क. ङ. च तत्रानि° । ३ क. च. °त्यर्थेयं° ।

भा०—यदपि सामान्यनित्यत्वादिति, इन्द्रियप्रत्यासत्तिग्राह्यमैन्द्रियकमिति—

संतानानुमानविशेषणात् ॥ १६ ॥

नित्येष्वव्यभिचार इति प्रकृतम् । नेन्द्रियग्रहणसामर्थ्याच्छब्दस्यानित्यत्वं किं तर्हीन्द्रियप्रत्यासत्तिग्राह्यत्वात्संतानानुमानं तेनानित्यत्वमिति ॥ १६ ॥

भा०—यदपि नित्येष्वप्यनित्यत्वव ( त्यव ) दुपचारादिति न—

कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचार इति ॥ १७ ॥

एवमाकाशप्रदेश आत्मप्रदेश इति नात्राऽऽकाशात्मनोः कारणद्रव्यमभिधीयते । यथा कृतकस्य कथं ह्यविद्यमानमभिधीयते । अविद्यमानता च प्रमाणतोऽनुपलब्धेः । किं तर्हि तत्राभिधीयते । संयोगस्याव्याप्यवृत्तित्वम् । परिच्छिन्नेन द्रव्येणाऽऽकाशस्य संयोगो नाऽऽकाशं व्याप्नोति अव्याप्य वर्तत इति तदस्य कृतकेन द्रव्येण सामान्यम् । न ह्यामलकयोः संयोग आश्रयं व्याप्नोति । सामान्यकृता च + भक्तिराकाशस्य प्रदेश

---

वृ०—द्वितीये व्यभिचारमुद्धरति—संतानस्यानुमानेऽनुमितिकरणे लिङ्गे विशेषणात् । संतानः संतन्यमान एकधर्मावच्छिन्नत्वेन ज्ञायमानस्तेन सामान्यवत्त्वे सतीति विशेषणीयमिति ॥ १६ ॥

वृ०—तृतीये व्यभिचारं वारयति—आकाशे हेतुर्नास्त्येव । आकाशे प्रादेशि-

---

+ अयं भावः—आकाशात्मनोर्विभुत्वेन नित्यत्वेन च तदाधारस्य तत्कारणस्य चासंभवादेतदन्यतरस्यैव प्रदेशपदार्थत्वात्तयोर्वस्तुतः प्रदेशासंभव इति संयोगाव्याप्यवृत्तित्वसामान्यमूलकस्तत्प्रदेशव्यपदेशः । ननु किमित्याकाशप्रदेशा भाक्ता इष्यन्ते न पुनस्तत्त्वत एवेति चेत् । मैवम् । वस्तुत इष्यमाणानां तेषामाकाशत्व आकाशनानात्वप्रसङ्गः स्यात् । अतदात्मकत्वे तत्स्वरूपं किमिति वक्तुं न शक्यते । आधारत्वकारणत्वयोर्दूषितत्वादन्यस्य चाप्रसिद्धत्वात् । न च संयोगत्वं प्रदेशावच्छिन्नत्वव्याप्यमिति सप्रदेशत्वमाकाशस्य सिध्यतीति वाच्यम् । परमाणुद्वयसंयोगे व्यभिचारात् । नाऽऽकाशस्य निष्प्रदेशत्वे तद्गतशब्दः सर्वैरुपलभ्येतेति वाच्यम् । शब्दस्याव्याप्यवृत्तित्वान्न दोष इति ।

---

१ क. ग. ङ. च. 'त्ये व्य°' ।

इति । अनेनाऽऽत्मप्रदेशो व्याख्यातः । संयोगवच्च शब्दबुद्ध्यादीनामव्याप्यवृत्तित्वमिति । परीक्षिता च तीव्रमन्दता शब्दतत्त्वं न भक्तिकृतेति । कस्मात्पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयत इति । शीलमिदं भगवतः सूत्रकारस्य बहुष्वधिकरणेषु द्वौ निष्प्रदेशत्वमकार्यद्रव्यस्य सप्रदेशत्वं कार्यद्रव्यस्येति पक्षौ न व्यवस्थापयति । तत्र शास्त्रसिद्धान्तात्तत्त्वावधारणं प्रतिपत्तुमर्हतीति मन्यते । शास्त्रसिद्धान्तस्तु – न्यायसमाख्यातमनुमतं बहुशाखमनुमानमिति । अथापि खल्विदमस्ति, इदं नास्तीति कुत एतत्प्रतिपत्तव्यमिति । प्रमाणत उपलब्धेरनुपलब्धेश्चेति ॥ १७ ॥

भा०—अविद्यमानस्तर्हि शब्दः—

= प्रागुच्चारणाद्यनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥ १८ ॥

प्रागुच्चारणान्नास्ति शब्दः । कस्मात् । अनुपलब्धेः । सतोऽनुपलब्धिरावरणादिभ्य एतन्नोपपद्यते । कस्मात् । आवरणादीनामनुपलब्धिकारणानामग्रहणात् । अनेनाऽऽवृतः शब्दो नोपल-

---

कत्वव्यवहारस्तु गौणः । प्रदेशशब्देन कारणद्रव्यस्य कारणवतो द्रव्यस्याभिधानात् । न चाऽऽकाशं तादृशम् । तादृशत्वे वा साध्यसत्त्वान्न व्यभिचारः । एवं सुखी जात इत्यादौ सुखाद्युत्पत्तिरेव विषय इति भावः ॥ १७ ॥

वृ०—न चोक्तहेतूनामप्रयोजकत्वं विपक्षबाधकसत्त्वादित्याह— शब्दो यदि नित्यः स्यादुच्चारणात्प्रागप्युपलभ्येत श्रोत्रसंनिकर्षसत्त्वात् । न चात्र प्रतिबन्ध-

---

* ये हि अनुपलभ्यमानास्तित्वं शब्दं नित्यं कल्पयन्ति त इदं पर्यनुयोज्याः 'इदमस्ति इदं नास्ति' इत्येतत्कथं भवन्तः प्रतिपद्यन्त इति । एवं पृष्टाः सन्तः प्रतिब्रुवते—प्रमाणत इत्यादि । = यद्वानित्यत्वेनोभयपक्षसंप्रतिपन्नं घटादि तेन चैतेऽनुयोज्याः 'यदिदं घटादि अनित्यं भवद्भिः प्रतिपद्यते तत्कथमनित्यम्' इति । एवमनुयुक्ता यदि घटाद्यनित्यत्वे न्यायं प्रतिपद्यन्ते स एव शब्देऽपीत्याशयेन सूत्रारम्भः ।

---

१ क. ख. ग. ङ. च. द्वौ प०

भ्यतेऽसंनिकृष्टश्चेन्द्रियव्यवधानादित्येवमादि अनुपलब्धिकारणं न गृह्यत इति । सोऽयमनुच्चारितो नास्तीति । उच्चारणमस्य व्यञ्जकं तदभावात्प्रागुच्चारणादनुपलब्धिरिति । किमिदमुच्चारणं नामेति । विवक्षाजनितेन प्रयत्नेन कोष्ठस्थस्य वायोः प्रेरितस्य कण्ठताल्वादिप्रतिघातः । यथास्थानं प्रतिघाताद्वर्णाभिव्यक्तिरिति । संयोगविशेषो वै प्रतिघातः । प्रतिषिद्धं च संयोगस्य व्यञ्जकत्वम् । तस्मान्न व्यञ्जकाभावादग्रहणम् । अपि तु अभावादेवेति । सोऽयमुच्चार्यमाणः श्रूयते । श्रूयमाणश्चाभूत्वा भवतीति अनुमीयते । ऊर्ध्वं चोच्चारणाच्छ्रूयते स भूत्वा न भवतीति । अभावान्न श्रूयत इति । कथम् । आवरणाद्यनुपलब्धेरित्युक्तम् । तस्मादुत्पत्तितिरोभावधर्मकः शब्द इति ॥ १८ ॥

भा०—एवं च सति तत्त्वं पांशुभिरिवाऽऽकिरन्निदं+माह—

तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ १९ ॥

यद्यनुपलम्भादावरणं नास्ति आवरणानुपलब्धिरपि तर्ह्यनुपलम्भान्नास्तीति तस्या अभावादप्रतिषिद्धमावरणमिति । कथं पुनर्जानीते भवान्नाऽऽवरणानुपलब्धिरुपलभ्यत इति । किमत्र ज्ञेयम् । प्रत्यात्मवेदनीयत्वात्समानम् । अयं खल्वावरणमनुपलभमानः प्रत्यात्ममेव संवेदयते नाऽऽवरणमुपलभ इति । यथा कुड्येनाऽऽवृतस्याऽऽवरणमुपलभमानः प्रत्यात्ममेव संवे-

कमस्तीत्याह—आवरणेति । आवरणादेः प्रतिबन्धकस्यानुपलब्ध्याऽभावानिर्णयात् । देशान्तरगमनं तु शब्दस्यामूर्तत्वान्न संभाव्यते । अतीन्द्रियानन्तप्रतिबन्धकत्वकल्पनामपेक्ष्य शब्दानित्यत्वकल्पनैव लघीयसीति भावः ॥ १८ ॥

वृ०—भ्रान्तस्य पूर्वपक्षपरं सूत्रद्वयम् । अनुपलम्भादनुपलब्धिसद्भाववदभाऽऽ-

+ तत्त्वं प्रतिपादिते जात्या प्रत्यवतिष्ठते ।

१ क. ग. ङ. च. °णश्च भू° । २ ङ. °रणं श्रूय° । ३ ख. च. °णाच्च श्रूय° । ४ क. ख. घ. ङ. च, °तेऽभावा° ।

दयते । सेयमावरणोपलब्धिवदावरणानुपलब्धिरपि संवेद्यै-वेति ॥ १९ ॥

भा०—एवं च सत्यपहृतविषयमुत्तरवाक्यमस्तीति अभ्यनुज्ञावादेन तूच्यते जातिवादिना—

अनुपलम्भादप्यनुपलब्धिसद्भाववन्नाऽऽ-वरणानुपपत्तिरनुपलम्भात्* ॥ २० ॥

यथाऽनुपलभ्यमानाऽप्यावरणानुपलब्धिरस्ति एवमनुपलभ्य-मानमप्यावरणमस्तीति यद्यभ्यनुजानाति भवान्नानुपलभ्यमा-नाऽऽवरणानुपलब्धिरस्तीति अभ्यनुज्ञाय च वदति नास्त्यावरण-मनुपलम्भादिति । एतस्मिन्नप्यभ्यनुज्ञावादे प्रतिपत्तिनियमो नोपपद्यत इति ॥ २० ॥

+अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २१ ॥

भा०—यदुपलभ्यते तदस्ति यन्नोपलभ्यते तन्नास्तीति अनुपलम्भा-

---

वरणानुपपत्तिरनुपलम्भात् । यथा त्वयाऽऽवरणस्यानुपलब्ध्याऽभाव इत्युच्यते तथाऽऽवरणानुपलब्धेरनुपलम्भात्तदभाव आवरणोपलब्धिरेव स्यात् । यदि वाऽऽवरणानुपलब्धेरनुपलम्भेऽपि नाऽऽवरणानुपलब्धेरभावस्तदाऽऽवरणस्यानुप-लम्भादपि नाऽऽवरणस्यानुपपत्तिरित्यर्थः ॥ १९ ॥ २० ॥

वृ०—सिद्धान्तसूत्रम् । आवरणानुपलब्धेरनुपलम्भादावरणोपलब्धिरिति

---

* अनुपलब्धेरनैकान्तिकत्वमनेन सूत्रेण प्रतिपाद्यत इति बोध्यम् । + अतथाजातीयेन-प्रत्यवस्थानादनुत्तरमिति सूत्रतात्पर्यम् । किं चानुमानादपि शब्दस्यानित्यत्वं सिध्यति । तथा च प्रयोगः—अनित्यः शब्दो गुणत्वे सति अस्मदादीन्द्रियविषयत्वात् । अव्या-पकश्च शब्दो व्यापकद्रव्यसमवायित्वे सति प्रत्यक्षत्वात्सुखवत् । शब्दाश्रयभूतं हि आका-शम्, तस्य व्यापकत्वे प्रमाणं तु—विमतमाकाशं व्यापकं द्रव्यत्वे सति अमूर्तत्वादिति ।

---

१ ङ. °द्भावान्ना° । २ क. ख. ग. घ. च. °वानानु° । ३ क. च. °रस्ति एवमनुपलभ्यमानमप्यावरणमस्तीति यद्यभ्यनुजानाति न चानुपलभ्यमाना नाऽऽवरणा-नुपलब्धिरस्ती° । ४ ङ. °दित्येतत् । ए° ।

त्मकमसदिति व्यवस्थितम् । उपलब्ध्यभावश्चानुपलब्धिरिति सेयमभावत्वान्नोपलभ्यते । सच्च खल्वावरणं तस्योपलब्ध्या भवितव्यं न चोपलभ्यते तस्मान्नास्तीति । तत्र यदुक्तं नाऽऽवरणानुपपत्तिरनुपलम्भादित्ययुक्तमिति ॥ २१ ॥

भा०—अथ शब्दस्य नित्यत्वं प्रतिजानानः कस्मा+द्धेतोः प्रतिजानीते—

अस्पर्शत्वात् ॥ २२ ॥

अस्पर्शमाकाशं नित्यं दृष्टमिति तथा च शब्द इति ॥ २२ ॥

भा०—सोऽयमुभयतः सव्यभिचारः स्पर्शवांश्चाणुर्नित्यः । अस्पर्शं च कर्मानित्यं दृष्टम् । अस्पर्शत्वादित्येतस्य साध्यसाधर्म्येणोदाहरणम्—

न कर्मानित्यत्वात् ॥ २३ ॥

॥ २३ ॥

भा०—साध्यवैधर्म्येणोदाहरणम्—

नाणुनित्य×त्वात् ॥ २४ ॥

उभयस्मिन्नुदाहरणे व्यभिचारान्न हेतुः ॥ २४ ॥

---

जात्युत्तरमहेतुः, न मन्मतप्रतिषेधसाधनम् । अनुपलब्धेरावरणानुपलब्धेरनुपलम्भात्मकत्वादुपलम्भाभावात्मकत्वात् । तस्य च मनसैव सुग्रहत्वात्तदनुपलब्धिरसिद्धेति भावः ॥ २१ ॥

वृ०—सत्प्रतिपक्षमाशङ्कते—शब्दो नित्योऽस्पर्शत्वाद्गगनवदिति भावः ॥२२॥

वृ०—न सत्प्रतिपक्षस्त्वदीयहेतोरनैकान्तिकत्वादित्याह—अस्पर्शत्वं न शब्दनित्यत्वसाधकं कर्मणि व्यभिचारात् ॥ २३ ॥

वृ०—अनैकान्तिकमपि साधकं स्यादत्राऽऽह—अनैकान्तिकस्य साधकत्वेऽणोः परमाणोर्नित्यत्वं न स्याद्रूपवत्त्वादिना तत्रानित्यत्वानुमानापत्तेरित्यर्थः ॥ २४ ॥

---

+ विप्रतिपत्तेः प्रमाणमूलत्वाद्धेतुविषयकः प्रश्नः । × अस्पर्शेन कर्मणेवोभयतो व्यभिचारे लब्धे नित्येनाणुना व्यभिचारोद्भावनं कृतकत्वानित्यत्ववत्समव्याप्तिकत्वनिराकरणार्थमेतत्सूत्रम् ।

---

१ ग. क. 'णुर्नि' ।

भा०–अयं तर्हि हेतुः—

संप्रदा*नात् ॥ २५ ॥

संप्रदीयमानमवस्थितं दृष्टं संप्रदीयते च शब्द आचार्येणान्तेवासिने तस्मादवस्थित इति ॥ २५ ॥

तदन्तरालानुपलब्धेरहेतुः ॥ २६ ॥

भा०–येन संप्रदीयते यस्मै च तयोरन्तरालेऽवस्थानमस्य केन लिङ्गेनोपलभ्यते। संप्रदीयमानो ह्यवस्थितः संप्रदातुरपैति संप्रदानं च प्राप्नोतीत्यवर्जनीयमेतत् ॥ २६ ॥

अध्यापनादप्रतिषेधः २७ ॥

भा०–अध्यापनं लिङ्गमसति संप्रदानेऽध्यापनं न स्यादिति ॥ २७॥

---

वृ०–शङ्कते—गुरुणा शिष्याय विद्यायाः संप्रदानात्। तथा च शब्दस्य प्राक् सत्त्वं सिद्धम्। तथा च 'तावत्कालं स्थिरं चैनं कः पश्चान्नाभ्यसिष्यति' इति न्यायान्नित्यत्वमर्थसिद्धमिति भावः ॥ २५ ॥

वृ०–सिद्धान्तसूत्रम्। शिष्य उपसन्ने गुरुरध्यापयति यदि च शब्दो नित्यः स्यात्तदा शिष्यागमनानन्तरमध्यापनात्पूर्वमपि शब्द उपलभ्येतेत्यनुपलब्ध्या च नास्ति शब्द इत्यतस्त्वदुक्तो न हेतुः ॥ २६ ॥

वृ०–पूर्वपक्षसूत्रम्। मदीयहेतोः प्रतिषेधो न युक्तः। कुतः। अध्यापनात्। यद्यन्तरालकाले शब्दो न स्यात्कथमध्यापनं घटेत। अनुपलब्धिस्तु शब्दस्य कण्ठताल्वाद्यभिघातरूपव्यञ्जकाभावादुपपद्यत इति भावः। आचार्यास्तु सूत्रद्वयमेवं प्रचक्षते—विभक्तिव्यत्यासात्। 'अहेतोस्तदन्तरालानुपलब्धिः' इति। तथा च हेतोः स्वत्वस्याभावात्तदन्तरालस्य स्वत्वध्वंसस्यानुपलब्धिरतो न दानमित्यर्थः। प्रतिषेधो न + युक्तः। न हि दानं ममाभिप्रेतं किंतु अध्यापनम्। तच्च विद्यमानस्य शब्दस्यैवेति भावः ॥ २७ ॥

---

* संप्रदीयमानं किंचिदपि वस्तु नित्यं न दृश्यते किंतु अनित्यमेव दृश्यत इति साध्याभावव्यापकत्वेन विरुद्धो हेत्वाभास एवेति बोध्यम्। + आचार्यमते द्वितीयसूत्रार्थमाह—प्रतिषेधो नेति।

---

१ ख. °दनन्त°। ख. २ °लब्धिरर्थस्तथा°। ३ °दनन्त°।

उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥२८॥

भा०—समानमध्यापनमुभयोः पक्षयोः संशयानतिवृत्तेः किमाचार्यस्थः शब्दोऽन्तेवासिनमापद्यते तदध्यापनम्, आहोस्विन्नृत्योपदेशवद्गृहीतस्यानुकरणमध्यापनमिति। एवमध्यापनमलिङ्गं संप्रदानस्येति ॥ २८ ॥

भा०—अयं तर्हि हेतुः—

अभ्यासात् ॥ २९ ॥

अभ्यस्यमानमवस्थितं दृष्टम् । पञ्चकृत्वः पश्यतीति रूपमवस्थितं पुनः पुनर्दृश्यते । भवति च शब्देऽभ्यासो दशकृत्वोऽधीतोऽनुवाको विंशतिकृत्वोऽधीत इति । तस्मादवस्थितस्य पुनःपुनरुच्चारणमभ्यास इति ॥ २९ ॥

नान्यत्वेऽप्यभ्यासस्योपचारात् ॥ ३० ॥

भा०—अनवस्थानेऽप्यभ्यासस्याभिधानं भवति द्विर्नृत्यतु भवांस्त्रिर्नृत्यतु भवानिति द्विरनृत्यत्त्रिरनृत्यद्द्विरग्निहोत्रं जुहोति द्विर्भुङ्क्त एवं व्यभिचारात्प्रतिषिद्धं हेतावन्यशब्दस्य प्रयोगः प्रतिषिध्यते ॥ ३० ॥

---

वृ०—सिद्धान्तसूत्रम्। अन्यतरस्य पक्षस्यानित्यत्वसाधकस्याध्यापनाद्यः प्रतिषेधः स न संभवति । उभयोः पक्षयोरध्यापनस्य समानत्वादिति शेषः। अध्यापनं हि गुरूच्चारणानूच्चारणं शिष्योच्चारणानुकूलोच्चारणं वा । तच्च स्थैर्यास्थैर्यपक्षयोस्तुल्यं न शब्दनित्यतायाः साहायकं विधातुमलम्। न हि अध्यापनं दानं येन स्वस्वत्वध्वंसपरस्वत्वापादनार्थं तस्य स्थैर्यमाशङ्कनीयम्। न वा संभवति बहूनामेकदा स्वत्वनिरोधात्परस्वत्वापादनासंभवाच्च । अपि तु नृत्याध्यापनादाविवोपदेशमात्रमिति भावः ॥ २८ ॥

वृ०—पूर्वपक्षसूत्रम्। यद्धि स्थिरं तदभ्यस्यमानं दृष्टम् । यथा दशकृत्वो रूपं पश्यति एवं शतकृत्वोऽनुवाकमधीत इत्यभ्यासात्स्थैर्यं शब्दस्येति भावः ॥ २९ ॥

वृ०—उत्तरयति। पूर्वपक्षो न युक्तः। कुतः। अन्यत्वे भेदेऽपि शब्दानामध्ययनाभ्यासस्योपचारात्संभवात् । न ह्यभ्यासः स्थैर्यं साधयति द्विर्जुहोति त्रिर्नृत्यतीत्यादौ भेदेऽप्यभ्यासदर्शनादिति भावः ॥ ३० ॥

---

१ च. 'रूदाना°'।

अन्यदन्यस्मादनन्यत्वादनन्य-
दित्यन्यताभावः ॥ ३१ ॥

भा०—यदिदमन्यदिति मन्यसे तत्स्वार्थेनानन्यत्वादन्यन्न भवति एवमन्यताया अभावः । तत्र यदुक्तमन्यत्वेऽप्यभ्यासोपचारादित्येतदयुक्तमिति ॥ ३१ ॥

भा०—शब्दप्रयोगं प्रतिषेधतः शब्दान्तरप्रयोगः प्रतिषिध्यते—

तदभावे नास्त्यनन्यता तयोरि-
तरेतरापेक्षसिद्धेः ॥ ३२ ॥

अन्यस्मादन्यतामुपपादयति भवान् । उपपाद्य चान्यत्प्रत्याचष्टे । अनन्यदिति च शब्दमनुजानाति । प्रयुङ्क्ते चानन्यदिति । एतत्समासपदम् । अन्यशब्दोऽयं प्रतिषेधेन सह समस्यते यदि चात्रोत्तरं पदं नास्ति कस्यायं प्रतिषेधेन सह समासः । तस्मात्तयोरनन्यान्यशब्दयोरितरोऽनन्यशब्द इतरमन्यशब्दमपेक्षमाणः सिध्यतीति तत्र यदुक्तमन्यताया अभाव इत्येतदयुक्तमिति ॥ ३२ ॥

भा०—अस्तु तर्हीदानीं शब्दस्य नित्यत्वम्—

विनाशकारणानुपलब्धेः ॥ ३३ ॥

यदनित्यं तस्य विनाशः कारणाद्भवति यथा लोष्टस्य कारणद्रव्यविभागात् । शब्दश्चेदनित्यस्तस्य विनाशो यस्मात्कारणाद्भवति तदुपलभ्येत न चोपलभ्यते तस्मान्नित्य इति ॥ ३३ ॥

---

वृ०—अन्यतैव जगति नास्तीति कथमन्यत्वेऽप्यभ्यासोपपत्तिरिति तटस्थ आशङ्कते—यदन्यस्मादन्यदुच्यते तत्स्वस्मादनन्यदभिन्नं तत्कथमन्यत्, भेदाभेदयोर्विरोधादिति भावः । स्वाभेदस्याऽऽवश्यकत्वमिति हृदयम् ॥ ३१ ॥

वृ०—समाधत्ते—तदभावेऽन्यत्वस्याभावेऽनन्यताऽपि नास्ति । तयोर्भेदाभेदयोः सिद्धेः परस्परसापेक्षत्वात् । वस्तुतस्तु तयोर्मध्य इतरस्यैकतरस्यानन्यत्वस्येतरापेक्षसिद्धेः । इतरत्वस्य भेदस्य ज्ञानापेक्षा सिद्धिर्यस्य तादृशत्वादित्यर्थः ॥ ३२ ॥

०—शङ्कते—शब्दो नित्य इत्यादिः । अनुपलब्धिरप्रत्यक्षमज्ञानं वा ॥३३॥

**अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३४ ॥**

भा०—यथा विनाशकारणानुपलब्धेरविनाशप्रसङ्ग एवमश्रवणकारणानुपलब्धेः सततं श्रवणप्रसङ्गः। व्यञ्जकाभावादश्रवणमिति चेत्प्रतिषिद्धं[१] व्यञ्जकम्। अथाविद्यमानस्य निर्निमित्तं श्रवणमिति विद्यमानस्य निर्निमित्तो विनाश इति समानश्च दृष्टविरोधो निमित्तमन्तरेण विनाशे चाश्रवणे चेति ॥ ३४ ॥

**उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ ३५ ॥**

भा०—अनुमानाच्चोपलभ्यमाने शब्दस्य विनाशकारणे विनाशकारणानुपलब्धेरसत्त्वादित्यनपदेशः। यथा यस्माद्विषाणी[२] तस्मादश्व इति। किमनुमानमिति चेत्संतानोपपत्तिः। उपपादितः शब्दसंतानः संयोगविभागजाच्छब्दाच्छब्दान्तरं ततोऽप्यन्यत्ततोऽप्यन्यदिति। तत्र कार्यः शब्दः कारणशब्दं[३] विरुणद्धि। प्रतिघातिद्रव्यसंयोगस्त्वन्त्यस्य शब्दस्य निरोधकः। दृष्टं हि तिरःप्रतिकुड्यमन्तिकस्थेनाप्यश्रवणं शब्दस्य श्रवणं दूरस्थेनाप्यसति व्यवधान इति। घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदान्नानाशब्दसंतानोऽविच्छेदेन + श्रूयते।

---

वृ०—आद्ये प्रतिबन्दिमाह – यदि अप्रत्यक्षत्वादभावसिद्धिस्तदा श्रवणकारणस्याप्रत्यक्षत्वादश्रवणं न स्यादिति सततश्रवणप्रसङ्ग इत्यर्थः ॥ ३४ ॥

वृ०—द्वितीये त्वाह—अनुमानादिनोपलभ्यमाने विनाशकारणेऽनुपलब्धेरभा-

---

+ अत्रेदं बोध्यम्—शब्दस्य श्रूयमाणस्य यद् व्यक्तिकारणं तत्किं घण्टास्थमाहोस्विदन्यवृत्ति। किं च पक्षद्वयेऽपि किमवस्थितमुत संतानवृत्तीति विकल्पः। यदि घण्टास्थमवस्थितं च तर्हि श्रुतिभेदो न प्रमेति। कारणस्यैकत्वात्। घण्टास्थं संतानवृत्ति चेति चेन्। न। युगपदनेकशब्दोपलब्धिप्रसङ्गात्। घण्टास्थस्य कारणस्यान्यत्र वर्तमानशब्दव्यञ्जकत्वानुपपत्तिश्च। अन्यगतस्यावस्थितस्य संतानवृत्तेर्वा कारणस्य शब्दाभिव्यक्तिहेतुत्वेऽभिहतघण्टायामेव तदभिव्यक्तिर्न घण्टान्तरेष्विति नियमानुपपत्तिः। शब्दभेदाच्छ्रुतिभेदानुपपत्तिश्च। तारत्वादेर्नादधर्मत्वमेव, न शब्दधर्मत्वमिति तु न। तारः शब्द इति प्रतीतेः। भ्रान्तत्वं तु नास्या अबाधितत्वात्। अनित्यशब्दवादिनस्तु—अवयवोपचये वृक्षादिषु दीर्घादिप्रतीत्या शब्दसंतानग्रहणे तत्सामान्याद्दीर्घादिप्रत्ययोपपत्तिः। संतानगतसंस्कारभेदाच्च मन्दमन्दतरमन्दतमादिशब्दश्रवणोपपत्तिश्चेति।

---

१ ग. °षिद्धम्। अ। २ ग. °णीति त°। ३ ङ. शब्दमभिरु°। ४ क. च. °ब्दं निरु°।

तत्र नित्ये शब्दे घण्टास्थमन्यगतं वाऽवस्थितं संतानानुवृत्तेरभिव्यक्तिकारणं वाच्यं येन श्रुतिसंतानो भवतीति शब्दभेदे चासति श्रुतिभेद उपपादयितव्य इति । अनित्ये तु शब्दे घण्टास्थं संतानवृत्ति संयोगसहकारि निमित्तान्तरं संस्कारभूतं पटुमन्दमिति वर्तते । तस्यानुवृत्त्या शब्दसंतानानुवृत्तिः । पटुमन्दभावाच्च तीव्रमन्दता शब्दस्य तत्कृतश्च श्रुतिभेद इति ॥ ३५ ॥

भा०—न वै निमित्तान्तरं संस्कार उपलभ्यते । अनुपलब्धेर्नास्तीति—

पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३६ ॥

पाणिकर्मणा पाणिघण्टाप्रश्लेषो भवति । तस्मिंश्च सति शब्दसंतानो नोपलभ्यते । अतः श्रवणानुपपत्तिः । तत्र प्रतिघातिद्रव्यसंयोगः शब्दस्य निमित्तान्तरं संस्कारभूतं निरुणद्धीत्यनुमीयते । तस्य च निरोधाच्छब्दसंतानो नोत्पद्यते । अनुत्पत्तौ श्रुतिविच्छेदः । यथा प्रतिघातिद्रव्यसंयोगादिषोः क्रियाहेतौ संस्कारे निरुद्धे गमनाभाव इति । कम्पसंतानस्य स्पर्शनेन्द्रियग्राह्यस्य चोपरमः । कांस्यपात्रादिषु पाणिसंश्लेषो लिङ्गं संस्का-

---

वात्त्वदीयो हेतुरनपदेशोऽसाधकोऽसिद्धत्वात् । जन्यभावत्वेन विनाशकल्पनमिति भावः ॥ ३५ ॥

वृ०—सिद्धान्तिनः सूत्रान्तरम् । शब्दायमाने कांस्यादौ पाणिरूपनिमित्तस्य प्रश्लेषात्संयोगाच्छब्दाभाव उपलभ्यमाने शब्दाभावकारणस्य नानुपलब्धिरिति यथाश्रुतानुयायिनः । परे तु पाणिरूपनिमित्तस्य प्रश्लेषः संबन्धो यत्र स पाणिजः शब्दः, अर्थादुत्तरशब्दः । ततः शब्दाभावे शब्दध्वंसे सति न विनाशकारणानुपलब्धिरित्यर्थ इत्याहुः । अन्ये तु पूर्वसूत्रे शब्दस्य तावद्वेगात्मकः संस्कारविशेषो हेतुः । तत्र तीव्रतीव्रतरमन्दमन्दतरत्वाच्छब्दोऽपि तादृशः । तत्र चोत्तरोत्तरशब्दानां पूर्वपूर्वशब्दनाशकत्वं कल्प्यत इत्यर्थः । ननु तादृशसंस्कार एव नास्तीत्यत्राऽऽह—पाणीति । नानुपलब्धिः संस्कारस्येति शेषः । पाणे-

---

१ ग. ङ. तत्र नि° । २ ङ. °तानानिवृत्तिर° । ग. °तानवृत्तिर° । ३ ङ. °भेदश्चास° । क. भेद उ° । ४ ङ. निर्निमि° । ५ ग. °तिसं° । ६ ख. च. °द्रव्याद्रि° ।

रसंतानस्येति । तस्मान्निमित्तान्तरस्य संस्कारभूतस्य नानुपलब्धिरिति ॥ ३६ ॥

विनाशकारणानुपलब्धेश्चाव-
स्थाने तन्नित्यत्वप्रसङ्गः ॥ ३७ ॥

भा०—यदि यस्य विनाशकारणं नोपलभ्यते तदवतिष्ठते । अवस्थानात्तस्य नित्यत्वं प्रसज्यते । एवं यानि खल्विमानि शब्दश्रवणानि शब्दाभिव्यक्तय इति मतं न तेषां विनाशकारणं भवतोपपाद्यते । अनुपपादनादनवस्थानम् । अनवस्थानात्तेषां नित्यत्वं प्रसज्यत इति ॥ ३७ ॥

भा०—अथ नैवं तर्हि विनाशकारणानुपलब्धेः शब्दस्यावस्थानान्नित्यत्वमिति । कम्पसमानाश्रयस्य च नादस्य पाणिप्रश्लेषात्कम्पवत्कारणोपरमादभावः । वैयधिकरण्ये हि प्रतिघातिद्रव्यप्रश्लेषात्समानाधिकरणस्यैवोपरमः स्यादिति—

अस्पर्शत्वादप्रतिषेधः ॥ ३८ ॥

यदिदमाकाशगुणः शब्द इति प्रतिषिध्यतेऽयमनुपपन्नः प्रतिषेधः । अस्पर्शत्वाच्छब्दाश्रयस्य । रूपादिसमानदेशस्याग्रहणे शब्दसंतानोपपत्तेरस्पर्शव्यापिद्रव्याश्रयः शब्द इति ज्ञायते, न च कम्पसमानाश्रय इति ॥ ३८ ॥

भा०—प्रतिद्रव्यं रूपादिभिः सह संनिविष्टः शब्दः समानदेशो व्यज्यत इति नोपपद्यते कथम् —

विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३९ ॥

संतानोपपत्तेश्चेति चार्थः । तद्व्याख्यातम्—यदि रूपादयः

---

निमित्तस्य प्रश्लेपाद्घण्टादिसंयोगात्संस्काररूपकारणाभावद्वारा शब्दाभावे शब्दानुपलब्धौ नानुपलम्भः संस्कारस्येत्यर्थ इत्याहुः ॥ ३६ ॥

॥ ३७ ॥

वृ०—ननु घण्टादिपाणिसंयोगस्य शब्दनिवर्तकत्वे घण्टाद्याश्रय एव शब्दः स्यादित्याशङ्कायामाह—उक्तः प्रतिषेधो न संभवति अस्पर्शत्वात् । शब्दाश्रयस्येति शेषः । शब्दो हि न स्पर्शवद्विशेषगुणोऽग्निसंयोगासमवायिकारणकत्वाभाववदकारणगुणपूर्वककार्यत्वादित्याशयः ॥ ३८ ॥

वृ०—एतदेव व्युत्पादयितुमाह—समासे स्पर्शादिसमुदाये साहित्येन शब्दे

शब्दाश्च प्रतिद्रव्यं समस्ताः समुदितास्तस्मिन्समासे समुदाये यो यथाजातीयकः संनिविष्टस्तस्य तथाजातीयस्यैव ग्रहणेन भवितव्यं शब्दरूपादिवत् । तत्र योऽयं विभाग एकद्रव्ये नानारूपा भिन्नश्रुतयो विधर्माणः शब्दा अभिव्यज्यमानाः श्रूयन्ते यच्च विभागान्तरं सरूपाः समानश्रुतयः सधर्माणः शब्दास्तीव्रमन्दधर्मतया भिन्नाः श्रूयन्ते तदुभयं नोपपद्यते नानाभूतानामुत्पद्यमानानामयं धर्मो नैकस्य व्यज्यमानस्येति । अस्ति चायं विभागो विभागान्तरं च तेन विभागोपपत्तेर्मन्यामहे न प्रतिद्रव्यं रूपादिभिः सह शब्दः संनिविष्टो व्यज्यत इति ॥ ३९ ॥

इति शब्दानित्यत्वप्रकरणम् ॥ २ ॥

---

भा०—द्विविधश्चायं शब्दो वर्णात्मको ध्वनिमात्रश्च । तत्र वर्णात्मनि तावत् —

विकारादेशोपदेशात्संशयः ॥ ४० ॥

दध्यत्रेति केचिदिकार इत्वं हित्वा यत्वमापद्यत इति विकारं मन्यन्ते । केचिदिकारस्य प्रयोगे विपर्ययकृते[1] यदिकारः स्थानं जहाति तत्र यकारस्य प्रयोगं ब्रुवते । संहितायां विषये, इकारो न प्रयुज्यते तस्य स्थाने यकारः प्रयुज्यते स आदेश इति । उभयमिदमुपदिश्यते तत्र न ज्ञायते किं तत्त्वमिति । आदेशोपदेशस्तत्त्वम् ।

---

वर्तत इति न युक्तम् । विभक्त्यन्तरस्य विभागान्तरस्य तारमन्दादेरुपपत्तेः । अयमर्थः-एकस्मिन्नेव शङ्खादौ तारमन्दादिनानाशब्दा जायन्ते । गन्धादयस्तु विनाऽग्निसंयोगं न परावर्तन्त इति भावः ॥ ३९ ॥

इति शब्दानित्यत्वप्रकरणम् ॥ २ ॥

---

वृ०—प्रसङ्गाच्छब्दपरिणामवादं दूषयितुं संशयं प्रदर्शयति—इको यणचीत्यादिनेकारादेर्विकारो यकारादिरिति केचित्सारं वा व्याचक्षते । परे तु इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्य इत्यादेशमादिशन्ति । अतश्च वर्णा विकारिणो न

---

१ ग. °पर्यीकृ°।

विकारोपदेशे ह्यन्वयस्याग्रहणाद्विकारानुमानम् । सत्यन्वये किंचिन्निवर्तते किंचिदुपजायत इति शक्येत विकारोऽनुमातुम् । न चान्वयो गृह्यते । तस्माद्विकारो नास्तीति ।

भिन्नकरणयोश्च वर्णयोरप्रयोगे प्रयोगोपपत्तिः । विवृतकरण इकार ईत्स्पृष्टकरणो यकारस्ताविमौ पृथक्करणाख्येन प्रयत्नेनोच्चारणीयौ । तयोरेकस्याप्रयोगेऽन्यतरस्य प्रयोग उपपन्न इति ।

अविकारे चाविशेषः । यत्रेमाविकारयकारौ न विकारभूतौ यतते यच्छति प्रायंस्त इति, इकार इदमिति च । यत्र च विकारभूताविष्ट्वा यन्ति व्याहरति । उभयत्र प्रयोक्तुरविशेषो यत्नः श्रोतुश्च श्रुतिरित्यादेशोपपत्तिः ।

प्रयुज्यमानाग्रहणाच्च । न खल्विकारः प्रयुज्यमानो यकारतामापद्यमानो गृह्यते किं तर्हीकारप्रयोगे यकारः प्रयुज्यते । तस्मादविकार इति ।

अविकारे च न शब्दान्वाख्यानलोपः । न विक्रियन्ते वर्णा इति । न चैतस्मिन्पक्षे शब्दान्वाख्यानस्यासंभवो येन वर्णविकारं प्रतिपद्येमहीति । न खलु वर्णस्य वर्णान्तरं कार्यम् । नहीकाराद्यकार उत्पद्यते यकाराद्वेकारः । पृथक्स्थानप्रयत्नोत्पाद्या हीमे वर्णास्तेषामन्योऽन्यस्य स्थाने प्रयुज्यत इति युक्तम् । एतावच्चैतत्परिणामो विकारः स्यात्कार्यकारणभावो वा । उभयं च नास्ति । तस्मान्न सन्ति वर्णविकाराः ।

वर्णसमुदायविकारानुपपत्तिवच्च वर्णविकारानुपपत्तिः । अस्तेर्भूः, ब्रुवो वचिरिति यथा वर्णसमुदायस्य धातुलक्षणस्य क्वचिद्विषये वर्णान्तरसमुदायो न परिणामो न कार्यं शब्दान्तरस्य स्थाने शब्दान्तरं प्रयुज्यते तथा वर्णस्य वर्णान्तरमिति ॥ ४० ॥

---

वेति संशयः । विकारश्च स्वरूपस्य विनाशेऽविनाशे वा द्रव्यान्तरारम्भकत्वम् । यथा दुग्धादेर्दध्यारम्भकत्वम् । बीजादेर्वृक्षाद्यारम्भकत्वं च । सुवर्णादेरपि लोहाघातजन्यावयवसंयोगनाशादवयविनो नाशे सत्येव कुण्डलारम्भकत्वम् । कपालादेश्च स्वरूपाविनाशेन घटाद्यारम्भकत्वम् ॥ ४० ॥

भा०-इतश्च न सन्ति वर्णविकाराः—

प्रकृतिविवृद्धौ विकारवृद्धेः[1] ॥ ४१ ॥

प्रकृत्यनुविधानं विकारेषु दृष्टम् । यकारे ह्रस्वदीर्घानुविधानं नास्ति येन विकारत्वमनुमीयत इति ॥ ४१ ॥

न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥ ४२ ॥

भा०-द्रव्यविकारा न्यूनाः समा अधिकाश्च गृह्यन्ते तद्वदयं विकारो न्यूनः स्यादिति । द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः । अत्र नोदाहरणसाधर्म्यात्साध्यसाधनं न वैधर्म्यात् । अनुपसंहृतश्च हेतुना दृष्टान्तो न साधक इति ।

प्रतिदृष्टान्ते चानियमः प्रसज्येत[2] । यथाऽनडुहः स्थानेऽश्वो वोढुं नियुक्तो न तद्विकारो भवति एवमिवर्णस्य स्थाने यकारः प्रयुक्तो न विकार इति । न चात्र नियमहेतुरस्ति दृष्टान्तः साधको न प्रतिदृष्टान्त इति ॥ ४२ ॥

द्रव्यविकारोदाहरणं च—

नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४३ ॥

भा०-अतुल्यानां द्रव्याणां प्रकृतिभावो[3] विकल्पते । विकारश्च

---

वृ०-तत्र विकारनिराकरणाय सूत्रम् । न वर्णा विकारिणस्तथा सति तत्प्रकृतेरुपादानत्वाभिमतस्य विवृद्धया विकारस्यापि महत्त्वस्य वृद्ध्या ह्रस्वेकारारब्धयकारापेक्षया दीर्घेकारारब्धयकारस्य विवृद्धिः स्यादित्यर्थः । तस्मादादेशपक्षः श्रेयानिति भावः ॥ ४१ ॥

वृ०-आक्षिपति--उक्तो हेतुर्न युक्तः । विकाराणां प्रकृत्यपेक्षया न्यूनत्वस्य समत्वस्याधिकस्य चोपपत्तेर्दर्शनात् । यथा तूलकपरिमाणापेक्षया तद्विकारस्तन्तुरल्पपरिमाणः । यथा वा न्यग्रोधबीजादुत्कृष्टेन नारिकेलीबीजेन न्यग्रोधादल्पो नारिकेलीतरुर्जन्यते । कनकादिसमपरिमाणं कटकादि । यथा वा न्यूनाधिकनारिकेलीबीजाभ्यां समौ वृक्षौ । न्यूनपरिमाणाच्च वटबीजान्महान्वटतरुरिति ॥ ४२ ॥

वृ०-समाधत्ते—नोक्तं समाधानं युक्तम् । अतुल्यप्रकृतीनां भिन्नप्रकृतीनां हि विकाराणां विकल्पो वैलक्षण्यं मयाऽभिहितम् । न हि

---

१ क. ख. घ. च. °रविवृ° । २ ख. ग. घ. °न्ते वाऽनि° । ३ क. ग. च. °वो वि° ।

प्रकृतीरनुविधीयते न तु इवर्णमनुविधीयते यकारः । तस्मादनुदाहरणं द्रव्यविकार इति ॥ ४३ ॥

द्रव्यविकारे वैषम्यवद्वर्णविकारविकल्पः ॥ ४४ ॥

भा०—यथा द्रव्यभावेन तुल्यायाः प्रकृतेर्विकारवैषम्यम्, एवं वर्णभावेन तुल्यायाः प्रकृतेर्विकारविकल्प इति ॥ ४४ ॥

न विकारधर्मानुपपत्तेः ॥ ४५ ॥

भा०—अयं विकारधर्मो द्रव्यसामान्ये यदात्मकं द्रव्यं मृद्वा सुवर्णं वा तस्याऽऽत्मनोऽन्वये पूर्वो व्यूहो निवर्तते व्यूहान्तरं चोपजायते तं विकारमाचक्षते । न वर्णसामान्ये कश्चिच्छब्दात्माऽन्वयी य इत्वं जहाति यत्वं चाऽऽपद्यते । तत्र यथा सति द्रव्यभावे विकारवैषम्ये नानडुहोऽश्वो विकारो विकारधर्मानुपपत्तेः, एवमिवर्णस्य न यकारो विकारो विकारधर्मानुपपत्तेरिति ॥ ४५ ॥

भा०—इतश्च न सन्ति वर्णविकाराः—

विकारप्राप्तानामपुनरापत्तेः ॥ ४६ ॥

अनुपपन्ना पुनरापत्तिः । कथम् । पुनरापत्तेरननुमानादिति । ‘ इकारो यकारत्वमापन्नः पुनरिकारो भवति न पुनरिकारस्य स्थाने यकारस्य प्रयोगोऽप्रयोगश्च ’ इत्यत्रानुमानं नास्ति ॥ ४६ ॥

---

बीजादेह्रासवृद्ध्यादिना वृक्षादेह्रासवृद्ध्यादिकं प्रक्रान्तम् । मदुक्तवैलक्षण्यं तु तत्राप्यस्ति । तथा च त्वदुक्तमुपचारच्छलमिति भावः ॥ ४३ ॥

वृ०—शङ्कते—द्रव्यत्वेन न्यग्रोधादिप्रकृतीनां तुल्यत्वेऽपि विकारवैषम्यं यथा, एवमेव वर्णत्वेन तुल्ययोरपि ह्रस्वदीर्घयोर्यो विकारो यकारस्तस्याविकल्प ऐकरूप्यं नानुपपन्नमित्यर्थः ॥ ४४ ॥

वृ०—समाधत्ते—नात्र द्रव्यविकारतुल्यता । विकाराणां ह्ययं धर्मः प्रकृत्यनुविधानं तद्भेदे भेद इति । प्रकृते तदनुपपत्तिः । ह्रस्वत्वदीर्घत्वादिना प्रकृतिभेदेऽपि कार्यभेदाभावात् ॥ ४५ ॥

वृ०—इतश्च न विकार इत्याह—विकारप्राप्तस्य न पुनः प्रकृतिरूपता दृष्टा । न खलु दधि क्षीरतां पुनरापद्यते । इकारस्तु यकारतां प्राप्तः पुनरिकारतामापद्यते । दध्यत्रेत्युक्त्वा पुनरपि दधि अत्रेत्युच्यत एवेति भावः ॥ ४६ ॥

---

१ क. ख. ग. घ. च. °चक्ष्महे ।

सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४७ ॥

भा०-अननुमानादिति न । इदं ह्यनुमानम्—सुवर्णं कुण्डलत्वं हित्वा रुचकत्वमापद्यते रुचकत्वं हित्वा पुनः कुण्डलत्वमापद्यते, एवमिकारोऽपि यकारत्वमापन्नः पुनरिकारो भवतीति[१] ॥ ४७ ॥

व्यभिचारादननुमानं यथा पयो दधिभावमापन्नं पुनः पयो भवति किम्, एवं वर्णानां न पुनरापत्तिः । अथ सुवर्णवत्पुनरापत्तिरिति सुवर्णोदाहरणोपपत्तिश्च न

तद्विकाराणां सुवर्णभावाव्यतिरेकात् * । ४८ ॥

अवस्थितं सुवर्णं हीयमानेन धर्मेणोपजायमानेन च धर्मि भवति नैवं कश्चिच्छब्दात्मा हीयमानेनेत्वेनोपजायमानेन यत्वेन धर्मी गृह्यते । तस्मात्सुवर्णोदाहरणं नोपपद्यत इति ।

वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः + । वर्णविकारा अपि वर्णत्वं न व्यभिचरन्ति यथा सुवर्णविकाराः सुवर्णत्वमिति ।

सामान्यवतो धर्मयोगो न सामान्यस्य + । कुण्डलरुचकौ सुवर्णस्य धर्मौ न सुवर्णत्वस्य, एवमिकारयकारौ कस्य वर्णात्मनो धर्मौ वर्णत्वं[३] सामान्यं न तस्येमौ धर्मौ भवितुमर्हतः । न च निवर्तमानो धर्म उपजायमानस्य प्रकृतिः । तत्र निवर्तमान इकारो न यकारस्योपजायमानस्य प्रकृतिरिति ॥ ४८ ॥

---

वृ०—आक्षिपति—उक्तो हेतुर्न युक्तः । सुवर्णादिकं कटकीभावं विहाय कुण्डलतामापन्नं पुनः कटकतामापद्यत एवेति भावः ॥ ४७ ॥

वृ०—निराकरोति—सुवर्णविकारस्थले हि सुवर्णत्वादिना प्रकृतिता न तु कटकत्वादिना । तत्रोभयमपि सुवर्णभावं न जहाति यदि हि सुवर्णतामपहाय कटकतामापन्नं पुनः सुवर्णता तदा व्यभिचारः शक्येत । न चैवम् । प्रकृते तु इकारतां हित्वा यकारतां प्राप्तस्यापीकारतापत्तिरस्त्येवेति दोषो दुष्परिहर इति भावः ॥ ४८ ॥

---

* अस्य क्वचित्पुस्तके सूत्रत्वेनोल्लेखो न दृश्यते । + अस्य सूत्रत्वेनापि क्वचिदुल्लेखो दृश्यते ।

---

१ ख. ग. ॰न्नं न पु॰ २ ङ ॰नां पु॰ । २ ङ. ॰त्वं वर्णधर्मयोगो न सामान्यस्येमौ॰ ।

भा०—इतश्च वर्णविकारानुपपत्तिः—

**नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ॥४९॥**

नित्या वर्णा इत्येतस्मिन्पक्ष इकारयकारौ वर्णाविति उभयोर्नित्यत्वाद्विकारानुपपत्तिः । नित्यत्वेऽविनाशित्वात्कः कस्य विकार इति । अथानित्या वर्णा इति पक्ष एवमप्यनवस्थानं वर्णानाम् । किमिदमनवस्थानं वर्णानाम् । उत्पद्य निरोधः । उत्पद्य निरुद्ध इकारे यकार उत्पद्यते । यकारे चोत्पद्य निरुद्ध इकार उत्पद्यत इति कः कस्य विकारः । तदेतदवगृह्य संधाने संधाय चावग्रहे वेदितव्यमिति ॥ ४९ ॥

भा०—नित्यपक्षे तु तावत्समाधिः—

**नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च**
**वर्णविकाराणामप्रतिषेधः ॥ ५० ॥**

नित्या वर्णा न विक्रियन्त इति विप्रतिषेधः । यथा नित्यत्वे सति किंचिदतीन्द्रियं किंचिदिन्द्रियग्राह्यं वर्णा एवं नित्यत्वे सति किंचिन्न विक्रियते वर्णास्तु विक्रियन्त इति । विरोधादहेतुस्तद्धर्मविकल्पः । नित्यं नोपजायते नापैति । अनुपजनापायधर्मकं[2] नित्यम् । अनित्यं पुनरुपजनापाययुक्तम् । न चान्तरेणोपजनापायौ विकारः संभवति । तस्माद् वर्णा विक्रियन्ते नित्यत्वमेषां निवर्तते । अथ नित्या विकारधर्मित्वमेषां निवर्तते सोऽयं विरुद्धो हेत्वाभासो धर्मविकल्प इति ॥ ५० ॥

---

वृ०—अविकारे मूलयुक्तिमाह—वर्णानां नित्यत्वे विकारासंभवादनित्यत्वे चाचिरस्थायित्वेनेकारप्रत्यक्षानन्तरमिकारनाशाद्विकारानुपपत्तिरित्यर्थः ॥ ४९ ॥

वृ०—अत्र विकारवादी नित्यत्वमतमालम्ब्य परिहरति—विकाराणां प्रतिषेधो न युक्तः । नित्यानां धर्मविकल्पाद्धर्मस्य नानाविधत्वादतीन्द्रियत्वात् । चकारेणैन्द्रियकत्वं समुच्चीयते । यथा हि नित्यानामाकाशादीनामतीन्द्रियत्वेऽपि गोत्वादीनां नित्यत्वमेव । अन्येषां नित्यानामविकारित्वेऽपि वर्णानां विकारित्वं स्यादिति ॥ ५० ॥

---

१ क. ग. च. 'ति: । अनित्यत्वे' । २ क. ग. च. 'र्मकमनित्यं पु' ।

भा०—अनित्यपक्षे समाधिः—

अनवस्थायित्वे च वर्णोपलब्धि-
वत्तद्विकारोपपत्तिः ॥ ५१ ॥

यथाऽनवस्थायिनां वर्णानां श्रवणं भवति एवमेषां विकारो भवतीति । असंबन्धादसमर्थाऽर्थप्रतिपादिका वर्णोपलब्धिर्न विकारेण संबद्धाऽसमर्था, या गृह्यमाणा वर्णविकारमनुमापयेदिति । तत्र यादृगिदं ' गन्धगुणा पृथिवी, एवं शब्दसुखादिगुणाऽपि ' इति तादृगेतद्भवतीति । न च वर्णोपलब्धिर्वर्णनिवृत्तौ वर्णान्तरप्रयोगस्य निवर्तिका योऽयमिवर्णनिवृत्तौ यकारस्य प्रयोगो यद्ययं वर्णोपलब्ध्या निवर्तते तदा तत्रोपलभ्यमान इवर्णो यत्वमापद्यत इति गृह्यते । तस्माद्वर्णोपलब्धिरहेतुर्वर्णविकारस्येति+ ॥ ५१ ॥

विकारधर्मित्वे नित्यत्वाभावात्कालान्तरे
विकारोपपत्तेश्चाप्रतिषेधः ॥ ५२ ॥

भा०—तद्धर्मविकल्पादिति न युक्तः प्रतिषेधः । न खलु विकारधर्मकं किंचिन्नित्यमुपलभ्यत इति । वर्णोपलब्धिवदिति न युक्तः प्रतिषेधः । अवग्रहे हि दधि अत्रेति प्रयुज्य चिरं स्थित्वा ततः

---

वृ०—अनित्यत्वमालम्ब्य स आह—अनवस्थायित्वेऽपि वर्णानां यथा प्रत्यक्षं भवति एवं विकारोऽपि स्यादिति भावः ॥ ५१ ॥

वृ०—उभयत्रोत्तरयाति—उक्तः प्रतिषेधो न युक्तः । विकारधर्मित्वे नित्यत्वासंभवात् । विकारो ह्यत्र स्वरूपपरित्यागेन रूपान्तरापत्तिः । तथात्वे च नित्यत्वविरोधात् । नहि घटादेः कपालाद्युपादेयत्ववत्प्रकृतेः संभवति । यकारकाल इकारानुपलब्धेः । अनित्यत्वपक्षेऽपि प्रतिषेधो न युक्तः । प्रत्यक्षं हि वर्णस्य

---

+ तदेवं जात्युत्तरमुत्थितमारितं कृत्वा भाष्यकारोऽत्रैवार्थे सूत्रं पठति—विकारेत्यादि ।

---

१ क. ग. ङ. च. °बन्धादस° । २ ङ. °मनूत्पादये° । क. ग. च. °मनूपपादये° । ३ ङ. °न्तरं प्र° । ४ ग. °रस्य प्° । ५ ग. निर्वर्ति° । ६ क. च. °लभमा° । ७ ग. °कं नित्य° ।

संहितायां प्रयुङ्क्ते दध्यत्रेति । चिरनिवृत्ते चायमिवर्णे यकारः प्रयुज्यमानः कस्य विकार इति प्रतीयते । कारणाभावात्कार्याभाव इत्यनुयोगः प्रसज्यत इति ॥ ५२ ॥

भा०—इतश्च वर्णविकारानुपपत्तिः—

प्रकृत्यनियमाद्वर्णविकाराणाम् ॥ ५३ ॥

इकारस्थाने यकारः श्रूयते यकारस्थाने खल्विकारो विधीयते, विध्यति । तद्यदि स्यात्प्रकृतिविकारभावो वर्णानां तस्य प्रकृतिनियमः स्यात् । दृष्टो विकारधर्मित्वे प्रकृतिनियम इति ॥ ५३ ॥

अनियमे नियमान्नानियमः ॥ ५४ ॥

भा०—योऽयं प्रकृतेरनियम उक्तः स नियतो यथाविषयं व्यवस्थितः । नियतत्वान्नियम इति भवति । एवं सति अनियमो नास्ति । तत्र यदुक्तं प्रकृत्यनियमादित्येतदयुक्तमिति ॥ ५४ ॥

नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥५५॥

भा०—नियम इत्यत्रार्थाभ्यनुज्ञा । अनियम इति तस्य प्रतिषेधः । अनुज्ञातनिषिद्धयोश्च व्याघातादनर्थान्तरत्वं न भवति । अनियमश्च नियतत्वान्नियमो न भवतीति नात्रार्थस्य तथाभावः प्रतिषिध्यते किं तर्हि तथाभूतस्यार्थस्य नियमशब्देनाभिधीमानस्य निय-

---

द्वितीयक्षणे युज्यते । विकारस्तु कालान्तरीयो न युज्यते । दधीति शब्दानन्तरमत्रेत्यादिशब्देन तस्य नाशादिति भावः ॥ ५२ ॥

वृ०—इतश्च विकारानुपपत्तिरित्याह—विकाराणां प्रकृतिनियमो यथा क्षीरदध्नोः प्रकृतिविकारभावो न तु वैपरीत्यम् । प्रकृते दध्यत्रेत्यादाविकारो यकारप्रकृतिः । विध्यतीत्यादौ तु यकार इकारप्रकृतिरिति भावः ॥ ५३ ॥

वृ०—अत्र च्छलवादी शङ्कते—अनियमो य उक्तः स न युक्तः । कुतः । अनियतत्वस्य नियमादिति भावः ॥ ५४ ॥

वृ०—समाधत्ते—अनियमे नियमाद्यस्त्वया नियमप्रतिषेधः कृतः स न

तत्वान्नियमशब्द एवोपपद्यते । सोऽयं नियमादनियमे प्रतिषेधो न भवतीति ॥ ५५ ॥

भा०—न चे*यं वर्णविकारोपपत्तिः परिणामात्कार्यकारणभावाद्वा किं तर्हि—

गुणान्तरापत्त्युपमर्दह्रासवृद्धि-
लेशश्लेषेभ्यस्तु[1] वर्णविकारो-
पपत्तेर्वर्णविकाराः ॥ ५६ ॥

स्थान्यादेशभावादप्रयोगे प्रयोगो विकारशब्दार्थः । स भिद्यते—गुणान्तरापत्तिः, उदात्तस्यानुदात्त इत्येवमादिः । उपमर्दो नाम—एकरूपनिवृत्तौ रूपान्तरोपजनः । ह्रासो दीर्घस्य ह्रस्वः । वृद्धिर्ह्रस्वस्य दीर्घः, तयोर्वा प्लुतः । लेशो लाघवं स्त इत्यस्तेर्विकारः । श्लेष आगमः प्रकृतेः प्रत्ययस्य वा । एत एव विशेषा विकारा इति । एत एवाऽऽदेशाः । एते चेद्विकारा उपपद्यन्ते तर्हि वर्णविकारा इति ॥ ५६ ॥

इति शब्दपरिणामप्रकरणम् ॥ ३ ॥

---

युक्तः । कुतः । नियमानियमयोर्विरोधात् । अनियमो हि नियमाभावः । तस्मिन्सति नियमासंभवादिति भावः ॥ ५५ ॥

वृ०—तदेवं वर्णानां प्रकृतिविकारभावं निरस्य स्वपक्षे विकारव्यवहारमुपपादयति— तुशब्दः पुनरर्थे । एतेभ्यः पुनर्वर्णविकारोपपत्तेः । वर्णविकारस्यैकवर्णप्रयोगेण वर्णान्तरप्रयोगस्योपपत्तेर्वर्णविकार इति व्यवह्रियते । तानेवाऽऽह— गुणान्तरेति । गुणान्तरापत्तिर्धर्मिणि सत्येव धर्मान्तरापत्तिः । यथा—उदात्तेऽनुदात्तत्वम् । उपमर्दो धर्मिनिवृत्तौ धर्म्यन्तरप्रयोगः । यथाऽस्तेर्भूः । ह्रासो दीर्घस्य ह्रस्वत्वम् । वृद्धिर्ह्रस्वस्य दीर्घत्वम् । लेशोऽल्पत्वम् । यथाऽस्तेरकारलोपः । श्लेष आगमः । एतैः कारणैर्विकारव्यवहार इति ॥ ५६ ॥

इति शब्दपरिणामप्रकरणम् ॥ ३ ॥

---

* तदेवं प्रकृतिविकारभावं निराकृत्य विकारवचनव्यक्तिं शब्दानामादेशपक्षे समर्थयति ।

---

१ क. ख. ग. ङ च. °स्तु वि° ।

## ते विभक्त्यन्ताः पदम् ॥ ५७ ॥

भा०—यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति। विभक्तिर्द्वयी नामिकी, आख्यातिकी च। ब्राह्मणः, पचति, इत्युदाहरणम्। उपसर्गनिपातास्तर्हि न पदसंज्ञाः, लक्षणान्तरं वाच्यमिति। शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपस्तयोः पदसंज्ञार्थमिति * पदेनार्थसंप्रत्यय इति प्रयोजनम्। नामपदं चाधिकृत्य परीक्षा। गौरिति पदं खल्विदमुदाहरणम् ॥ ५७ ॥

भा०—तदर्थे—

## व्यक्त्याकृतिजातिसंनिधावुपचारात्संशयः ॥ ५८ ॥

अविनाभाववृत्तिः संनिधिः। अविनाभावेन वर्तमानासु व्यक्त्या-

---

वृ०—शाब्दबोधे पदजन्यपदार्थोपस्थितेर्हेतुत्वात्तदुपपादनाय पदार्थे निरूपणीये पदमादौ निरूपयति—ते वर्णा विभक्त्यन्ताः पदम्। बहुत्वमविवक्षितम्। विभक्तेश्च सत्त्वमनपेक्षितम्। विभक्तिश्च सुप्तिङ्रूपा। वस्तुतस्तु नेदं पदं शाब्दबोधोपयोगि। किंतु इदमाकाङ्क्षास्वरूपम्। अथवा विभक्तिर्वृत्तिः, अन्तः संबन्धः, तेन वृत्तिमत्त्वं पदत्वमिति। इत्थं च पदं निरूप्य तदर्थनिरूपणं संगच्छते। यत्तु प्रसङ्गात्पदार्थनिरूपणमिति। तन्न। पदनिरूपणस्यासङ्गत्वापत्तेः। एकसूत्रस्य प्रकरणत्वाभावात् ॥ ५७ ॥

वृ०—तत्र पदे निरूपिते तद्वाच्यत्वं पदार्थत्वं निरूपितम्। तत्रापि धात्वाद्यर्थस्य निर्विवादत्वाद्गवादिपदार्थं निरूपयितुमाह—व्यक्तिर्गवादिः। जातिर्गोत्वादिः। आकृतिरवयवसंस्थानविशेषः। तेषां संनिधिः सामीप्यं मेलनम्। तत्र सति उपचाराज्ज्ञानात्। तथा च त्रयाणां युगपत्प्रत्ययात् 'किमेतेषां

---

* ननु पदोच्चारणमात्रेण विशेषार्थाप्रतीतेः कथं पदेनार्थसंप्रत्यय इति चेन्। मैवम्। पदेन सामान्याभिधानात्। न च सामान्यस्य व्यवहाराविषयत्वात्तत्प्रत्यायनवैयर्थ्यमिति शङ्क्यम्। विशेषबोधनार्थत्वात्सामान्यस्य। पदेन सामान्यत उपस्थापिते वाक्येन विशेषबोधोपपत्तेः। अवाचकत्वे तु सामान्यस्यापि तेनानुपस्थितौ विशेषप्रत्यायनासंभवात्।

कृतिजातिषु गौरिति प्रयुज्यते । तत्र न ज्ञायते किमन्यतमः पदार्थ उत सर्व इति ॥ ५८ ॥

भा०—शब्दस्य प्रयोगसामर्थ्यात्पदार्थावधारणं तस्मात्—

याशब्दसमूहत्यागपरिग्रहसंख्यावृध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः ॥ ५९ ॥

व्यक्तिः पदार्थः । कस्मात् । याशब्दप्रभृतीनां व्यक्तावुपचारात् । उपचारः प्रयोगः । या गौस्तिष्ठति, या गौर्निषण्णा, इति । नेदं वाक्यं जातेरभिधायकमभेदात् । भेदात्तु द्रव्याभिधायकम् । गवां समूह इति भेदाद्द्रव्याभिधानं न जातेरभेदात् । वैद्याय गां ददातीति द्रव्यस्य त्यागो न जातेरमूर्तत्वात् । प्रतिक्रमानुक्रमानुपपत्तेश्च । परिग्रहः स्वत्वेनाभिसंबन्धः । कौण्डिन्यस्य गौर्ब्राह्मणस्य गौरिति द्रव्याभिधाने द्रव्यभेदात्संबन्धभेद इत्युपपन्नम् । अभिन्ना तु जातिरिति । संख्या—दश गावो विंशतिर्गाव इति । भिन्नं द्रव्यं संख्यायते न जातिरभेदादिति । वृद्धिः—कारणवतो द्रव्यस्यावयवोपचयः । अवर्धत गौरिति । निरवयवा तु जातिरिति । एतेनापचयो व्याख्यातः । वर्णः—शुक्ला गौः कपिला गौरिति । द्रव्यस्य गुणयोगो न सामान्यस्य । समासः—गोहितं गोसुखमिति । द्रव्यस्य सुखादियोगो न जातेरिति । अनुबन्धः सरूपप्रजननसंतानः । गौर्गां जनयतीति ।

---

प्रत्येकं पदार्थ उत समस्तम् ’ इति संशय इत्यर्थः । इदं भाष्यमिति केचित् । वस्तुतस्तु दुर्बोधादिस्वरसात्सूत्रमेव । तदर्थ इत्यंशस्तु भाष्यकृतः पूरणमिति प्रतिभाति ॥ ५८ ॥

वृ०—तत्र व्यक्तिशक्तिवादिनो मतमाह—पदार्थ इति शेषः । उक्तानामुपचाराद्व्यवहारादनुबन्धः प्रजननम् । या गौर्गच्छतीत्यादिव्यहारो व्यक्तावेव । जात्याकृत्योरमूर्तत्वात् । एवं गवां समूहः, गां ददाति, गां प्रतिगृह्णाति, दश गावः, गौर्वर्धते, कृशा गौः, कपिला गौः, गोहितम्, गौः प्रसूते, इत्यादिव्यव-

---

१ ग. छ. °त् । चेया° ।

तदुत्पत्तिधर्मत्वाद्रव्ये युक्तं न जातौ विपर्ययादिति *। द्रव्यं व्यक्तिरिति हि नार्थान्तरम् ॥ ५९ ॥

भा०—अस्य प्रतिषेधः—

**न तदनवस्थानात् + ॥ ६० ॥**

न व्यक्तिः पदार्थः । कस्मात् । अनवस्थानात् । याशब्दप्रभृतिभिर्यो विशिष्यते[1] स गोशब्दार्थो या गौस्तिष्ठति या गौर्निषण्णेति । न द्रव्यमात्रमविशिष्टं जात्या विनाऽभिधीयेत, किं र्हि, जातिविशिष्टम् । तस्मान्न व्यक्तिः पदार्थः । एवं समूहादिषु द्रष्टव्यम् ॥ ६० ॥

भा०—यदि न व्यक्तिः पदार्थः कथं तर्हि व्यक्तावुपचार इति । निमित्तादतद्भावेऽपि तदुपचारो दृश्यते खलु—

**सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गा[2]शाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ६१ ॥**

अतद्भावेऽपि तदुपचार इत्येतच्छब्दस्य तेन शब्देनाभिधानमिति[3] । सहचरणात्—× यष्टिकां भोजयेति यष्टिकासहचारितो

---

हाराणां व्यक्तावेव संभवात् । समासः सम्यगासनम्, संबन्धोऽनुबन्धः, इत्यर्थे गौरास्ते, गोर्मुखम्, इत्युदाहरणीयम् ॥ ५९ ॥

वृ०—तद्दूषयति—न व्यक्तौ शक्तिर्व्यक्तिमात्रस्यानवस्थानादव्यवस्थानात् ॥ ६० ॥

वृ०—व्यक्तिमात्रस्य शक्यत्वे हि गवादिपदाद्यत्किंचिद्व्यक्तेरुपस्थितिः

---

* आकृतेरपि अभिधायकं पदं न भवति, निष्क्रियत्वात्तस्याः । नहि निष्क्रिया तिष्ठति गच्छति वेति वक्तु शक्यते । यस्य चानेन तिष्ठत्यादिना विशेषेण योगस्तं शब्दोऽभिधातुमर्हति । कुत इति चेत् । विशेषणविशेष्यभावस्यैकविषयत्वात् । एवं च व्यक्तावेव क्रियायाः सत्त्वात्तद्वाचकमेव पदमिति सिद्धम् । + नानेन गोशब्देन व्यक्तिमात्रं शुद्धमुच्यते यद्ययं व्यक्तिमात्राभिधायकोऽभविष्यत्तेन यस्यां कस्यांचिद्व्यक्तौ प्रत्ययोऽभविष्यदिति सूत्रतात्पर्यम् । × साहचर्यात्संयुक्तसमवेतजातिं ब्राह्मणेऽध्यारोप्य ब्राह्मणं यष्टिकेत्याह । एवमग्रेऽप्यूह्यम् ।

---

१ क. ङ. च विशेष्य° । २ क 'ङ्गाशकटा°' । ३ म. ङ. °धान इति ।

ब्राह्मणोऽभिधीयत इति । स्थानात्—मञ्चाः क्रोशन्तीति मञ्चस्थाः पुरुषा अभिधीयन्ते । तादर्थ्यात्—कटार्थेषु * वीरणेषु व्यूह्यमानेषु कटं करोतीति । वृत्तात्—यमो राजा कुबेरो राजेति तद्वद्वर्तत इति । मानात्—आढकेन मिताः सक्तव आढकसक्तव इति । धारणात्-तुलया धृतं चन्दनं तुलाचन्दनमिति । सामीप्यात्—गङ्गायां गावश्चरन्तीति देशोऽभिधीयते संनिकृष्टः । योगात्—कृष्णेन रागेण युक्तः शाटकः कृष्ण इत्यभिधीयते । साधनात्-अन्नं प्राणा इति । आधिपत्यात्-अयं पुरुषः कुलं गोत्रमिति तत्रायं सहचरणाद्योगाद्वा जातिशब्दो व्यक्तौ प्रयुज्यत इति ॥ ६१ ॥

---

स्यादितो गोत्वविशिष्टा व्यक्तिर्वाच्या । तथा च नागृहीतविशेषणन्यायाज्जातावेव शक्तिरस्तु । कथं तर्हि व्यक्तिबोध इत्यग्रिमसूत्रम् । अतद्भावेऽपि तत्पदाशक्यत्वेऽपि तदुपचारस्तच्छब्दव्यपदेशः । यथा सहचरणादितो ब्राह्मणादौ यष्ट्यादिपदप्रयोगः । सहचरणात्संयोगविशेषात् 'यष्टिं भोजय' इत्यत्र यष्टिधरब्राह्मणे यष्टिशब्दप्रयोगः । एवं स्थानात्—मञ्चाः क्रोशन्तीति मञ्चस्थपुरुषे । तादर्थ्यात्—कटं करोतीति कटार्थकवीरणे । कटस्यासिद्धत्वेन कारकत्वायोगात् । यमस्य वृत्तादनुशासनादितो राजनि यम इति । मानात्—आढकेन मिताः सक्तव आढकसक्तव इति । धारणात्—तुलया धृतं चन्दनं तुलाचन्दनमिति । सामीप्यात्—गङ्गायां गावश्चरन्तीति । कृष्णद्रव्ययोगात्—शकटे कृष्णः शकट इत्युदाहरणीयम् । प्राणसाधनात्—अन्नं प्राण इति । आधिपत्यात्—राजैवास्य कुलमिति कुलाधिपतिः प्रतीयते । तथा च यथा गङ्गादिपदाद्गङ्गातीरत्वादिना बोधः । तथा गोपदादितो गोत्वविशिष्टस्य लक्षणया बोधः । एतेन युगपद्वृत्तिद्वयविरोध एकपदार्थयोः परस्परानन्वयश्च प्रत्युक्तः । गोत्वत्वेन रूपेण शक्तिग्रहात्तथैवोपस्थितिः, अतो निष्प्रकारकपदार्थोपस्थितिरपि नास्तीति मन्तव्यम् ॥ ६१ ॥

---

* उशीर इति वाचस्पतिः । तृणविशेष इति यावत् ।

---

१ ङ. °के निमि° ।

भा०—यदि गौरित्यस्य पदस्य न व्यक्तिरर्थः, अस्तु तर्हि—

आकृतिस्तदपेक्षत्वात्सत्त्वव्यवस्थानसिद्धेः ॥ ६२ ॥

आकृतिः पदार्थः । कस्मात् । तदपेक्षत्वात्सत्त्वव्यवस्थानसिद्धेः । सत्त्वावयवानां तदवयवानां च नियतो व्यूह आकृतिः । तस्यां गृह्यमाणायां सत्त्वव्यवस्थानं सिध्यति अयं गौरयमश्व इति, नागृह्यमाणायाम् । यस्य ग्रहणात्सत्त्वव्यवस्थानं सिध्यति तं शब्दोऽभिधातुमर्हति सोऽस्यार्थ इति ॥ ६२ ॥

भा०—नैतदुपपद्यते । यस्य जात्या योगस्तदत्र जातिविशिष्टमभिधीयते गौरिति । न चावयवव्यूहस्य जात्या योगः । कस्य तर्हि । नियतावयवव्यूहस्य द्रव्यस्य । तस्मान्नाऽऽकृतिः पदार्थः । अस्तु तर्हि जातिः पदार्थः—

व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात्प्रोक्षणादीनां मृद्गवके जातिः ॥ ६३ ॥

जातिः पदार्थः । कस्मात् । व्यक्त्याकृतियुक्तेऽपि मृद्गवके प्रोक्षणादीनामप्रसङ्गादिति । गां प्रोक्षय गामानय गां देहीति नैतानि मृद्गवके प्रयुज्यन्ते । कस्मात् । जातेरभावात् + । अस्ति

---

वृ०—आकृतिरेव शक्येति मतमुपन्यस्यति—आकृतिः पदार्थः । कुतः । सत्त्वस्य प्राणिनो गवादेर्व्यवस्थानसिद्धेर्व्यवस्थितत्वसिद्धेस्तदपेक्षत्वादाकृत्यपेक्षत्वादयमश्वो गौरयमित्यादिव्यवहारस्याऽऽकृत्यपेक्षत्वादाकृतिरेव शक्येत्यर्थः ॥ ६२ ॥

वृ०—फलतस्तद्दूषयति—मृद्गवके व्यक्त्याकृतियुक्तेऽपि प्रोक्षणादीनामप्र-

---

+ मृन्निर्मितगवकस्य गोभिन्नत्वेन गोत्वाभावात्तद्गताकृतिसामान्येन गोशब्दप्रयोगो भाक्त इति भावः । ननु जातेः सर्वगतत्वाभ्युपगमान्मृद्गवगतत्वमपीति चेत् । भ्रान्तोऽसि । तस्याः स्वविषयसर्वगतत्वमात्राभ्युपगमात् । यत्र हि गोत्वनिमित्तोऽनुवृत्तप्रत्ययो भवति तत्रैव ककुदादिव्यञ्जयस्य गोत्वस्य स्वीकारान्मृद्गवके तदभावात् ।

हि तत्र व्यक्तिः, अस्त्याकृतिः, यदभावात्तत्रासंप्रत्ययः स पदा+र्थ इति ॥ ६३ ॥

---

सङ्गादप्रसञ्जनाज्जातिः पदार्थः । इतरथा मृद्गवकस्यापि व्यक्तित्वाद्गवाकृतिसत्त्वाच्च वैधप्रोक्षणादिप्रसङ्गादिति भावः ॥ ६३ ॥

---

+ ननु न पिण्डव्यतिरिक्ता जातिः पिण्डान्तरालेषु अदर्शनादिति चेत् । अत्रोच्यते—अन्तरालपदेनाऽऽकाशस्याभावस्य द्रव्यान्तरस्य वा ग्रहणे तेषु गोत्वादेरभावेऽपि गोपिण्डादिवृत्तिताया अबाधितत्वात् । नानाव्यक्तिषु गौरित्यनुवृत्तप्रत्ययनिमित्ततया च गोत्वसिद्धिः । अनुवृत्तधर्मानभ्युपगमेऽनुवृत्तप्रत्ययोपपादनस्याशक्यत्वात् । न चाऽऽकृतिसामान्यादनुवृत्तप्रत्ययोपपत्तिरिति वाच्यम् । अवयवसंयोगरूपाणामाकृतीनामपि परस्परव्यावृत्तत्वेनानुवृत्तप्रत्ययहेतुत्वानुपपत्तेः । अवयवसंयोगापेक्षया विलक्षणाया आकृतेरनुवृत्तत्वाभ्युपगमे तु सैव जातिः । नन्वनुवृत्तप्रत्ययानां सामान्यनिमित्तकत्वे सामान्यशून्यानां गोत्वाश्वत्वादीनाम् ' सामान्यं सामान्यम् ' इत्यनुवृत्तप्रत्ययविषयत्वानुपपत्तिरिति चेत् । शृणु । तेषामपि अनेकार्थसमवायमनुगतं निमित्तीकृत्यैवानुवृत्तप्रत्ययविषयत्वोपगमात् । न च पाचकादिशब्दानां नानाक्रियाप्रवृत्तिनिमित्तकानामपि एकाकारप्रतीतिविषयत्वदर्शनान्न तेन गोत्वादिसिद्धिरिति वाच्यम् । तत्रापि पाकादिक्रियां प्रति प्राधान्यस्यानुगतस्यैवानुवृत्तप्रत्ययहेतुत्वात् । जातेरेवानुवृत्तप्रत्ययनिमित्ततेति नियमानङ्गीकारात् । नन्वनेकासु गोषु वर्तमानं गोत्वं किं प्रतिव्यक्ति पर्याप्त्या वर्तत उतैकदेशेन । नाऽऽद्यः । एकव्यक्तौ विश्रान्तत्वेन तस्य सामान्यत्वानुपपत्तेः । नान्त्यः । तदेकदेशानामेव तत्तद्व्यक्तिवृत्तित्वेन गोत्वस्यानेकानुगतत्वानुपपत्तेः । एकदेशानां सामान्यात्मकत्वेऽपि तेषां प्रतिव्यक्त्यसाधारणत्वेन सामान्यत्वानुपपत्तिः । असामान्यात्मकत्वे तु अनुवृत्तप्रत्ययनिमित्तत्वासंभव इति चेत् । मैवम् । सावयवेषु कृत्स्नैकदेशविकल्पसंभवेऽपि निरवयवस्य सामान्यस्य तादृशविकल्पेन दूषणाभिधानानुपपत्तेः । गोत्वादेश्च समवायेन तदभिव्यञ्जकावयवसंस्थानवतीषु सर्वासु व्यक्तिषु एकस्यैव विश्रान्तेः । ननु गवि चेद्गोत्वमुपेयते प्राग्गोत्वसंबन्धाद्गौरेवासाविति व्यर्थं गोत्वम् । अगवि चेत्स्वी क्रियतेऽश्वादावपि तत्प्रसङ्ग इति चेत् । उच्यते—गौरगौरित्यनयोर्विशिष्टप्रत्ययत्वेन विशेषणसंबन्धं विनाऽनुपपत्तेर्वस्तूत्पत्तिकाल एव जातिसंबन्धाभ्युपगमाद्गोत्वशून्यतत्संबन्धयोग्यवस्तुनोऽप्रसिद्धेः । तस्मादुपपन्ना जातिः सा च मृद्गवके नास्तीति सैव पदार्थ इति सिद्धम् ।

नाऽऽकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६४ ॥

भा०—जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते । नागृह्यमाणायामाकृतौ व्यक्तौ जातिमात्रं शुद्धं गृह्यते । तस्मान्न जातिः पदार्थ इति ॥ ६४ ॥

भा०—न वै पदार्थेन न भवितुं शक्यम् । कः खल्विदानीं पदार्थ इति—

व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६५ ॥

तुशब्दो विशेपणार्थः । किं विशिष्यते । प्रधानाङ्गभावस्यानियमेन पदार्थत्वमिति । यदा हि भेदविवक्षा विशेषगतिश्च तदा व्यक्तिः प्रधानम्, अङ्गं तु जात्याकृती । यदा तु भेदोऽविवक्षितः सामान्यगतिस्तदा जातिः प्रधानम्, अङ्गं तु व्यक्त्याकृती । तदेतद्बहुलं प्रयोगेषु । आकृतेस्तु प्रधानभाव उ*त्प्रेक्षितव्यः ॥ ६५ ॥

---

वृ०—केवलव्यक्त्याकृतिशक्तिपक्षं निराकृत्य केवलजातिपक्षं निराकरोति—न जातिमात्रं पदार्थः । जात्यभिव्यक्तेर्जातिशाब्दबोधस्याऽऽकृतिव्यक्त्यपेक्षत्वादाकृतिव्यक्तिविषयकत्वनियमात्तयोरपि वाच्यत्वमावश्यकम् । व्यक्तिं विना तज्ज्ञानासंभवात् । न च गोत्वप्रकारकताद्दशाकृतिविशिष्टशाब्दत्वस्य कार्यतावच्छेदकत्वात्तज्ज्ञानमिति वाच्यम् । तथा सति गवादिपदस्य घटत्वादावपि शक्तिप्रसङ्गः । तस्मात्पदं स्ववाच्यमेवोपस्थापयति ॥ ६४ ॥

वृ०—इत्थं त्रयाणामपि वाच्यत्वं सिद्धमित्याह—तुशब्देनैकैकमात्रपदार्थत्वव्यवच्छेदः । पदार्थ इत्येकवचनं तु तिसृष्वप्येकैव शक्तिरिति सूचनाय । विभिन्नशक्तौ कदाचित्कस्यचिदुपस्थितिः स्यात् । शक्तेस्तुल्यत्वेऽपि व्यक्तेर्विशेष्यत्वात्प्राधान्यम् । तथैव शक्तिग्रहात् । न चाऽऽकृत्यादिसाधारणशक्यतावच्छेदकाभावान्न शक्यैक्यमिति वाच्यम् । तथा नियमे मानाभावात् । इदं गवादिपदमभिप्रेत्य । तेन पश्वादिपदस्य जात्यवाचकत्वेऽपि न क्षतिः । जातिपदं वा धर्मपरं तथैव लक्षणस्य वक्ष्यमाणत्वात् ॥ ६५ ॥

---

* आकृतेः प्राधान्यं तु पिष्टकमय्यो गावः क्रियन्तामित्यत्र बोध्यम् ।

भा०—कथं पुनर्ज्ञायते नाना व्यक्त्याकृतिजातय इति । लक्षणभेदात् । तत्र तावत्—

व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ ६६ ॥

व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति न सर्वं द्रव्यं व्यक्तिः । यो गुणविशे*षाणां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणामव्यापिनः परिमाणस्याऽऽश्रयो यथासंभवं तद्द्रव्यं मूर्तिर्मूर्च्छितावयवत्वादिति ॥ ६६ ॥

आकृतिर्जातिलिङ्गाख्या ॥ ६७ ॥

भा०—यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात् । सा च नान्या सत्त्वानां[1] तदवयवानां च नियताद्व्यूहादिति । नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गम्, शिरसा[2] पादेन गामनुमिन्वन्ति । नियते च सत्त्वावयवानां[3] व्यूहे सति गोत्वं प्रख्यायत इति । अनाकृतिव्यङ्ग्यायां जातौ मृत्,

वृ०—तत्र के व्यक्त्यादय इत्याकाङ्क्षायामाह—यद्यपि जात्यादेरपि व्यक्तित्वात्प्रमेयत्वमेव व्यक्तित्वं तथाऽपि जात्याकृतिशक्तिविषयव्यक्तेरिदं लक्षणम् । तथा च गुणविशेषो जात्याकृतिसमानाधिकरणो गुणः संख्यादिभिन्नस्तदाश्रयो मूर्तिर्व्यक्तिरिति समानार्थकमित्यर्थः । परे तु गुणा रूपादयो विशेषा विशेषका उत्क्षेपणादयस्तेषामाश्रयो द्रव्यम् । तेन जात्याश्रयो व्यक्तिरित्याशयः । विशेषलक्षणमाह । मूर्तिरिति । मूर्तिः संस्थानविशेषस्तद्वानित्याहुः । अत्र च मध्यमपदलोपी समास इत्याशयः । अन्ये तु व्यक्तेर्लक्षणं मूर्तिरिति । सैव केत्याह—गुणविशेषाश्रय इति । गुणविशेषस्यावच्छिन्नपरिमाणस्याऽऽश्रय इत्यर्थ इत्याहुः ॥ ६६ ॥

वृ०—आकृतिं लक्षयति—जातिलिङ्गमित्याख्या यस्या जातेः । गोत्वादेर्हि सास्नादिसंस्थानविशेषो लिङ्गम् । तस्य च परम्परया द्रव्यवृत्तित्वम् ।

* यद्यपि गुरुत्वादयः सामान्यगुणास्तथाऽपि गुणान्तरेभ्यो व्यावर्तमाना गुणविशेषा इत्युच्यन्ते ।

१ ख. घ. ङ. °त्त्वावयवानां । २ ग. °सा पदे° । ३ ग. °त्वानां ।

सुवर्णम्, रजतम्, इत्येवमादिष्वाकृतिर्निवर्तते[1], जातिः पदार्थत्वमेति ॥ ६७ ॥

समानप्रसवात्मिका जातिः ॥ ६८ ॥

भा०—या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु यया बहूनीतरेतरतो न व्यावर्तन्ते योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम्। यच्च केषांचिदभेदं कुतश्चिद्भेदं करोति तत्सामान्यविशेषो जातिरिति ॥ ६८ ॥

इति शब्दशक्तिपरीक्षाप्रकरणम् ॥ ४ ॥

---

इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

समाप्तश्चायं द्वितीयोऽध्यायः ॥ २ ॥

---

जातिर्द्रव्यासमवायिकारणतावच्छेदिका लिङ्गं धर्मो यस्याः। सेत्यर्थ इति कश्चित् ॥ ६७ ॥

वृ०—जातिं लक्षयति—समानः समानाकारकः प्रसवो बुद्धिजननमात्मा स्वरूपं यस्याः सा । तथा च समानाकारबुद्धिजननयोग्यत्वमर्थः । समानाकारबुद्धिजननयोग्यधर्मविशेषो नित्यानेकसमवेतरूपार्थ इत्यपि वदन्ति । इदं तु बोध्यम्—एवं सत्याकृत्यविषयको गवादिपदान्न शाब्दबोधः । अनुभवबलेन तथैव कार्यकारणभावकल्पनात् । अन्यथा लाघवाद्गोपदस्य गोत्वविशिष्टे शक्तिरेव स्यादिति ॥ ६८ ॥

इति शब्दशक्तिपरीक्षाप्रकरणम् ॥ ४ ॥

---

इति विभागपरीक्षाद्वारकसाङ्गप्रमाणपरीक्षणं नाम द्वितीयाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

इति श्रीविश्वनाथभट्टाचार्यकृतन्यायसूत्रवृत्तौ द्वितीयाध्यायवृत्तिः समाप्ता ॥ २ ॥

---

१ क. घ. ङ. च. °ते जहाति प° ।

भा०—परीक्षितानि प्रमाणानि, प्रमेयमिदानीं परी+क्ष्यते । तच्चाऽऽत्मादीत्यात्मा विविच्यते—किं देहेन्द्रियमनोबुद्धिसंघातमात्रमात्मा, आहोस्वित्तद्व्यतिरिक्त इति । कुतः संशयः । व्यपदेशस्योभयथा सिद्धेः । क्रियाकरणयोः कर्त्रा संबन्धस्याभिधानं व्यपदेशः । स द्विविधः । अवयवेन समुदायस्य—मूलैर्वृक्षस्तिष्ठति स्तम्भैः प्रासादो * ध्रियत इति । अन्येनान्यस्य व्यपदेशः—परशुना वृश्चति प्रदीपेन पश्यति । अस्ति चायं व्यपदेशश्चक्षुषा पश्यति मनसा विजानाति बुद्ध्या विचारयति शरीरेण सुखदुःखमनुभवतीति । तत्र नावधार्यते किमवयवेन समुदायस्य देहादिसंघातस्य, अथान्येनाऽन्यस्य तद्व्यतिरिक्तस्येति । अन्येनायमन्यस्य व्यपदेशः । कस्मात्—

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥

दर्शनेन कश्चिदर्थो गृहीतः स्पर्शनेनापि सोऽर्थो गृह्यते । यमहमद्राक्षं चक्षुषा तं स्पर्शनेनापि स्पृशामीति । यं चास्पार्क्षं स्पर्शनेन

---

वृ०—तरुप्रभृतितुल्यता भवति यत्कृपामन्तरा
यदीयकरुणाकणात्तरति मोहजालं जनः ।
विधाय हृदयाम्बुजे रुचिरवाक्प्रचाराय तां
नमामि परदेवतां सततमेव वाणीमहम् ॥

अथावसरतः प्रमेयेषु परीक्षणीयेषु प्रथमोद्दिष्टमात्मादिषट्कं तृतीये परीक्षणीयम् । तेनाऽऽत्मादिषट्कपरीक्षैवाध्यायार्थः । तत्राऽऽत्मादिचतुष्कपरीक्षा प्रथमाह्निकार्थः । तत्र च नव प्रकरणानि । तत्राऽऽदाविन्द्रियभेदप्रकरणम् । तत्रेन्द्रियं ज्ञानवन्न वेति संशये करणत्वेन सिद्धानामिन्द्रियाणां चैतन्यमस्तु लाघवात् । तथा चाऽऽत्मशब्दस्य नानार्थत्वादिन्द्रियाणामभौतिकत्वाद्वा न सांकर्यमि-

---

+ अनेन प्रमाणप्रमेयपरीक्षयोर्हेतुफलभावः प्रदर्श्यते । नह्यपरीक्षितैः प्रमाणैः प्रमेयपरीक्षा युज्यते । अपि तु परीक्षितैरेवेति भावः । * यद्यपि वृक्षप्रासादयोरन्ययोरत्रान्येनावयवेन समुदायिना व्यपदेशस्तथाऽपि अवयव्यभावं समुदायं च समुदाय्यनतिरिक्तं मन्वानस्य परस्योदाहरणं द्रष्टव्यम् ।

तं चक्षुषा पश्यामीति। * एकविषयौ चेमौ प्रत्ययावेककर्तृकौ प्रतिसंधीयेते + न च संघातकर्तृकौ नेन्द्रियेणैककर्तृकौ। तद्योऽसौ चक्षुषा त्वगिन्द्रियेण चैकार्थस्य संग्रहीता भिन्ननिमित्तावनन्यकर्तृकौ प्रत्ययौ समानविषयौ प्रतिसंदधाति सोऽर्थान्तरभूत आत्मा। कथं पुनर्नेन्द्रियेणैककर्तृकौ। इन्द्रियं खलु[1] स्वस्वविषयग्रहणमनन्यकर्तृकं प्रतिसंधातुमर्हति नेन्द्रियान्तरस्य विषयान्तरग्रहणमिति। कथं न संघातकर्तृकौ। एकः खल्वयं भिन्ननिमित्तौ स्वात्मकर्तृकौ प्रतिसंहितौ वेदयते न संघातः। कस्मात्। अनिवृत्तं हि संघाते प्रत्येकं विषयान्तरग्रहणस्याप्रतिसंधानमिन्द्रियान्तरेणैवेति[2] ॥ १ ॥

## न विषयव्यवस्थानात् ॥ २ ॥

भा०—न देहादिसंघातादन्यश्चेतनः। कस्मात्। विषयव्यवस्थानात्। व्यवस्थितविषयाणीन्द्रियाणि। चक्षुष्यसति रूपं न गृह्यते सति च गृह्यते। यच्च यस्मिन्नसति न भवति सति भवति तस्य तदिति विज्ञायते। तस्माद्रूपग्रहणं चक्षुषः। चक्षू रूपं पश्यति। एवं घ्राणादिष्वपीति। तानीन्द्रियाणीमानि स्वस्ववि-

---

तीन्द्रियचैतन्यवादिनः। तन्निराकरणाय सूत्रम्। एकस्यैव दर्शनस्पर्शनाभ्यामर्थस्य ग्रहणात्। दर्शनस्पर्शने ज्ञानविशेषौ। तृतीया च प्रकारे। तेन चाक्षुषस्पार्शनोभयवत्त्वेनैकस्य धर्मिणः प्रतिसंधानादित्यर्थः। तथा च योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्यनुभवादात्मेन्द्रियव्यतिरिक्त एक इति ॥ १ ॥

वृ०—अत्र शङ्कते—चक्षुस्त्वगादीनां रूपस्पर्शादिनियतविषयत्वाच्चक्षुरादेश्चाक्षु-

---

* न च दर्शनादे रूपादिमात्रविषयकत्वेनैकविषयत्वमसिद्धमिति वाच्यम्। रूपाग्रहणेऽपि तदाश्रयग्रहणस्य नीलाद्युपरिस्थितस्फटिकादौ रात्रौ बलाकागतरूपाग्रहणेऽपि तत्प्रत्यक्षस्य जायमानत्वेन घटादे रूपादिभ्यो व्यतिरेकसिद्धेः। + अनुव्यवसायेनैककर्तृकत्वेन दर्शनस्पर्शनयोर्विषयीकरणात्संघातस्य नानात्वेनैकत्वाभावादेकस्येन्द्रियस्य द्विविधविषयग्रहणासामर्थ्यात्। सामर्थ्याभ्युपगमे चेन्द्रियान्तरवैयर्थ्यप्रसङ्गादिति भावः।

---

१ क. ख. ग. घ. च. 'लु स्वं स्वं वि'। २ ख. घ. 'रेण वे°। ग. °रेणैवे°।

पयग्रहणाच्चेतनानि । इन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावात् + । एवं सति किमन्येन चेतनेन ॥ २ ॥

भा०—संदिग्धत्वादहेतुः । योऽयमिन्द्रियाणां भावाभावयोर्विषय-ग्रहणस्य तथा भावः स किं चेतनत्वादाहोस्विच्चेतनोपकरणानां ग्रहणनिमित्तत्वादिति संदिह्यते । चेतनोपकरणत्वेऽपीन्द्रियाणां ग्रहणनिमित्तत्वाद्भवितुमर्हति यच्चोक्तं विषयव्यवस्थानादिति —

तद्व्यवस्थानादेवाऽऽत्मसद्भावादप्रतिषेधः ॥ ३ ॥

यदि खल्वेकमिन्द्रियमव्यवस्थितविषयं सर्वज्ञं सर्वविषयग्राहि चेतनं स्यात्कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात् । यस्मात्तु व्यवस्थितविषयाणीन्द्रियाणि तस्मात्तेभ्योऽन्यश्चेतनः सर्वज्ञः सर्वविषय*ग्राही विषयव्यवस्थितिमतीतोऽनुमीयते[2] × । तत्रेदमभि-ज्ञानमप्रत्याख्येयं चेतनवृत्तमुदाह्रियते—रूपदर्शी खल्वयं रसं गन्धं वा पूर्वगृहीतमनुमिनोति । गन्धप्रतिवेदी च रूपरसावनुमि-नोति । एवं विषयशेषेऽपि वाच्यम् । रूपं दृष्ट्वा गन्धं जिघ्रति घ्रात्वा च गन्धं रूपं पश्यति । तदेवमनियतपर्यायं सर्वविषयग्र-

---

ग्रादिसमवायित्वम् । इत्थं चाभेदप्रत्ययो भ्रान्त इति भावः ॥ २ ॥

वृ०—समाधत्ते-उक्तप्रतिषेधो न युक्तः, उक्तविषयव्यवस्थानादेवाऽऽत्मस-द्भावादतिरिक्तात्मकल्पनादित्यर्थः । अयं भावः—तत्तदिन्द्रियाणां तत्तद्विषयकप्र-त्यक्षं प्रति समवायित्वं वाच्यं न तु प्रत्यक्षत्वावच्छिन्नं प्रति । अनुमित्यादिज-

---

+ यद्भावाभावानुविधायिनौ ज्ञानभावाभावौ तच्चेतनम् । इन्द्रियभावाभावानुविधायिनौ तावेताविति तदेव चेतनमित्यर्थः । * सर्वेषामिन्द्रियाणां ये विषयास्तद्ग्राहीत्यर्थः । इन्द्रियाणि च पुनर्व्यवस्थितविषयाणि । तेनार्वाग्दृगपि सर्वज्ञ इति सिद्धम् । × तथा च प्रयोगः—विमत आत्मा चेतनः स्वतन्त्रत्वे सति अव्यवस्थानात् । यो ह्यस्वतन्त्रो व्यव-स्थितश्च न स चेतनः । यथा घटादिरिति । तथा च चक्षुरादि तस्मान्न चेतनमिति भावः ।

---

१ क. स किमयं चे° । २ क. ग. च. °तितो° ।

हणमेकचेतनाधिकरणमनन्यकर्तृकं प्रतिसंधत्ते । प्रत्यक्षानुमानाम-
मसंशयप्रत्ययांश्च नानाविषयान्स्वात्मकर्तृकान्प्रतिसंदधाति, प्र-
तिसंधाय वेदयते । सर्वार्थविषयं च शास्त्रं श्रुत्वा प्रतिपद्यतेऽ-
र्थमविषयभूतं श्रोत्रस्य । क्रमभाविनो वर्णाञ्छ्रुत्वा पदवाक्यभावं
प्रतिसंधाय शब्दार्थव्यवस्थां च बुद्ध्यमानोऽनेकविषयमर्थजातम-
ग्रहणीयमेकैकेनेन्द्रियेण गृह्णाति । सेयं सर्वज्ञस्य ज्ञेयाव्यवस्थाऽनु-
पदं न शक्या परिक्रमितुम् । आकृतिमात्रं तूदाहृतम् । तत्र
यदुक्तम् 'इन्द्रियचैतन्ये सति किमन्येन चेतनेन' तदयुक्तं
भवति ॥ ३ ॥

इतीन्द्रियभेदप्रकरणम् ॥ १ ॥

---

भा०—इतश्च देहादिव्यतिरिक्त आत्मा न देहादिसंघातमात्रम्—

**शरीरदाहे पातकाभावात् ॥ ४ ॥**

शरीरग्रहणेन शरीरेन्द्रियबुद्धिवेदनासंघातः प्राणिभूतो गृह्यते ।
प्राणिभूतं शरीरं दहतः प्राणिहिंसाकृतं पापं पातकमित्युच्यते ।
तस्याभावस्तत्फलेन कर्तुरसंबन्धादकर्तुश्च संबन्धात् । शरीरेन्द्रिय-

---

नकत्वे तु विनिगमकाभावः । तेन जन्यज्ञानत्वावच्छिन्नजनकतावच्छेदकमात्म-
त्वम् । चक्षुरादेरनित्यत्वादात्मनश्च नित्यताया वक्ष्यमाणत्वाच्चक्षुरादिनाशेऽपि
स्मरणाच्चक्षुरहमित्याद्यप्रतीतेश्च नेन्द्रियात्मवादो युज्यत इति भावः ॥ ३ ॥

इतीन्द्रियभेदप्रकरणम् ॥ १ ॥

---

वृ०—ननु गौरोऽहं जानामीत्यादिप्रतीतेरस्तु शरीरमात्मेत्याशङ्क्य दूषयति—
पातकाभावात्पातकादेरभावप्रसङ्गात् । तथा चोत्तरकालिकं दुःखादिकं न
स्यादिति । यद्वा दाहो नाशः । तथा च शरीरनाशे कृते कर्तरि शरीरे विनष्टे
पातकं न स्यादित्यर्थः । यद्यपि भूतचैतन्यादिना पातकादिकं नोपेयते तथाऽपि

---

१ ङ. °शयान्प्रत्य° । २ ख. घ. संधाय । ३ क. ग. च. सर्ववि° । ४ क. ग. ङ. च. °र्तृकं प्र° । ५ क. च. °तम° । ६ ङ. °कृतग° ।

बुद्धिवेदनाप्रबन्धे[1] खल्वन्यः संघात उत्पद्यतेऽन्यो निरुध्यते । उत्पादनिरोधसंततिभूतः प्रबन्धो नान्यत्वं बाधते देहादिसंघातस्यान्यत्वाधिष्ठानत्वात् । अन्यत्वाधिष्ठानोऽह्यसौ प्रख्यायत इति । एवं च सति यो देहादिसंघातः प्राणिभूतो हिंसां करोति नासौ हिंसाफलेन संबध्यते यश्च संबध्यते न तेन हिंसा कृता । तदेवं सत्त्वभेदे कृतहानमकृताभ्यागमः प्रसज्यते । सति तु सत्त्वो*त्पादे सत्त्वनिरोधे चाकर्मनिमित्तः सत्त्वसर्गः प्राप्नोति । तत्र मुक्त्यर्थो ब्रह्मचर्यवासो न स्यात् । तद्यदि देहादिसंघातमात्रं सत्त्वं स्याच्छरीरदाहे पातकं न भवेत् । अनिष्टं चैतत् । तस्माद्देहादिसंघातव्यतिरिक्त आत्मा नित्य इति ॥ ४ ॥

**तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥**

भा०—यस्यापि नित्येनाऽऽत्मना सात्मकं शरीरं दह्यते तस्यापि शरीरदाहे पातकं न भवेद्दग्धुः । कस्मात् । नित्यत्वादात्मनः । न जातु कश्चिन्नित्यं हिंसितुमर्हति । अथ हिंस्यते नित्यत्वमस्य न भवति । सेयमेकस्मिन्पक्षे हिंसा निष्फलाऽन्यस्मिंस्त्वनुपपन्नेति ॥ ५ ॥

---

तस्य प्रसाध्याङ्कत्वादेकदेशिनः पूर्वपक्षित्वाद्वा न दोष इति भावः ॥ ४ ॥

वृ०—तत्रापि तुल्यदोष इत्याशङ्कते—तदभावः पातकाभावः सात्मकशरीरस्य प्रदाहेऽपि प्रसक्तः । तन्नित्यत्वात्तस्याऽऽत्मनो नित्यत्वात् । नित्यत्वेन निर्विकारत्वं तेन जन्यधर्मानाश्रयत्वमभिमतमिति केचित् । तन्नित्यत्वाच्छरीरनाशे शरीरविशिष्टात्मनाशस्य नियतत्वादित्यपि कश्चित् । किं च सात्मकशरीरनाशेऽपि हन्तुः पातकाभावः स्यात् । तस्याऽऽत्मनो नित्यत्वेन तन्नाशकत्वाभावात् ॥ ५ ॥

---

* सत्त्वं चेतन आत्मा, तस्योत्पादे नाशे वा देहचैतन्यपक्षे देहनाशादेव तद्गतधर्मादीनां नाशे स्थिरस्याऽऽत्मनोऽभावाद्देहान्तरोत्पादो धर्मादिनिमित्तक इति वक्तुं न शक्यते । ततश्च मुक्त्यर्थो ब्रह्मचर्यादिर्नोपपद्यते । देहस्य सत्तादशायां मुक्तेरसंभवात् , दाहे स्वत एव मुक्तत्वात् । देहान्तरोत्पादस्य चैतत्कृतकर्मादिनिमित्तकत्वादेतत्कृतकर्मणा तत्प्रतिबन्धासंभवादिति भावः ।

---

१ ग. ॰न्धेन ख॰ । २ ग. ॰अनन्य॰ ।

न कार्याश्रयकर्तृवधा*त् ॥ ६ ॥

भा०—न ब्रूमो नित्यस्य सत्त्वस्य वधो हिंसा, अपि त्वनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणामुपघातः पीडा वैकल्यलक्षणः प्रबन्धोच्छेदो वा प्रमापणलक्षणो वा वधो हिंसेति। कार्यं तु सुखदुःखसंवेदनम्, तस्याऽऽयतनमधिष्ठानमाश्रयः शरीरम्। कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणां वधो हिंसा, न नित्यस्याऽऽत्मनः। तत्र यदुक्तम् 'तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्' (३।१।५) इत्येतदयुक्तम्। यस्य सत्त्वोच्छेदो हिंसा तस्य कृतहानमकृताभ्यागमश्च दोषः। एतावच्चैतत्स्यात्—सत्त्वोच्छेदो वा हिंसा, अनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयकर्तृवधो वा न कल्पान्तरमन्यदस्ति। सत्त्वोच्छेदश्च प्रतिषिद्धस्तत्र किमन्यच्छेषं यथाभूतमिति। अथवा कार्याश्रयकर्तृवधादिति कार्याश्रयो देहेन्द्रियबुद्धिसंघातो नित्यस्याऽऽत्मनस्तत्र सुखदुःखप्रतिसंवेदनं तस्याधिष्ठानमाश्रयस्तदायतनं तद्भवति न ततोऽन्यदिति स एव कर्ता। तन्निमित्ता हि सुखदुःखसंवेदनस्य निर्वृत्तिः, न तमन्तरेणेति तस्य वध उपघातः पीडा प्रमापणं वा

---

वृ०—परिहरति—कार्याश्रयस्य चेष्टाश्रयस्य कर्तुः कृत्यवच्छेदकस्य शरीरस्यैव नाशो न त्वात्मन इति पातकाभावः। यद्वा न हन्तुः पातकाभावः। कार्याश्रयकर्तुर्बाधात्। शरीरस्य नाशाद्ब्राह्मणत्वादेः शरीरवृत्तित्वात्तन्नाशादेव पापोत्पत्तिरिति भावः। वस्तुतस्तु पूर्वशरीरावच्छिन्नप्राणविनाशिनो बन्धनमुखनिरो-

---

* तत्र कार्याश्रयशब्देन शरीरमुच्यते तन्निमित्तत्वादुपभोगस्य। कर्तॄणीन्द्रियाणि तत्साधनत्वात्। अथवा समानाधिकरणसमासाच्छरीरमेव कार्याश्रयकर्तृशब्दाभ्यामुच्यते। एवं च तदवच्छेदकशरीरतदुपकरणेन्द्रियादिविनाशजनितदुःखसमवायित्वादात्मनो नित्यत्वेऽपि तद्धन्तुः प्रत्यवाय उपपद्यते। अतिरिक्तचेतनानभ्युपगमे तु शरीरान्तरसमवेतदुःखोत्पादकशरीरान्तरविनाशे तदनिमित्तशरीरस्य तत्प्रत्यवायजनितफलभोक्तृत्वं कृतनाशाकृताभ्यागमप्रसङ्गादनुपपन्नमिति भावः।

---

१ क. 'नास्ति। २ ख. ग. ध. तदन्त'।

हिंसा, न नित्यत्वेनाऽऽत्मोच्छेदः । तत्र यदुक्तम् ‘ तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ’ इत्येतन्नेति ॥ ६ ॥

इति देहभेदप्रकरणम् ॥ २ ॥

---

भा०—इतश्च देहादिव्यतिरिक्त आत्मा—

**सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥**

पूर्वापरयोर्विज्ञानयोरेकविषये प्रतिसंधिज्ञानं प्रत्यभिज्ञानम्, तमेवैतर्हि पश्यामि यमज्ञासिषं स एवायमर्थ इति[1] । सव्येन चक्षुषा दृष्टमथेतरेणापि चक्षुषा प्रत्यभिजानाति यमद्राक्षं तमेवैतर्हि पश्यामीति । इन्द्रियचैतन्ये तु नान्यदृष्टमन्यः प्रत्यभिजानातीति प्रत्यभिज्ञानुपपत्तिः । अस्ति त्विदं प्रत्यभिज्ञानम् । तस्मादिन्द्रियव्यतिरिक्तश्चेतनः ॥ ७ ॥

**नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥**

भा०—*एकमिदं चक्षुर्मध्ये नासास्थिव्यवहितं तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतो मध्ये व्यवहितस्य दीर्घस्येव ॥ ८ ॥

---

धादेर्हिंसात्वं न स्यात् । पातकानभ्युपगन्तृचार्वाकादिमते शरीरभेदसाधनं तु वक्ष्यमाणयुक्तिभिरिति ध्येयम् ॥ ६ ॥

इति देहभेदप्रकरणम् ॥ २ ॥

---

वृ०-प्रसङ्गाच्चक्षुरद्वैतप्रकरणमारभते—वामेन चक्षुषा दृष्टस्य दक्षिणेन चक्षुषा प्रत्यभिज्ञानात्स्थिरात्मसिद्धिरिति केषांचिन्मतं तन्निराकरणायैतदुपन्यासः ॥ ७ ॥

वृ०-एतद्दूषयति—मध्यस्थसेतुना तडागस्येव नासास्थिव्यवहितगोलकान्तरावच्छिन्नतया द्वैतप्रत्ययो भ्रम इत्यर्थः ॥ ८ ॥

---

* अत्रेदं बोध्यम्—एकमिदं चक्षुर्द्व्यधिष्ठानकम् । अस्याधिष्ठानं तु कृष्णसारमेव । तैजसस्य चक्षुषः पार्थिवेन कृष्णसारेणोपकारविकारभेदानुविधानात् । दृष्टं हि कृष्णसार उपक्रियमाणे सति चक्षुरुपक्रियते विक्रियमाणे विक्रियत इति ।

---

[1] क. ग. ङ. च. ‘भिज्ञानाद्यम°’ ।

## एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥

भा०—एकस्मिन्नुपहते चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते चक्षुर्विषयग्रहणलिङ्गम् । तस्मादेकस्य व्यवधानानुपपत्तिः ॥९॥

## अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः १० ॥

भा०-एकविनाशे द्वितीयाविनाशादित्यहेतुः । कस्मात् । वृक्षस्य हि कासुचिच्छाखासु च्छिन्नासूपलभ्यत एव वृक्षः ॥ १० ॥

## दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥

भा०—न कारणद्रव्यस्य विभागे कार्यद्रव्यमवतिष्ठते । नित्यत्वप्रसङ्गात् । बहुष्ववयविषु यस्य कारणानि तस्य विनाशः, येषां कारणान्यविभक्तानि तान्यवतिष्ठन्ते । अथवा दृश्यमानार्थविरोधो दृष्टान्तविरोधः । मृतस्य हि शिरःकपाले द्वाववटौ नासास्थिव्यवहितौ चक्षुषः स्थाने भेदेन गृह्येते । न चैतदेकस्मिन्नासास्थिव्यवहिते संभवति । अथवैकविनाशस्यानियमाद्द्वाविमावर्थौ तौ च पृथगावरणोपघातावनुमीयेते विभिन्नाविति । अवपीडनाच्चैकस्य चक्षुषो रश्मिविषयसंनिकर्षस्य भेदाद्दृश्यभेद इव गृह्यते ।

---

वृ०—आक्षिपति—चक्षुरैक्य एकचक्षुर्नाशेऽन्धत्वं स्यादिति भावः ॥ ९ ॥

वृ०—अत्रैकदेशी परिहरति—अवयवस्य शाखादेर्नाशेऽप्यवयविनो वृक्षस्य प्रत्यभिज्ञानान्नावयवनाशे सर्वत्रावयविनाशनियमस्तथा चैकनाशेऽपि नान्धत्वमिति ॥ १० ॥

वृ०—एकदेशिमतस्य पूर्वोक्ताक्षेपस्य समाधानाय सिद्धान्तिनः सूत्रम् । उक्तप्रतिषेधो न युक्तो दृष्टान्तस्य विरोधादयुक्तत्वात् । न हि शाखाच्छेदे वृक्षस्तिष्ठति । तथा सति वृक्षस्यानाशप्रसङ्गात्, अतोऽवस्थितावयवैस्तत्र खण्डवृक्षोत्पत्तेर्नैकदेशिमतं युक्तम् । एतेनैकनाशे द्वितीयाविनाशाद्भेदसाधनमपि प्रत्युक्तम् । चक्षुर्नाशेऽपि गोलकान्तरावच्छिन्नावयवैः खण्डचक्षुःसंभवात् । इत्थं च लाघवाच्चक्षुरद्वैतमिति टीकास्वरससिद्धम् । परे तु चक्षुर्द्वैतमेव सूत्रार्थं मन्यमाना व्याचक्षते—' सिद्धान्तिनः सूत्रम्—सव्येति । शङ्कते—नैकस्मिन्निति । समाधत्ते—एकेति । शङ्कते—अशाखावयवेति । निराकरोति—दृष्टान्तेति । शाखानाशे वृक्षनाशावश्यकत्वाद्दृष्टान्तो न युक्तः । यद्वा दृष्टान्तस्य गोलकभेदविरोधादन्य-

तथै*कत्वे विरुध्यते । अवपीडननिवृत्तौ चाभिन्नप्रतिसंधान-मिति । तस्मादेकस्य व्यवधानानुपपत्तिः ॥ ११ ॥

भा०—अ+नुमीयते चायं देहादिसंघातव्यतिरिक्तश्चेतन इति—

इन्द्रियान्तरविका×रात् ॥ १२ ॥

कस्यचिदम्लफलस्य गृहीतसाहचर्ये रूपे गन्धे वा केनचिदि-न्द्रियेण गृह्यमाणे रसनस्येन्द्रियान्तरस्य विकारो रसानुस्मृतौ रसगर्द्धिप्रवर्तितो दन्तोदकसंप्लवभूतो गृह्यते । तस्येन्द्रियचैतन्येऽ-नुपपत्तिः । नान्यदृष्टमन्यः स्मरति ॥ १२ ॥

न स्मृतेः स्मर्तव्यविषयत्वात्+ ॥ १३ ॥

भा०—स्मृतिर्नाम धर्मो निमित्तादुत्पद्यते । तस्याः स्मर्तव्यो विषयः ।

---

थाऽनुपपन्नत्वात् । दृष्टं हि मृतस्य चक्षुरधिष्ठानगोलकद्वयं भेदेनैवोपलभ्यते' इति वदन्ति ॥ ११ ॥

वृ०—आत्मन इन्द्रियभेदे युक्त्यन्तरमाह । चिरबिल्वाद्यम्लद्रव्ये दृष्टे तद्रसस्मरणाद्दन्तोदकसंप्लवरूपरसनेन्द्रियविकारादिन्द्रियव्यतिरिक्त आत्मा सिध्यति ॥ १२ ॥

वृ०—आक्षिपति—स्मृतिर्हि स्मर्तव्यविषयिणीति नियमः । तस्याश्च दर्शना-

---

* एवं च भाष्यकारमते चक्षुरिन्द्रियं द्वित्ववदिति सिद्धम् । वार्तिककारमते तु चक्षुरे-कमिति सिद्धान्तः । तथाहि—सव्येन चक्षुषा दृष्टं वस्तु नष्टेऽपि तस्मिन्वामेन प्रत्यभिजा-नातीति चक्षुरेकमिति मन्तव्यमेव । द्वित्वपक्षे हि मनसोऽणुत्वान्नेत्रद्वयेन संयोगस्य युगपद-संभवादुभयकरणकैककालिकप्रत्यक्षासंभवः । यदि मनसाऽसंयुक्तस्यैवैकस्य प्रत्यक्षे सामर्थ्यं कल्प्यते तर्ह्यपरस्यापि तथैवास्त्विति मनःकल्पना निष्फला स्यात् । आत्मसंयो-गस्य सदातनत्वेन मनःसंयोगस्यैवाव्यवहितप्राक्कालिकव्यापाररूपतया तद्राहित्ये करणत्वा-नुपपत्तिश्च । इन्द्रियपञ्चत्वप्रतिपादकप्रकरणविरोधश्चेति । + तदेवं प्रतिसंधानद्वारेणाऽऽ-त्मनि प्रत्यक्षं प्रमाणयित्वाऽनुमानमिदानीं प्रमाणयति । × इन्द्रियान्तरविकारेण तत्कार-णभूताऽनुमीयमाना स्मृतिरात्मानमनुमापयतीति विकारस्याऽऽत्मवृत्तित्वेऽपि नानुपपत्ति-रिति बोध्यम् । + ननु स्मृतिरात्मानं कारणत्वेन गमयेद्विषयत्वेन वा । नाऽऽद्यः । तस्याः संस्कारकारणकत्वात् । नान्त्यः । तस्याः स्मर्तव्यविषयत्वात् । स्मृताच्च तस्मादिन्द्रियवि-कारोत्पत्तेरित्यर्थः ।

तत्कृत इन्द्रियान्तरविकारो नाऽऽत्मकृत इति ॥ १३ ॥

**तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥**

भा०—तस्या आत्मगुणत्वे सति सद्भावादप्रतिषेध आत्मनः। यदि स्मृतिरात्मगुण एवं सति स्मृतिरुपपद्यते नान्यदृष्टमन्यः स्मरतीति । इन्द्रियचैतन्ये नानाकर्तृकाणां विषयग्रहणानामप्रतिसंधानम्, प्रतिसंधाने वा विषयव्यवस्थानुपपत्तिः । एकस्तु चेतनोऽनेकार्थदर्शी भिन्ननिमित्तः पूर्वदृष्टमर्थं स्मरतीति। एकस्यानेकार्थदर्शिनो दर्शनप्रतिसंधानात् । स्मृतेरात्मगुणत्वे सति सद्भावो विपर्यये चानुपपत्तिः । स्मृत्याश्रयाः प्राणभृतां सर्वे व्यवहारा आत्मलिङ्गम् । उदाहरणमात्रमिन्द्रियान्तरविकार इति ॥ १४ ॥

**अपरिसंख्यानाच्च स्मृतिविषयस्य ॥ १५ ॥**

भा०—अपरिसंख्याय च स्मृतिविषयमिदमुच्यते—'न स्मृतेः स्मर्तव्यविषयत्वात्' (३।१।१३) इति। येयं स्मृतिरगृह्यमाणेऽर्थेऽज्ञासिषमहममुमर्थमिति एतस्या ज्ञातृज्ञानविशिष्टः पूर्वज्ञातोऽर्थो विषयो नार्थमात्रम्, ज्ञातवानहममुमर्थम् , असावर्थो मया ज्ञातः, अस्मिन्नर्थे मम ज्ञानमभूत् , इति चतुर्विधमेतद्वाक्यं स्मृतिविषयज्ञापकं समानार्थम्। सर्वत्र खलु ज्ञाता ज्ञानं ज्ञेयं च गृह्यते। अथ प्रत्यक्षेऽर्थे या स्मृतिस्तया त्रीणि ज्ञानान्येकस्मिन्नर्थे प्रतिसंधीयन्ते समानकर्तृकाणि, न नानाकर्तृकाणि नाकर्तृकाणि किं तर्ह्येककर्तृकाणि। अद्राक्षममुमर्थं यमेवैतर्हि पश्यामि। अद्राक्षमिति दर्शनं दर्शनसंविच्च। न खल्वसंविदिते स्वे दर्शने स्यादेतदद्राक्षमिति। ते खल्वेते द्वे ज्ञाने। यमेवैतर्हि पश्यामीति तृतीयं ज्ञानम् ।

---

दिना सामानाधिकरण्ये मानाभावात्। अस्तु वा विषयतयैव सामानाधिकरण्यमिति भावः ॥ १३ ॥

वृ०—समाधत्ते—उक्तप्रतिषेधो न युक्तः। धर्मिग्राहकमानेन स्मृतेरात्मगुणत्वात्। परिशेषेणाऽऽत्मगुणत्वसिद्धेरहं स्मरामीत्यनुभवात्। विषयनिष्ठकार्यकारणभावे चैत्रस्य ज्ञानान्मैत्रस्य स्मरणापत्तेरिति भावः ॥ १४ ॥

वृ०—विषयाणां स्मर्तव्यानां स्मृतिसमवायित्वं स्यादित्याशङ्क्य समाधत्ते—

एवमेकोऽर्थस्त्रिभिर्ज्ञानैर्युज्यमानो नाकर्तृको न नानाकर्तृकः किंतर्ह्येककर्तृक इति । सोऽयं स्मृतिविषयोऽपरिसंख्यायमानो विद्यमानः प्रज्ञातोऽर्थः प्रतिषिध्यते—'नास्त्यात्मा स्मृतेः स्मर्तव्यविषयत्वात्' इति । न चेदं स्मृतिमात्रं स्मर्तव्यमात्रविषयम् । इदं खलु ज्ञानप्रतिसंधानवत्स्मृतिप्रतिसंधानमेकस्य सर्वविषयत्वात् । एकोऽयं ज्ञाता सर्वविषयः स्वानि ज्ञानानि प्रतिसंधत्ते—अमुमर्थं ज्ञास्याम्यमुमर्थं विजानाम्यमुमर्थमज्ञासिषममुमर्थं जिज्ञासमानश्चिरमज्ञात्वाऽध्यवस्यत्यज्ञासिषमिति । एवं स्मृतिमपि त्रिकालविशिष्टां सुस्मूर्षाविशिष्टां च प्रतिसंधत्ते । संस्कारसंततिमात्रे तु सत्त्व उत्पद्योत्पद्य संस्कारास्तिरो भवन्ति । स नास्त्येकोऽपि संस्कारो यस्त्रिकालविशिष्टं ज्ञानं स्मृतिं चानुभवेत् । न चानुभवमन्तरेण ज्ञानस्य स्मृतेश्च प्रतिसंधानमहं ममेति चोत्पद्यते देहान्तरवत् । अतोऽनुमीयतेऽस्त्येकः सर्वविषयः प्रतिदेहं स्वज्ञानप्रबन्धं स्मृतिप्रबन्धं च प्रतिसंधत्त इति । यस्य देहान्तरेषु वृत्तेरभावान्न प्रतिसंधानं भवतीति ॥ १५ ॥

इति चक्षुरद्वैतविचारप्रकरणम् ॥ ३ ॥

---

**नाऽऽत्मप्रतिपत्तिहेतूनां मनसि संभवात् ॥ १६ ॥**

भा०—न देहादिसंघातव्यतिरिक्त आत्मा । कस्मात् । आत्मप्रतिपत्तिहेतूनां मनसि संभवात् । 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' ( ३ । १ । १ ) इत्येवमादीनामात्मप्रतिपादकानां हेतूनां मनसि संभवो यतः, मनो हि सर्वविषयमिति तस्मान्न शरीरेन्द्रियमनोबुद्धिसंघातव्यतिरिक्त आत्मेति ॥ १६ ॥

---

अपरिसंख्यानादानन्त्यात् । तथा च लाघवादतिरिक्तात्मसिद्धिः । इदं न सूत्रं किंतु भाष्यमिति केचित् ॥ १५ ॥

इति चक्षुरद्वैतविचारप्रकरणम् ॥ ३ ॥

---

वृ०—ननु मनसो नित्यत्वादात्मत्वमस्त्वित्याशङ्कते—नातिरिक्त आत्मा । आत्मसाधकमानानां मनसाऽर्थान्तरमिति भावः ॥ १६ ॥

---

१ ख. ग. °त्पद्य ।

ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १७ ॥

भा०—ज्ञातुः खलु ज्ञानसाधनान्युपपद्यन्ते चक्षुषा पश्यति घ्राणेन जिघ्रति स्पर्शनेन स्पृशति एवं मन्तुः सर्वविषयस्य मतिसाधनमन्तःकरणभूतं सर्वविषयं विद्यते येनायं मन्यत इति। एवं सति ज्ञातर्यात्मसंज्ञा न मृष्यते मनःसंज्ञाऽभ्यनुज्ञायते मनसि च मनःसंज्ञा न मृष्यते मतिसाधनं त्वभ्यनुज्ञायते। तदिदं संज्ञाभेदमात्रं नार्थे विवाद इति प्रत्याख्याने वा सर्वेन्द्रियविलोपप्रसङ्गः। अथ मन्तुः सर्वविषयस्य मतिसाधनं सर्वविषयं प्रत्याख्यायते नास्तीति एवं रूपादिविषयग्रहणसाधनान्यपि न सन्तीति सर्वेन्द्रियविलोपः प्रसज्यत इति ॥ १७ ॥

नियमश्च निरनुमानः ॥ १८ ॥

भा०—योऽयं नियम इष्यते रूपादिग्रहणसाधनान्यस्य सन्ति मतिसाधनं सर्वविषयं नास्तीति अयं निरनुमानो नात्रानुमानमस्ति येन नियमं प्रतिपद्यामह इति। रूपादिभ्यश्च विषयान्तरं सुखादयस्तदुपलब्धौ करणान्तरसद्भावः। यथा चक्षुषा गन्धो न गृह्यत इति करणान्तरं घ्राणम्, एवं चक्षुर्घ्राणाभ्यां रसो न गृह्यत इति करणान्तरं रसनम्, एवं शेषेषु तथा चक्षुरादिभिः सुखादयो न गृह्यन्त इति करणान्तरेण भवितव्यम्। तच्च ज्ञानायौगपद्यलिङ्गम्। यच्च सुखाद्युपलब्धौ करणं तच्च ज्ञानायौगपद्यलिङ्गं तस्येन्द्रियमिन्द्रियं प्रति संनिधेरसंनिधेर्न युगपज्ज्ञानान्युत्पद्यन्ते। तत्र यदुक्तमात्मप्रतिपत्तिहेतूनां मनसि संभवादिति

---

वृ०—समाधत्ते—यदि मनसो ज्ञातृत्वं तदा व्यासङ्गाद्युपपादनाय कारणान्तरमवश्यं वाच्यम्। तथा चैको ज्ञाता ज्ञानसाधनं चैकं सिद्धम्। मन आत्माऽस्त्विति संज्ञामात्रम्। किं च व्यासङ्गोपपादकतया मनसोऽणुत्वं सिद्धम्। आत्मनश्च प्रत्यक्षोपपादकतया महत्त्वमिति भेद आवश्यक इति भावः ॥ १७ ॥

वृ०—ननु रूपादिप्रत्यक्षं सकरणकमस्तु न तु सुखादिप्रत्यक्षम्, एवं परमाण्वन्तरस्यातीन्द्रियत्वेऽपि मनसः प्रत्यक्षं स्यादत्राऽऽह—उक्तो नियमविशेषो

तदयुक्तम् । किं पुनरयं* देहादिसंघातादन्यो नित्य उतानित्य इति । कुतः संशयः । उभयथा दृष्टत्वात्संशयः । विद्यमानमुभयथा भवति नित्यमनित्यं च । प्रतिपादिते चाऽऽत्मसद्भावे संशयानिवृत्तेरिति ॥ १८ ॥

इति मनोभेदप्रकरणम् ॥ ४ ॥

---

भा०—आत्मसद्भावहेतुभिरेवास्य प्राग्देह+भेदादवस्थानं सिद्धम् । ऊर्ध्वमपि देहभेदादवतिष्ठते । कुतः—

पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य

ह×र्षभयशोकसंप्रतिपत्तेः ॥१९॥

जातः खल्वयं कुमारकोऽस्मिञ्जन्मनि अगृहीतेषु हर्षभयशोक-

---

निरनुमानो निष्प्रमाणकः । गौरवाद्वैपरीत्ये च विनिगमकाभावाच्चेति भावः ॥ १८ ॥

इति मनोभेदप्रकरणम् ॥ ४ ॥

---

वृ०—एवं साधितेऽपि देहादिभिन्न आत्मनि विना तन्नित्यतां न परलोकार्थिनः प्रवृत्तिः, अत आत्मनित्यताप्रतिपादनाय सूत्रम् । जातस्य बालस्यैतज्जन्माननुभूतेष्वपि हर्षादिहेतुषु सत्सु हर्षादीनां संप्रतिपत्तिरुत्पत्तिस्तस्याः पूर्वपूर्वानुभवो-

---

* शास्त्रानुभूताभ्युदयनिःश्रेयसोपयोगिनं परलोकं विवक्षुः परीक्षाहेतुभूतं संशयमाह—किं पुनरित्यादि । + देहभेदादिति ल्यब्लोपे पञ्चमी । बाल्यकौमारयौवनवार्धक्यदेहभेदमभिसमीक्ष्य प्रतिसंधानादस्यावस्थानं सिद्धमित्यर्थः । × जन्म—निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनाभिः संबन्धः । हर्षः—अभिप्रेतविषयकप्रार्थनाप्राप्तौ सुखानुभवः । भयम्—अनिष्टविषयसाधनोपनिपाते तज्जिहासोर्हानाशक्यता । शोकः—इष्टविषयवियोगे सति तत्प्राप्त्यशक्यप्रार्थना । संप्रतिपत्तिः—तदनुभवः । अभ्यासः—एकविषयानेकविज्ञानोत्पादः । स्मृतिः—प्रत्यक्षबुद्धिनिरोधे तदनुसंधानविषयः प्रत्ययः । प्रत्यभिज्ञानम्—तदनुगृहीतस्तदनुसंधानविषयस्तद्भावाविषयः प्रत्ययः । संस्कारः—भावनास्मृतिहेतुरनुबन्धः ।

---

१ क. ख. 'द्भावे हे' ।

हेतुषु हर्षभयशोकान्प्रतिपद्यते लि*ङ्गानुभेयान् । ते च स्मृत्यनुबन्धादुत्पद्यन्ते नान्यथा । स्मृत्यनुबन्धश्च पूर्वाभ्यासमन्तरेण न भवति । पूर्वाभ्यासश्च पूर्वजन्मनि सति नान्यथेति सिध्यत्येतद्-वतिष्ठतेऽयमूर्ध्वं शरीरभेदादिति ॥ १९ ॥

पद्मादिषु प्रबोधसंमीलनविकारवत्तद्विका+रः ॥२०॥

यथा पद्मादिष्वनित्येषु प्रबोधः संमीलनं विकारो भवति एवमनित्यस्याऽऽत्मनो हर्षभयशोकसंप्रतिपत्तिर्विकारः स्यात् ।

हेत्वभावादयुक्तम् । अनेन हेतुना पद्मादिषु प्रबोधसंमीलनविकारवदनित्यस्याऽऽत्मनो हर्षादिसंप्रतिपत्तिरिति नात्रोदाहरणसाधर्म्यात्साध्यसाधनं हेतुर्न वैधर्म्यादस्ति । हेत्वभावादसंबद्धार्थकमपार्थकमुच्यत इति ।

दृष्टान्ताच्च हर्षादिनिमित्तस्यानिवृत्तिः । या चेयमासेवितेषु हर्षादिसंप्रतिपत्तिः स्मृत्यनुबन्धकृता प्रत्यात्मं गृह्यते सेयं पद्मादिसंमीलनदृष्टान्तेन न निवर्त्यते । यथा चेयं न निवर्तते तथा जातस्यापीति । क्रियाजातौ च पर्णविभागसंयोगौ प्रबोधसंमीलने । क्रियाहेतुश्च क्रियानुमेयः । एवं च सति किं दृष्टान्तेन प्रतिषिध्यते ॥ २० ॥

---

धीनस्मृतिसंबन्धादेव संभवात् । इत्थं चेदानींतनस्याऽऽत्मनः पूर्वपूर्वसिद्धौ तस्यानादित्वमनादेश्च भावस्य न नाश इति नित्यत्वसिद्धिरिति भावः ॥ १९ ॥

सू०—अत्र शङ्कते—बालस्य हर्षादयो मुखविकासादनुमेयाः । न च तत्संभवः । पद्मादीनां प्रबोधादिवददृष्टविशेषाधीनक्रियावशादेव तदुपपत्तेरिति भावः ॥ २० ॥

---

* तथा च प्रयोगः—विमता बाल्यावस्था शोकादिमदात्मवती स्मितरुदितादिमत्त्वात् । ततश्च शोकादिमदात्मवत्त्वेन स्मृतिमदात्मवत्त्वम्, तेन संस्कारवदात्मवत्त्वम्, तेन पूर्वानुभववदात्मवत्त्वम्, तेन च पूर्वशरीरसंबन्धवदात्मवत्त्वं साध्यम् । सर्वत्र यौवनावस्था दृष्टान्तो बोध्यः । + अनित्येऽपि विकारदर्शनादनेकान्त इति सूत्रार्थः । प्रबोधो नाम विनश्यत्कार्यः पद्मपत्रावयवविभागः । संमीलनं नाम पद्मपत्रावयवानामारब्धकार्याणां पुनः परस्परेण प्राप्तयस्तत् ।

---

१ क. ग. 'वद्वि' । २ क. ख. ग. घ. च. 'बोधसं' । ३ क. ख. ग. घ. ङ. 'जातश्च पर्णविभागः संयोगप्र' । ४ क. ख. च. 'तुश्चानु' ।

भा०—अथ निर्निमित्तः पद्मादिषु प्रबोधसंमीलनविकार इति मतमेव-मात्मनोऽपि हर्षादिसंप्रतिपत्तिरिति । तच्च—

नोष्णशीतवर्षकालनिमित्तत्वात्प-ञ्चात्मकविकाराणाम् ॥ २१ ॥

उष्णादिषु सत्सु भावादसत्स्वभावात्तन्निमित्ताः पञ्चभूतानुग्रहेण निर्वृत्तानां पद्मादीनां प्रबोधसंमीलनविकारा इति न निर्निमित्ताः । एवं हर्षादयोऽपि विकारा निमित्ताद्भवितुमर्हन्ति न निमित्तमन्तरेण । न चान्यत्पूर्वाभ्यस्तस्मृत्यनुबन्धान्निमित्तमस्तीति । न चोत्पत्तिनिरोधकारणानुमानमात्मनो दृष्टान्तात् । न हर्षादीनां निमित्तमन्तरेणोत्पत्तिः । नोष्णादिवन्निमित्तान्तरोपादानं हर्षादीनाम् । तस्मादयुक्तमेतत् ॥ २१ ॥

भा०—इतश्च नित्य आत्मा—

प्रेत्याऽऽहाराभ्यासकृतात्स्तन्याभिलाषात्× ॥ २२ ॥

जातमात्रस्य वत्सस्य प्रवृत्तिलिङ्गः स्तन्याभिलाषो गृह्यते । स च नान्तरेणाऽऽहाराभ्यासम् । कया युक्त्या । दृश्यते हि शरीरिणां क्षुधा पीड्यमानानामाहाराभ्यासकृतात्स्मरणानुबन्धादाहाराभिलाषः । न च पूर्वशरीरमन्तरेणासौ जातमात्रस्योपपद्यते ।

---

वृ०—सिद्धान्तसूत्रम् । उक्तं न युक्तम् । यतः पञ्चात्मकानां पाञ्चभौतिकानां पद्मादीनां ये विकारास्तेषामुष्णकालादिनिमित्तत्वात् । मनुष्यादीनां तु हर्षादिनिमित्तका मुखविकासादय इति न तुल्यतेति भावः ॥ २१ ॥

वृ०—आत्मनित्यत्वे हेत्वन्तरमाह—प्रेत्य मृत्वा जातमात्रस्य यः स्तन्याभिलाषः स तावदाहाराभ्यासजनितः । जन्मान्तरीणाहारेष्टसाधनताधीजन्यजीवना-

---

+ विमत आत्माऽकारणको द्रव्यत्वे सति सर्वदाऽमूर्तत्वादाकाशवदित्यनुमानेनाऽऽत्मनित्यत्वसिद्धौ दृष्टान्तमात्रेणोत्पत्तिविनाशकारणकल्पनं न युक्तमित्यर्थः । घटादीनामपि प्रथमक्षणेऽमूर्तत्वाद्व्यभिचारवारणाय सर्वदेति । × ननु 'पूर्वाभ्यस्त०' ( ३ । १।१९) इति सूत्रेऽस्यार्थस्यावगतत्वादेतत्सूत्रं किमर्थमिति चेत् । मैवम् । सामान्यतोऽधिगतस्य विशेषज्ञापनार्थत्वेनादोषात् ।

---

१ क. च. °वर्षाका° ।

तेनानुमीयते भूतपूर्वं शरीरं यत्रानेनाऽऽहारोऽभ्यस्त इति। स खल्वयमात्मा पूर्वशरीरात्प्रेत्य शरीरान्तरमापन्नः क्षुत्पीडितः पूर्वाभ्यस्तमाहारमनुस्मरन्स्तन्यमभिलषति। तस्मान्न देहभेदादात्मा भिद्यते भवत्येवोर्ध्वं देहभेदादिति ॥ २२ ॥

**अयसोऽयस्कान्ताभिगमनवत्तदुपस+र्पणम् ॥ २३ ॥**

भा०—यथा खल्वयोऽभ्यासमन्तरेणायस्कान्तमुपसर्पति एवमाहाराभ्यासमन्तरेण बालः स्तन्यमभिलषति ॥ २३ ॥

भा०—किमिदमयसोऽयस्कान्ताभिसर्पणं निर्निमित्तमथ निमित्तादिति। निर्निमित्तं तावत्—

**नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥**

यदि निर्निमित्तं लोष्टादयोऽपि अयस्कान्तमुपसर्पेयुर्न जातु नियमे कारणमस्तीति। अथ निमित्तात्तत्केनोपलभ्यत इति। क्रियालिङ्गः क्रियाहेतुः क्रियानियमलिङ्गश्च क्रियाहेतुनियमः। तेनान्यत्र प्रवृत्त्यभावः। बालस्यापि नियतमुपसर्पणक्रियोपलभ्यते। न च स्तन्याभिलाषलिङ्गमन्यदाहाराभ्यासकृतात्स्मरणानुबन्धात्। निमित्तं दृष्टान्तेनोपपाद्यते। न चासति निमित्ते कस्यचिदुत्पत्तिः। न च दृष्टान्तो दृष्टमभिलाषहेतुं बाधते। तस्मादयसोऽयस्कान्ताभिगमनमदृष्टान्त इति। अयसः खल्वपि नान्यत्र प्रवृत्तिर्भवति। न जात्वयो लोष्टमुपसर्पति किंकृतोऽस्य नियम इति। यदि कारणनियमात्, स च क्रियानियमलिङ्गः। एवं बालस्यापि

---

दृष्टोद्बोधितसंस्काराधीनेष्टसाधनतास्मरणेन हि बालः स्तनपाने प्रवर्तत इत्यनादित्वमिति ॥ २२ ॥

वृ०—शङ्कते—यथाऽयस्कान्तसंनिहितस्यायसोऽयस्कान्ताभिमुखतया गमनं तथैव वत्सस्यापि स्तनोपसर्पणम्। न त्विष्टसाधनताज्ञानाधीनप्रवृत्तिजन्यचेष्टेयमित्यर्थः ॥ २३ ॥

वृ०—समाधत्ते—स्तनपान एव बालः प्रवर्तते न त्वन्यत्रेति नियमः कथं

---

+ न पूर्वाभ्यस्तस्मृत्यनुबन्ध एव प्रवृत्तिकारणमयसोऽयस्कान्ताभिसर्पणे तदभावात्। यदि बालकस्य स्मृत्यनुबन्धो भवेज्जात्यन्धबधिरादयस्तज्जन्मानुभूतानिव रसस्पर्शगन्धादीन्, जन्मान्तरानुभूतान्रूपादीनपि ब्याचक्षीरन्नित्याशयः।

नियतविषयोऽभिलाषः कारणनियमाद्भवितुमर्हति । तच्च कारण-मभ्यस्तस्मरणमन्यद्वेति दृष्टेन विशिष्यते । दृष्टो हि शरीरिणाम-भ्यस्तस्मरणादाहाराभिलाष * इति ॥ २४ ॥

भा०—इतश्च नित्य आत्मा । कस्मात्—

वीतरागजन्मादर्शनात् ॥ २५ ॥

स रागो जायत इत्यर्थादापद्यते । अयं जायमानो रागानुबद्धो जायते । रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः । पूर्वानुभ-वश्च विषयाणामन्यस्मिञ्जन्मनि शरीरमन्तरेण नोपपद्यते । सोऽ-यमात्मा पूर्वशरीरानुभूतान्विषयाननुस्मरंस्तेषु तेषु रज्यते । तथा-चायं द्वयोर्जन्मनोः प्रतिसंधिः । एवं पूर्वशरीरस्य पूर्वतरेण पूर्वत-रस्य पूर्वतमेनेत्यादिनाऽनादिश्चेतनस्य शरीरयोगः । अनादिश्च रागानुबन्ध इति सिद्धं नित्यत्वमिति ॥ २५ ॥

भा०—कथं पुनर्ज्ञायते पूर्वविषयानुचिन्तनजनितो जातस्य रागो न पुनः—

सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ॥ २६ ॥

यथोत्पत्तिधर्मकस्य द्रव्यस्य गुणाः कारणत उत्पद्यन्ते तथो-

---

स्यात् । वस्तुतस्तु अन्यत्रायसि प्रवृत्त्यभावात् । प्रवृत्तिर्हि चेष्टानुमिता लिङ्गं न तु क्रियामात्रमतो न व्यभिचार इति भावः ॥ २४ ॥

वृ०—हेत्वन्तरमाह—वीतरागो रागशून्यस्तावन्नोत्पद्यते, अपि तु सरागः । तत्र च जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति पूर्वं स्तन्याभिलाष उक्तः । संप्रति तु पतगादीनां कणादिभक्षणाभिलाषसाधारणं रागमात्रमित्यपौ-नरुक्त्यम् ॥ २५ ॥

वृ०—शङ्कते—द्रव्यस्य घटादेर्यथा सगुणस्य रूपादिविशिष्टस्योत्पत्तिर्यथा

---

* अयं भावः—यौवनाद्यवस्थायां हि चेतनस्य प्रवृत्तिः क्षीरादौ पूर्वाभ्यस्तस्मृत्यनुबन्ध-हेतुका प्रतीतेति बाल्यावस्थायामपि चेतनस्य तद्धेतुकैव भवितुमर्हति तेन हेतुना चेतन-प्रवृत्तेः स्वाभाविकसंबन्धावगमात्, वह्निनेव धूमस्य । एवं व्यवस्थिते यत्र स्मृतेः कार्यं दृश्यते तन्मात्रविषयैव बालस्य स्मृतिरनुमीयते नान्यत्र । न च य एकस्य स्मरति तेना-परमपि स्मर्तव्यमिति नियमहेतुरस्ति येन जात्यन्धबधिरादयो रूपादीनाचक्षीरन् । अदृष्ट-परिपाकोद्बोधितस्य संस्कारस्य तन्नियमेन नियमोपपत्तेः । इदानीमपि चानुभूतेषु कस्यचि-देव स्मरति न सर्वस्येति । + न च रागस्यादृष्टहेतुकत्वान्नानुपपत्तिरिति वाच्यम् । तावताऽ-प्यदृष्टाश्रयतया तत्कारणकर्मकल्पनायां पूर्वशरीरसंबन्धकल्पनोपपत्तेः ।

त्पत्तिधर्मकस्याऽऽत्मनो रागः कुतश्चिदुत्पद्यते । अत्रायमुदितानुवादो निदर्शनार्थः ॥ २६ ॥

न संकल्पनिमित्तत्वाद्रागादीनाम् ॥ २७ ॥

भा०—न खलु सगुणद्रव्योत्पत्तिवदुत्पत्तिरात्मनो रागस्य च । कस्मात् । संकल्पनिमित्तत्वाद्रागादीनाम् । अयं खलु प्राणिनां विषयानासेवमानानां संकल्पजनितो रागो गृह्यते । संकल्पश्च पूर्वानुभूतविषयानुचिन्तनयोनिः । तेनानुमीयते जातस्यापि पूर्वानुभूतार्थचिन्तनकृतो राग इति । आत्मोत्पादाधिकरणात्तु रागोत्पत्तिर्भवन्ती संकल्पादन्यस्मिन्रागकारणे सति वाच्या कार्यद्रव्यगुणवत् । न चाऽऽत्मोत्पादः सिद्धो नापि संकल्पादन्यद्रागकारणमस्ति । तस्मादयुक्तं सगुणद्रव्योत्पत्तिवत्तयोरुत्पत्तिरिति । अथापि संकल्पादन्यद्रागकारणं धर्माधर्मलक्षणमदृष्टमुपादीयते तथाऽपि पूर्वशरीरयोगोऽप्रत्याख्येयः । तत्र हि तस्य निर्वृत्तिर्नास्मिञ्जन्मनि ।

तन्मयत्वाद्रा*ग इति । विषयाभ्यासः खल्वयं भावनाहेतुस्तन्मयत्वमुच्यत इति । जातिविशेषाच्च रागविशेष इति । कर्म

---

घटादिः स्वत एव रूपादिमान्भवति तथैवाऽऽत्माऽपि स्वत एव सरागो भवतीत्यप्रयोजकत्वं त्वदीयहेतूनामिति भावः ॥ २६ ॥

वृ०—समाधत्ते— संकल्पो ज्ञानमिष्टसाधनताज्ञानमिति यावत् । तन्निमित्तका हि रागादयः । तथा चेष्टसाधनताज्ञानत्वेनेच्छात्वादिना कार्यकारणभावात्प्रवृत्ति-

---

* अभ्युपेत्यादृष्टकारणत्वं रागादीनां पूर्वं परिहृतं परमार्थस्तु तन्मयत्वाद्राग इत्यर्थः । ननु यदि पूर्वाभ्यस्तस्मृत्यनुबन्धाद्रागद्वेषादीनामुत्पादो हन्त मनुष्यजन्मानन्तरं प्राप्तकरभभावस्य मनुष्यजन्मोचितानां भावनानामानन्तर्यात्तदनुरूपा एवास्य रागादयो भवेयुर्न करभानुरूपाः, करभजातेरस्य विजातीयजन्मसहस्रव्यवायादित्याशङ्क्याऽऽह— जातिविशेषाच्चेति । कर्मणः संस्कारोद्बोधकत्वात्करभत्वजात्यनुबद्धेन कर्मणा जन्मसहस्रव्यवहिताऽपि करभभावनोद्बोध्यते, नानन्तराऽपि मनुष्यभावना मरणाभिभूतेति भावः ।

खल्विदं जातिविशेषनिर्वर्तकं तादर्थ्यात्ताच्छब्द्यं[1] विज्ञायते । तस्मादनुपपन्नं संकल्पादन्यद्रागकारणमिति ॥ २७ ॥

इत्यनादिनिधनप्रकरणम् ॥ ५ ॥

---

भा०—अनादिश्चेतनस्य शरीरयोग इत्युक्तं स्वकृतकर्मनिमित्तं चास्य शरीरं सुखदुःखाधिष्ठानं तत्परीक्ष्यते* । किं घ्राणादिवदेकप्रकृतिकमुत नानाप्रकृतीति । कुतः संशयः । विप्रतिपत्तेः संशयः । पृथिव्यादीनि भूतानि संख्याविकल्पेन शरीरप्रकृतिरिति प्रतिजानत इति किं तत्र तत्त्वम्—

पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥

तत्र मानुषं शरीरं पार्थिवम् । कस्मात् । गुणान्तरोपलब्धेः । गन्धवती पृथिवी गन्धवच्च शरीरम् । अबादीनामगन्धवत्त्वात्तत्प्रकृत्यगन्धं + स्यात् । न त्विदमबादिभिरसंपृक्तया पृथिव्याऽऽरब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्पत इत्यतः पञ्चानां भूतानां संयोगे सति शरीरं भवति । भूतसंयोगो हि मिथः पञ्चानां

---

त्वेन चेष्टात्वेन च कार्यकारणभावान्नाप्रयोजकत्वमिति भावः ॥ २७ ॥

इत्यनादिनिधनप्रकरणम् ॥ ५ ॥

---

वृ०—क्रमप्राप्ते शरीरपरीक्षणे मानुषादिशरीरं पाञ्चभौतिकमित्येके । तत्र

---

* आत्मपरीक्षानन्तरं शरीरपरीक्षाया अवसरप्राप्तत्वादात्मनाऽनादिसंबन्धाच्च शरीरपरीक्षाया औचित्यादिति भावः । + अयमभिसंधिः—पृथिव्याप्यपरमाणू तावन्नैकं द्व्यणुकमारब्धुमर्हतः, तयो रूपस्पर्शवत्त्वेन तदारम्भसंभवेऽपि गन्धवत्त्वाभावप्रसङ्गात् । एकपार्थिवाणुसमवेतस्य गन्धस्यैकत्वेनानारम्भकत्वात् । ननु पार्थिवपरमाणुद्वयमेकश्च जलपरमाणुरित्यणूनामारम्भकत्वे गन्धवत्त्वोपपत्तिरिति चेन्न । बहूनां परमाणूनामनारम्भकत्वात् । तथाहि—त्रयः परमाणवो न कार्यद्रव्यमारभन्ते परमाणुत्वे सति बहुत्वसंख्यायुक्तत्वात्, घटोपगृहीतपरमाणुप्रचयवत् । घटोपगृहीतानामारम्भकत्वे तु घटनाशे सति कपालशर्करा-चूर्णक्रमो नोपलभ्येत । एवं च मानुषशरीरमेकात्मकं गन्धवत्त्वात्पार्थिवपरमाणुवदिति सिद्धं भवतीति ।

---

१ ङ. °तादात्म्यात्ताच्छ° ।

न निषिद्ध इति । आप्यतैजसवायव्यानि लोकान्तरे शरीराणि तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र इति । स्थाल्यादिद्रव्यनिष्पत्तावपि निःसंशयो नाबादिसंयोगमन्तरेण निष्पत्तिरिति ॥ २८ ॥

**पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ॥ २९ ॥**

**निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ॥ ३० ॥**

**गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥ ३१ ॥**

भा०—त इमे संदिग्धा हेतव इत्युपेक्षितवान्सूत्रकारः । कथं संदिग्धाः। सति च प्रकृतिभावे भूतानां धर्मोपलब्धिरसति न संयोगाप्रतिषेधात्संनिहितानामिति । यथा स्थाल्यामुदकतेजोवाय्वाकाशानामिति । तदिदमनेकभूतप्रकृतिशरीरमगन्धमरसमरूपमस्पर्शं च प्रकृत्यनुविधानात्स्यात् । न त्विदमित्थंभूतं तस्मात्पार्थिवं गुणान्तरोपलब्धेः ॥ २९ ॥ ३० । ३१ ॥

---

सिद्धान्तसूत्रम् । मानुषादिशरीरं पार्थिवं पृथिवीसमवायिकारणं गुणान्तरस्य गन्धनीलादिरूपकाठिन्यादेरुपलब्धेरिति ॥ २८ ॥

वृ०—मतान्तराभिधानाय त्रिसूत्री । तद्गुणानां पृथिव्यप्तेजोगुणानां गन्धस्नेहोष्णस्पर्शानामुपलब्धेः । एतावता त्रिभौतिकत्वे सिद्धे निःश्वासादितश्चातुर्भौतिकत्वम् । निःश्वासोच्छ्वासौ प्राणवायोर्व्यापारविशेषौ । क्लेदो जलविशेषो जलविशिष्टपृथिवी वेत्युभयथाऽपि जलमावश्यकम् । पाकस्य तेजःसंयोगाधीनत्वात्तेजःसिद्धिः । व्यूहो निःश्वासादिः । अवकाशदानं छिद्रम् । एतानि मतानि सूत्रकृता तुच्छत्वान्न दूषितानि । तथाहि—एकस्मिञ्छरीरे पृथिवीत्वादिनानाजातेः संकरापत्तेरसंभवात् । न वा नानोपादानकत्वं विजातीयानामनारम्भकत्वात् । तथात्वे वा जलाद्यारब्धस्य न पृथिवीत्वं व्यभिचारात् । न वा चित्रद्रव्यं गन्धवत्त्वविरोधात् । गन्धादीनामानाशमनपायाच्च पार्थिवत्त्वमित्युक्तप्रायम् । यद्वा पार्थिवत्वे कथं जलादिसंबन्ध इत्याशङ्कायां जलादिनिमित्तवशात्त्रैभौतिकत्वादिव्यपदेश इत्याशयेन त्रिसूत्री ॥ २९ ॥ ३० ॥ ॥ ३१ ॥

श्रुतिप्रामाण्याच्च ॥ ३२ ॥

भा०—सूर्यं ते चक्षुर्गच्छतादित्यत्र मन्त्रे पृथिवीं ते शरीरमिति श्रूयते । तदिदं प्रकृतौ विकारस्य प्रलयाभिधानमिति । सूर्यं ते चक्षुः स्पृणोमीत्यत्र मन्त्रान्तरे पृथिवीं ते शरीरमिति श्रूयते । सेयं कारणाद्विकारस्य स्पृतिरभिधीयत* इति । स्थाल्यादिषु च तुल्यजातीयानामेककार्यारम्भदर्शनाद्भिन्नजातीयानामेककार्यारम्भानुपपत्तिः ॥ ३२ ॥

इति शरीरपरीक्षाप्रकरणम् ॥ ६ ॥

---

वृ०-पार्थिवत्वे युक्त्यन्तरमाह—सूर्यं ते चक्षुः शृणोमीति मन्त्रान्ते पृथिव्यां ते शरीरमित्यभिधानात् । एवं प्रकृतौ विकारस्य लयाभिधाने सूर्यं ते चक्षुर्गाच्छतादितिमन्त्रान्ते पृथिव्यां ते शरीरमिति । इमां चतुःसूत्रीं केचन भाष्यतया वर्णयन्ति । तन्न । तथा सत्येकसूत्रस्य प्रकरणत्वानुपपत्तेः । अत एव चतुर्थं सूत्रमेवेत्यपरे । अन्ये तूक्तयैवानुपपत्त्या 'आप्यतैजसवायव्यानि लोकान्तरशरीराणि तेष्वपि भूतसंयोगः पुरुषार्थतन्त्रः' इति भाष्यं सूत्रतया वर्णयन्ति । तदर्थस्तु—आप्यादीनि लोकान्तरेषु वरुणलोकादिषु प्रसिद्धानि शरीराणि । जलादिरूपत्वे कथमुपभोगक्षमतेत्यत्र तेष्वपीति भूतसंयोगः पृथिव्युपष्टम्भः पुरुषार्थतन्त्र उपभोगसंपादकः ॥ ३२ ॥

इति शरीरपरीक्षाप्रकरणम् ॥ ६ ॥

---

* अस्यापि मन्त्रस्यायमर्थः—यद्यस्मादायातं तत्तस्मिन्नेव प्रलयं गच्छतीति । प्रकृतौ विकारस्य प्रलयाभिधानं प्रकृतिशब्देन कार्यशून्यं कारणमुच्यते न पुनः कार्यस्य कारणे लयः । एवं चासदुत्पद्यते । सन्निरुध्यत इत्ययमर्थ उक्तो भवति । अत्रेदं बोध्यम्—इह कार्यकारणभावे चतुर्धा विप्रतिपत्तिः संभवति । तथाहि—असतः सज्जायत इति सौगताः संगिरन्ते । नैयायिकादयः सतोऽसज्जायत इति । वेदान्तिनः सतो विवर्तः कार्यजातं न वस्तुसदिति । सांख्यास्तु सतः सज्जायत इति ।

१ क. च. क्षुः स्पृण० । २ क. ग. च. °स्य स्मृति° ।

भा०—अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्यन्ते किमाव्यक्तिकान्याहोस्विद्भौतिकानीति* । कुतः संशयः—

**कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात्संशयः ॥ ३३ ॥**

कृष्णसारं भौतिकं तस्मिन्ननुपहते रूपोपलब्धिः । उपहते चानुपलब्धि+रिति । व्यतिरिच्य कृष्णसारमवस्थितस्य विषयस्योपलम्भो न कृष्णसारप्राप्तस्य । न चाप्राप्यकारित्वमिन्द्रियाणाम् । तदिदमभौतिकत्वे विभुत्वात्संभवति । एवमुभयधर्मोपलब्धेः संशयः ॥ ३३ ॥

भा०—अभौतिकानीत्याह कस्मात्—

**महदणुग्रहणात् ॥ ३४ ॥**

महदिति महत्तरं महत्तमं चोपलभ्यते । यथा न्यग्रोधपर्वतादि ।

---

वृ०—अथेन्द्रियं परीक्षणीयम् । तत्र लक्षणसूत्रोक्तभौतिकत्वमिन्द्रियाणां परीक्षितुं संशयमाह—कृष्णसारे चक्षुर्गोलके सति घटाद्युपलम्भाद्गोलकस्यैवेन्द्रियत्वमिति बौद्धाः । व्यतिरिच्य विषयं प्राप्योपलम्भादुपलम्भजननाद्गोलकातिरिक्तानीत्यपरे । तथेन्द्रियाणि गोलकातिरिक्तानि न वेति संशयः । गोलकातिरिक्तानीति नैयायिकादयः । तत्राप्यभौतिकान्याहंकारिकाणीति सांख्याः । भौतिकानीत्यपरे ॥ ३३ ॥

वृ०—तत्र सांख्यमतेन बौद्धमतमुदस्यन्नाह—गोलकं नेन्द्रियम्, अप्राप्यका-

---

* उपलक्षणं चैतत् । यदाऽपि भौतिकानि तदाऽपि कृष्णसारं यदेतदुपलभ्यते तदेवेन्द्रियमाहोस्वित्तदधिष्ठानं तैजसमित्यपि संशयो द्रष्टव्यः । तत्र मूलस्थः संशयः सांख्यनैयायिकयोर्विप्रतिपत्तेः । द्वितीयस्तु सौगतनैयायिकयोर्विप्रतिपत्तेरिति विवेकः । आव्यक्तिकत्वं नामाऽऽहंकारिकत्वम् । अहंकाराद्धि बुद्धिविकाराद्वैकृतादेकादशेन्द्रियाणि जायन्त इति सांख्याः । अव्यक्तस्य मूलकारणत्वादाव्यक्तिकत्वमिन्द्रियाणामिति बोध्यम् ।

+ उक्ताभ्यामन्वयव्यतिरेकाभ्यां कृष्णसारमेव चक्षुरिति भावः । एतच्चायुक्तमिति वार्तिककाराः । तथाहि—अन्वयव्यतिरेकयोः सतोरपि प्रदीपे चक्षुष्ट्वाभावात् । किं च कृष्णसारस्य चक्षुष्ट्वे संनिकृष्टविप्रकृष्टयोस्तुल्योपलब्धिप्रसङ्गः । कृष्णसारेण हि विषयो न संयुज्यते । असंयोगे चाविशेषादुभयोस्तुल्योपलब्धिः प्राप्नोति । संनिकृष्टस्यैव विषयता न विप्रकृष्टस्येति न भ्रमितव्यम् । विप्रकृष्टस्यापि विषयत्वस्य सर्वानुभवसिद्धत्वात् ।

अणिवत्यणुतरमणुतमं च गृह्यते । न्यग्रोधधानादि । तदुभयमुपलभ्यमानं चक्षुषो भौतिकत्वं बाधते । भौतिकं हि यावत्तावदेव व्याप्नोति । अभौतिकं तु विभुत्वात्सर्वव्यापकमिति* ॥ ३४ ॥

भा०--न महदणुग्रहणमात्रादभौतिकत्वं विभुत्वं चेन्द्रियाणां शक्यं प्रतिपत्तुम् । इदं खलु—

रश्म्यर्थसंनिकर्षविशे+-
षाद्ग्रहणम् ॥ ३५ ॥

तयोर्महदण्वोर्ग्रहणं चक्षूरश्मेरर्थस्य च संनिकर्षविशेषाद्भवति । यथा प्रदीपरश्मेरर्थस्य चेति । रश्म्यर्थसंनिकर्षश्चाऽऽवरणलिङ्गः । चाक्षुषो हि रश्मिः कुड्यादिभिरावृतमर्थं न प्रकाशयति यथा प्रदीपरश्मिरिति ॥ ३५ ॥

---

रित्वेऽतिप्रसङ्गात् । इत्थं च गोलकातिरिक्तं भौतिकमिति वाच्यम् । तदप्यसंगतम् । चक्षुषा हि न्यूनपरिमाणं महत्परिमाणं च गृह्यते । न च न्यूनेन महतो व्यापनं संभवति । न वाऽव्याप्यग्रहणमतोऽभौतिकानीन्द्रियाण्याहंकारिकाणीति ॥ ३४ ॥

वृ०-सांख्यं निरस्यति–रश्मिर्गोलकावच्छिन्नं तेजः । तेनार्थस्य घटादेर्यः संनिकर्षविशेषः संयोगविशेषस्तस्मान्महदण्वोर्ग्रहणमुपपद्यते । भौतिकेऽपि प्रदीपादौ महदणुप्रकाशकत्वं दृष्टम् । अभौतिकत्वे तु पुरः पश्चाद्वर्तिनां सर्वेषामेव ग्रहः स्यात् ॥ ३५ ॥

---

* अत्रेदं बोध्यम्—अयं हेतुर्व्यभिचरितः । भौतिकानामपि दीपादीनां महदणुप्रकाशकत्वात् । किं चेन्द्रियाणामभूतात्मकत्वे व्यापकत्वे चाऽऽश्रीयमाणे व्यवहितस्यापि विषयस्य ग्रहणप्रसङ्गः । व्यापकत्वादेव कुडयादेस्तदावरणसामर्थ्याभावात् । न च तद्वृत्तीनामावरणम् । इन्द्रियव्यतिरेकेण तद्वृत्तौ प्रमाणाभावात् । + संनिकर्षविशेषो नाम—भूयोवयवसंयोगैरनुगृह्यमाणो विशेषप्रतिपत्तिहेतुरवयवीन्द्रियसंनिकर्षः । स च रश्म्यर्थसंनिकर्षविशेषो महदण्वोस्तुल्यो भवतीत्यन्यथा महदण्वोर्ग्रहणं सिध्यति ।

भा०—आवरणानुमेयत्वे सतीदमाह—

तदनुपलब्धेरहेतुः* ॥ ३६ ॥

रूपस्पर्शवद्धि तेजो महत्त्वादनेकद्रव्यवत्त्वाच्चोपलब्धिरिति+ प्रदीपवत्प्रत्यक्षत उपलभ्येत चक्षुषो रश्मिर्यदि स्यादिति ॥ ३६ ॥

नानुमीयमानस्य प्रत्यक्षतोऽ-
नुपलब्धिरभावहेतुः ॥ ३७ ॥

भा०—संनिकर्षप्रतिषेधार्थेनाऽऽवरणेन लिङ्गेनानुमीयमानस्य रश्मेर्या प्रत्यक्षतोऽनुपलब्धिर्नासावभावं प्रतिपादयति। यथा चन्द्रमसः परभागस्य पृथिव्याश्चाधोभागस्य ॥ ३७ ॥

द्रव्यगुणधर्मभेदाच्चोप-
लब्धिनियमः ॥३८॥

भा०—भिन्नः खल्वयं द्रव्यधर्मो गुणधर्मश्च महदनेकद्रव्यवच्च विषक्तावयवमाप्यं द्रव्यं प्रत्यक्षतो नोपलभ्यते स्पर्शस्तु शीतो गृह्यते तस्य द्रव्यस्यानुबन्धाद्धेमन्तशिशिरौ कल्प्येते। तथाविधमेव च तैजसं द्रव्यमनुद्भूतरूपं सह रूपेण नोपलभ्यते स्पर्शस्त्वस्योष्ण उपलभ्यते। तस्य द्रव्यस्यानुबन्धाद्ग्रीष्मवसन्तौ कल्प्येते यत्रत्वेषा भवति।

---

वृ०—तैजसे चक्षुष्यनुपलब्धिबाधं बौद्धः शङ्कते-रश्म्यर्थसंनिकर्षो न हेतुर्गोलकातिरिक्तस्य रश्मेरनुपलब्धेः ॥ ३६ ॥

वृ०—समाधत्ते-रूपोपलब्धेः सकरणत्वादिनाऽनुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिर्नाभावनिर्णायिकेत्यर्थः ॥ ३७ ॥

वृ०—कथं तर्हि नोपलम्भ इत्यत आह—द्रव्यस्य धर्मभेदो महत्त्वादिः। गुणस्य धर्मभेद उद्भूतत्वम्। तदधीनत्वात्प्रत्यक्षस्य। द्रव्यमात्र उपलब्धेर्न नियमः। यत्रोद्भूतरूपमहत्त्वादिकं तस्य प्रत्यक्षं तदभावाच्चक्षुरादेरप्रत्यक्षम्।

---

* न चाक्षुषो रश्मिर्विद्यत इति सूत्रार्थः। + महत्त्वं तावत्कारणमहत्त्वबहुत्वप्रचयेभ्यो जायते। अनेकद्रव्यवत्त्वमपि कारणबहुत्वादेव जायते। रूपस्पर्शवद्धि तेज इत्यनेन नारूपं तदिति सूच्यते। एवं चोक्ताशेषोपलब्धिकारणसंनिधाने सति यस्मान्नोपलभ्यते ततो नास्तीति गम्यत इति भावः।

---

१ ख घ च. विभक्ता'

अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः* । तत्र रूपं च द्रव्यं च तदाश्रयः प्रत्यक्षत उपलभ्यते । रूपविशेषस्तु यद्भावात्क्वचिद्रूपोपलब्धिः, यदभावाच्च द्रव्यस्य क्वचिदनुपलब्धिः स रूपधर्मोऽयमुद्भवसमाख्यात इति । अनुद्भूतरूपश्चायं नायनो रश्मिः । तस्मात्प्रत्यक्षतो नोपलभ्यत इति । दृष्टश्च तेजसो धर्मभेदः—उद्भूतरूपस्पर्शं प्रत्यक्षं तेजो यथाऽऽदित्यरश्मयः । उद्भूतरूपमनुद्भूतस्पर्शं च प्रत्यक्षं यथा प्रदीपरश्मयः । उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षं यथाऽबादिसंयुक्तं तेजः । अनुद्भूतरूपस्पर्शोऽप्रत्यक्षश्चाक्षुषो रश्मिरिति ।

कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः । यथा चेतनस्यार्थो विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्च कल्प्यते तथेन्द्रियाणि व्यूढानि । विषयप्राप्त्यर्थश्च रश्मेश्चाक्षुषस्य व्यूहः । रूप+स्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्त्यर्था । द्रव्यविशेषे च प्रतीघातादावरणोपपत्तिर्व्यवहारार्था । सर्वद्रव्याणां विश्वरूपो

---

चक्षुरादावुद्भूतरूपमेव न कुत इत्याशङ्कायां भाष्यम्—अदृष्टविशेषाधीन

---

* इदं सूत्रमिति वार्तिककाराः । अत्र रूपविशेषग्रहणेन रूपविशेष उद्भवसमाख्योऽभिधीयते न रूपत्वम । रूपविशेषादित्यनेन न रूपान्तराद्रूपं विशिनष्टि, किंतूद्भवो विशेषकत्वाद्विशेष इत्युच्यते । उद्भवश्च कार्यगम्यः । तथाहि—यस्याभावाद्विवक्तावयवमाप्यद्रव्यं हेमन्ते न गृह्यते, ग्रीष्मे तैजस ऊष्मा च । यस्य च भावात्प्रदीपरश्मिरुपलभ्यत आदित्यरश्मिश्च स उद्भवो नाम विशेषः । + यदि नायनो रश्मिरुद्भूतस्पर्शो भवेत्तेन दृश्यविशेषेऽनेकरश्मिसंनिपाते सति द्रव्यं दह्येत । अनेकरश्मिसंनिपाते च सति व्यवहितत्वाद्द्रव्यस्यानुपलब्ध्या भवितव्यम् । ननु यथाऽऽदित्यरश्मिसंबद्धेऽर्थे नायनो रश्मिर्न व्यवधीयते तथा रश्म्यन्तरसंनिपातेऽपीति चेत् । उच्यते—व्यतिभिद्यानुग्राहकत्वात् । व्यतिभिद्याऽऽदित्यरश्मिस्तत्संबद्धेन द्रव्येण संबध्यते । चक्षुष उद्भूतरूपस्पर्शवत्त्वे तु पूर्वं संनिपातितेन चक्षुषा व्यवहितमर्थं नान्यः पुरुषो गृह्णीयात् । न चानेकरश्मिसंनिपाते सति समानजातीयद्रव्येण द्रव्यान्तरं रश्मिरुत्पद्यत इति वाच्यम् । तथा सति समप्रासमचक्षुषोस्तुल्योपलम्भः प्राप्नोति । न चैतदिष्टम् । अनुपलब्धेः । एवं चैतद्व्यवहारप्रक्लृप्त्यर्थं नायनस्य रश्मेरनुद्भूतरूपस्पर्शवत्त्वमावश्यकमिति भावः ।

---

१ ख. ध. °द्रव्येण स° । २ क. ग. ङ. च. °ब्धिः । यत्र ।

व्यूह इन्द्रियवत्कर्मकारितः पुरुषार्थतन्त्रः । कर्म तु धर्माधर्मभूतं चेतनस्योपभोगार्थमिति ।

अव्यभिचाराच्च प्रतीघातो भौतिकधर्मः । यश्चाऽऽवरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतीघातः स भौतिकधर्मो न भूतानि व्यभिचरति । नाभौतिकं प्रतीघातधर्मकं दृष्टमिति । अप्रतिघातस्तु व्यभिचारी भौतिकाभौतिकयोः समानत्वादिति ॥ ३८ ॥

भा०—यदपि मन्यते प्रतिघाताद्भौतिकानीन्द्रियाणि, अप्रतिघाताद्भौतिकानीति प्राप्तम् । दृष्टश्चाप्रतीघातः काचाभ्रपटलस्फटिकान्तरितोपलब्धेः । तन्न युक्तम् । यस्माद्भौतिकमपि न प्रतिहन्यते काचाभ्रपटलस्फटिकान्तरितप्रकाशात्प्रदीपरश्मीनाम् । स्थाल्यादिषु पाचकस्य तेजसोऽप्रतिघातः, उपपद्यते चानुपलब्धिः कारणभेदात्—

मध्यंदिनोल्काप्रकाशानुपल-
ब्धिवत्तदनुपलब्धिः ॥३९॥

यथाऽनेकद्रव्येण समवायाद्रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारणे मध्यंदिनोल्काप्रकाशो नोपलभ्यत आदित्यप्रकाशेनाभिभूतः, एवं महदनेकद्रव्यवत्त्वाद्रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारणे चाक्षुषो रश्मिर्नोपलभ्यते निमित्तान्तरतः । तच्च व्याख्यातमनुद्भूतरूपस्पर्शस्य द्रव्यस्य प्रत्यक्षतोऽनुपलब्धिरिति ॥ ३९ ॥

---

इन्द्रियाणां व्यूहो रचनाविशेष उपभोगसाधनमिति सूत्रमेवेदमिति केचित् ॥ ३८ ॥

वृ०—महतो रूपवतोऽनुपलब्धौ दृष्टान्तमाह—महतो रूपवतश्चोल्काप्रकाशस्य सौरालोकेनाभिभवान्मध्यंदिनेऽनुपलब्धिवदनुद्भूतरूपवत्त्वाच्चक्षुषोऽप्यनुपलम्भः संभवतीति भावः ॥ ३९ ॥

भा०—अत्यन्तानुपलब्धिश्चाभावकारणं यो हि ब्रवीति लोष्टप्रकाशो मध्यंदिन आदित्यप्रकाशाभिभवान्नोपलभ्यत इति तस्यैतत्स्यात्—

न रात्रावप्यनुपलब्धेः ॥ ४० ॥

अप्यनुमानतोऽनुपलब्धेरिति। एवमत्यन्तानुपलब्धेर्लोष्टप्रकाशो नास्ति न त्वेवं चक्षुषो रश्मिरिति ॥ ४० ॥

भा०—उपपन्नरूपा चेयम्—

बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरन-
भिव्यक्तितोऽनुपलब्धिः ॥ ४१ ॥

बाह्येन प्रकाशेनानुगृहीतं चक्षुर्विषयग्राहकं तदभावेऽनुपलब्धिः। सति च प्रकाशानुग्रहे शीतस्पर्शोपलब्धौ च सत्यां तदाश्रयस्य द्रव्यस्य चक्षुषाऽग्रहणं रूपस्यानुद्भूतत्वात्। सेयं रूपानभिव्यक्तितो रूपाश्रयस्य द्रव्यस्यानुपलब्धिर्दृष्टा ॥ ४१ ॥

भा०—तत्र यदुक्तम्—'तदनुपलब्धेरहेतुः' ( ३ । १ । ३६ ) इत्येतदयुक्तम्। कस्मात्पुनरभिभवोऽनुपलब्धिकारणं चाक्षुषस्य रश्मेर्नोच्यत इति—

अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥

बाह्यप्रकाशानुग्रहनिरपेक्षतायां चेति चार्थः। यद्रूपमभिव्यक्तमुद्भूतं बाह्यप्रकाशानुग्रहं च नापेक्षते तद्विषयोऽभिभवो विपर्ययेऽभिभवाभावात्। अनुद्भूतरूपत्वाच्चानुपलभ्यमानं बाह्यप्रकाशा-

---

वृ०—नन्वेवं घटादेरपि रश्मिः स्यात्सौरालोकेनाभिभवात्पुनरग्रह इत्यत्राऽऽह—नेत्यस्य घटादौ रश्मिरिति शेषः ॥ ४० ॥

वृ०—नन्वनुद्भूतरूपत्वाच्चक्षुषोऽनुपलब्धिर्न त्वभिभवादित्यत्र किं विनिगमकमिति तटस्थाशङ्कायामाह—अनभिव्यक्तितोऽनुद्भूतरूपत्वाच्चक्षुषोऽनुपलब्धिः। कुतः। बाह्यप्रकाशानुग्रहात्सौरालोकादिसाहित्याद्विषयोपलब्धेः। तस्योद्भूतरूपत्वे बाह्यप्रकाशापेक्षा न स्यात्। अभिभूतत्वे च तत्साहित्येनापि प्रत्यक्षजननं न स्यात्। अभिभूतस्य कार्याक्षमत्वादिति भावः ॥ ४१ ॥

वृ०—ननु चक्षुषो नाभिभवः किंतु तद्रूपस्य। तस्य च प्रत्यक्षजनकत्वे मानाभावः। किं चाभिभवात्तस्य न प्रत्यक्षम्। इतरप्रत्यक्षजनने च विरो-

नुग्रहाच्चोपलभ्यमानं नाभिभूयत इति । एवमुपपन्नमस्ति चाक्षुषो रश्मिरिति ॥ ४२ ॥

नक्तंचरनयनरश्मिदर्शनाच्च ॥ ४३ ॥

भा०—दृश्यन्ते हि नक्तं नयनरश्मयो नक्तंचराणां वृषदंशप्रभृतीनां तेन शेषस्यानुमानमिति । जातिभेदवदिन्द्रियभेद इति चेद्धर्मभेदमात्रं चानुपपन्नमावरणस्य प्राप्तिप्रतिषेधार्थस्य दर्शनादिति ॥ ४३ ॥

धाभाव इत्याशङ्कायामाह—रूपस्याभिव्यक्तौ प्रत्यक्ष उद्भूतत्व इति यावत् । उद्भूतरूपस्य प्रत्यक्षाभावे ह्यभिभवकल्पना । न त्वेवं प्रकृते । सुवर्णादिवत्सर्वदाऽभिभावकद्रव्यान्तरकल्पने च गौरवमिति भावः ॥ ४२ ॥

वृ०—चक्षुषि प्रमाणान्तरमाह—नक्तंचराणां वृषदंशादीनां गोलके रश्मिदर्शनात्तद्दृष्टान्तेन परेषामपि रश्म्यनुमानमिति भावः । अन्यथा तमसि तस्य प्रत्यक्षं न स्यादिति हृदयम् ॥ ४३ ॥

* विमतं कृष्णसारं रश्मिवत्, द्रव्यत्वे सति रूपोपलब्धिनियतसाधनत्वात्प्रदीपवत् । अथवा विमतं चक्षू रश्मिवत्, द्रव्यत्वे सति नियतत्वे सति स्फटिकादिव्यवहितार्थप्रकाशकत्वात्प्रदीपवदिति । + वृषदंशनयनस्य रश्मिवत्त्वं धर्मो मनुष्यनयस्य तु न तत्त्वमिति योऽयं धर्मभेदः स एव धर्मभेदमात्रं तच्चानुपपन्नम् । चोऽवधारणे भिन्नक्रमः, अनुपपन्नमेवेति योजना । × ननु यथा बिडालत्वजातिर्वृषदंशे वर्तते न मनुष्ये, तथा रश्मिवद्बिडालस्यैव चक्षुर्भविष्यति न मनुष्यस्येति चेन्न । आवरणसामर्थ्यात् । सत्येतस्मिञ्जातिभेदे यथा वृषदंशप्रभृतीनां कुड्यादिभी रश्मय आव्रियन्ते तथा मनुष्याणामपीति समानमेव । एवं च मानुषं चक्षू रश्मिवत्, अप्राप्तिस्वभावत्वे सति रूपाद्युपलब्धिनिमित्तत्वान्नक्तंचरचक्षुर्वदिति फलितम् ।

१ ७. घ. 'भेदादि' । २ ग. 'र्मसाम्यभेदे चा' ।

भा०—इन्द्रियार्थसंनिकर्षस्य ज्ञानकारणत्वानुपपत्तिः । कस्मात्——

अप्राप्यग्रहणं काचाभ्रपटलस्फ-
टिकान्तरितोपलब्धेः ॥ ४४ ॥

तृणादिसर्पद्द्रव्यं काचेऽभ्रपटले वा प्रतिहतं दृष्टमव्यवहितेन संनिकृष्यते, व्याहन्यते वै प्राप्तिर्व्यवधानेनेति । यदि च रश्म्यर्थसंनिकर्षो ग्रहणहेतुः स्यान्न व्यवहितस्य संनिकर्ष इत्यग्रहणं स्यात् । अस्ति चेयं काचाभ्रपटलस्फटिकान्तरितोपलब्धिः । सा ज्ञापयत्यप्राप्यकारीणीन्द्रियाणि । अत एवाभौतिकानि ! प्राप्यकारित्वं हि भौतिकधर्म इति ॥ ४४ ॥

भा०——न——

कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥

अप्राप्यकारित्वे सतीन्द्रियाणां कुड्यान्तरितस्यानुपलब्धिर्न स्यात् । प्राप्यकारित्वेऽपि तु काचाभ्रपटलस्फटिकान्तरितोपलब्धिर्न स्यात् ॥ ४५ ।

अप्रतीघातात्संनिकर्षोपपत्तिः ॥ ४६ ॥

भा०—न च काचोऽभ्रपटलं वा नयनरश्मिं विष्टभ्नाति । सोऽप्रतिहन्यमानः संनिकृष्यत इति ॥ ४६ ॥

---

वृ०—अप्राप्यकारित्वं चक्षुषः स्यादित्याशङ्कते ॥ ४४ ॥

वृ०—समाधत्ते । परे तु—उक्तसूत्रस्य पूर्वपक्षपरत्वं मन्यमानस्य भाष्यकारस्यावतारणिका—अप्राप्यग्रहणमिति । वस्तुतः सिद्धान्तसूत्रमेव । तत्प्रदीपदृष्टान्तेन काचाद्यन्तरितप्रकाशकत्वेन तैजसत्वं सिध्यतीति । नन्वप्राप्यकारित्वं किं न स्यादत्राऽऽह· कुड्येति । उक्तस्य तैजसत्वस्य प्रतिषेधो गोलकात्मकत्वं न संभवति । कुड्यान्तरितस्यानुपलब्धेरित्याहुः ॥ ४५ ॥

वृ०—ननु कुड्यान्तरित इव काचान्तरितेऽपि संनिकर्षो न संभवतीति कथं प्राप्यकारित्वमित्याशङ्कायामाह—काचादिना स्वच्छद्रव्येणाप्रतिघातादप्रतिबन्धात्संनिकर्ष उपपद्यत इति भावः ॥ ४६ ॥

---

१ ख. घ. °ति ॥ ४४ ॥ कु° । २ क· ख. घ. च. °काचाऽभ्र° ।

भा०—यश्च मन्यते न भौतिकस्याप्रतीघात इति तन्न—

आदित्यरश्मेः स्फटिकान्तरि-[2]
तेऽपि दाह्येऽविघातात्[3] ॥ ४७ ॥

आदित्यरश्मेरविघातात्स्फटिकान्तरितेऽप्यविघाताद्दाह्येऽविघा-तात् । अविघातादिति च पदाभिसंबन्धभेदाद्वाक्यभेद इति । यथावाक्यं चार्थभेद इति। आदित्यरश्मिः कुम्भादिषु न प्रतिहन्य-तेऽविघातात्। कुम्भस्थमुदकं[4] तपति प्राप्तौ हि द्रव्यान्तरगुणस्योष्ण-स्पर्शस्य ग्रहणं तेन च शीतस्पर्शाभिभव इति । स्फटिकान्तरितेऽ-पि प्रकाशनीये प्रदीपरश्मीनामप्रतीघातः, अप्रतीघातात्प्राप्तस्य ग्रहणमिति । भर्जनकपालादिस्थं च द्रव्यमाग्नेयेन तेजसा दह्यते, तत्राविघातात्प्राप्तिः, प्राप्तौ तु दाहो नाप्राप्यकारि तेज इति अवि-घातादिति च केवलं पदमुपादीयते । कोऽयमविघातो नाम । अव्यूह्यमानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्यस्याविष्टम्भः क्रियाहेतोरप्रतिबन्धः[5] प्राप्तेर*प्रतिषेध इति । दृष्टं हि कलशनिपक्ता-नामपां बहिः शीतस्पर्शग्रहणम् । न चेन्द्रियेणासंनिकृष्टस्य द्रव्यस्य स्पर्शोपलब्धिः । दृष्टौ च प्रस्यन्दपरिस्रवौ । तत्र काचाभ्रपटला-दिभिर्नायनरश्मेरप्रतिघाताद्विभिद्यार्थेन सह संनिकर्षादुपपन्नं ग्रह-णमिति ॥ ४७ ॥

नेतरेतरधर्मप्रसङ्गात् ॥ ४८ ॥

भा०—काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतीघातः । कुड्यादिवद्वा

---

वृ०—तत्र दृष्टान्तमाह—दाह्य इति । वस्तुमात्रोपलक्षणम् । परे तु दाह्ये कपा-लादौ वह्न्यादेरविघातपरं तदित्याहुः ॥ ४७ ॥

वृ०—आक्षिपति—अप्रतिघातो न युक्तः । इतरस्य स्फटिकादेः । इतरस्य

---

* यस्य द्रव्यस्यावयवा न व्यूह्यन्ते तस्यान्तरवयवैरव्यूह्यमानस्य योऽभिसंबन्धः सोऽ-विघातः । अथवाऽन्तर्व्यवस्थितस्य द्रव्यस्याव्यूह्यमानावयवस्य बहिरवस्थितद्रव्यप्राप्तिः ।

---

१ ग. °घातः । त° । २ क. ग. च. °न्तरेऽपि । ३ ङ. °त् । ४७ ॥ नारि° । ४ ग. °कं प्रति । ५ ख. घ. °न्धः । दृ°

काचाभ्रपटलादिभिः प्रतीघात इति प्रसज्यते । नियमे कारणं वाच्यमिति ॥ ४८ ॥

आदर्शोदकयोः प्रसादस्वाभाव्याद्रू-
पोपलब्धिवत्तदुपलब्धिः ॥ ४९ ॥

भा०—आदर्शोदकयोः प्रसादो रूपविशेषः स्वो धर्मो नियमदर्शनात् । प्रसादस्य वा स्वो धर्मो रूपोपलम्भनम् । यथाऽऽदर्शप्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वेन मुखेन संनिकर्षे सति स्वमुखोपलम्भनं प्रतिबिम्बग्रहणाख्यमादर्शरूपानुग्रहात्तन्निमित्तं भवति । आदर्शरूपोपघाते तदभावात्कुड्यादिषु च प्रतिबिम्बग्रहणं न भवति । एवं काचाभ्रपटलादिभिरविघातश्चक्षूरश्मेः कुड्यादिभिश्च प्रतिघातो द्रव्यस्वभावनियमादिति ॥ ४९ ॥

दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ॥ ५० ॥

भा०—प्रमाणस्य तत्त्वविषयत्वात् । न खलु भोः परीक्ष्यमाणेन दृष्टानुमिता अर्थाः शक्या नियोक्तुमेवं भवतेति । नापि प्रतिषेद्धुमेवं न भवतेति । नहीदमुपपद्यते—रूपवद्गन्धोऽपि चाक्षुषो भवत्विति, गन्धवद्वा रूपं चाक्षुषं मा भूदिति, अग्निप्रतिपत्तिवद्धूमेनोदकप्रतिपत्तिरपि भवत्विति, उदकाप्रतिपत्तिवद्वा धूमेनाग्निप्रतिपत्तिरपि मा भूदिति । किं कारणम् । यथा खल्वर्था भवन्ति य एषां स्वो भावः स्वो धर्म इति तथाभूताः प्रमाणेन प्रतिपद्यन्त इति । यथाभूतविषयकं हि प्रमाणमिति । इमौ खलु नियोगप्रतिषेधौ भवता

---

कुड्यादेर्यो धर्मः प्रतिघातकत्वं तत्प्रसङ्गात्स्फटिकादिकमपि कुड्यादिवत्प्रतिबन्धकं भवेदित्यर्थः । ४८ ॥

वृ०—समाधत्ते—आदर्शे उदके च प्रसादस्वाभाव्यात्स्वच्छस्वभावत्वान्मुखादिरूपोपलब्धिर्न तु भित्त्यादौ । एवं स्फटिकान्तरितस्योपलब्धिर्न तु कुड्यान्तरितस्येति स्वाभाव्यान्न दोषः । एतेन वह्न्यादेर्घटादिनाऽप्रतिघातवच्चक्षुषोऽपि प्रतिघातो न स्यादिति प्रत्युक्तम्, वह्न्याद्यप्रतिबन्धेऽपि दीपालोकादेः प्रतिबन्धवत्संभवादिति भावः ॥ ४९ ॥

वृ०—चक्षुषस्तादृशत्वकल्पने किं मानमित्यत्राऽऽह—हि यस्मात्तादृशानामनुमितानां वा पदार्थानां दृष्टेनानुमितानामिति वाऽर्थः । तेषामेवं भवितेति नियोग

देशितौ काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातो भवतु कुड्यादिवद्वा काचाभ्रपटलादिभिरप्रतिघातो मा भूदिति । न दृष्टानुमिताः खल्विमे द्रव्यधर्माः । प्रतिघाताप्रतिघातयोरुपलब्ध्यनुपलब्धी व्यवस्थापिके । व्यवहितानुपलब्ध्याऽनुमीयते कुड्यादिभिः प्रतिघातो व्यवहितोपलब्ध्याऽनुमीयते काचाभ्रपटलादिभिरप्रतिघा*त इति ॥ ५० ॥

इतीन्द्रियपरीक्षाप्रकरणम् ॥ ७ ॥

---

भा०—अथापि खल्वेकमिदमिन्द्रियं बहूनीन्द्रियाणि वा । कुतः संशयः—

स्थानान्यत्वे नानात्वादवयविना-
नास्थानत्वाच्च संशयः ॥ ५१ ॥

बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते नानास्थानश्च सन्नेकोऽवयवी चेति । तेनेन्द्रियेषु भिन्नस्थानेषु संशय इति ॥ ५१ ॥

---

एवं मा भवितेति प्रतिषेधो वा नोपपद्यते युक्त्यनुसारिणी हि कल्पनेति भावः ॥ ५० ॥

इतीन्द्रियपरीक्षाप्रकरणम् ॥ ७ ॥

---

वृ०—दर्शनस्पर्शनाभ्यामित्यादिकमिन्द्रियनानात्वे युज्यत इत्युपोद्घातेनेन्द्रियनानात्वं परीक्षणीयं तत्र संशयमाह—स्थानान्यत्वे स्थानभेदे घटपटादीनां नानात्वदर्शनान्नानावयवस्थितस्यावयविन एकत्वदर्शनाच्चेन्द्रियाणां नानात्वमेकत्वं वेति संशयः ॥ ५१ ॥

---

* नन्विन्द्रियस्य प्राप्यकारित्वे नेत्रसंबद्धाऽञ्जनशलाका कस्मान्नोपलभ्यत इति चेत् । न । इन्द्रियेणासंबन्धात् । न ह्यधिष्ठानमिन्द्रियम् । किंतु रश्मिरिन्द्रियम् । न च रश्मिना सहाञ्जनशलाका संबद्धा येन सोपलभ्येतेति बोध्यम् ।

भा०—एकमिन्द्रियम्—

त्वगव्यतिरेकात् ॥ ५२ ॥

त्वगेकमिन्द्रियमित्याह । कस्मात् । अव्यतिरेकात् । न त्वचा किंचिदिन्द्रियाधिष्ठानं न प्राप्तम् । न चासत्यां त्वचि किंचिद्विषयग्रहणं भवति । यया सर्वेन्द्रियस्थानानि व्याप्तानि । यस्यां च सत्यां विषयग्रहणं भवति । सा त्वगेकमिन्द्रियमिति ।

नेन्द्रियान्तरार्थानुपलब्धेः* । स्पर्शोपलब्धिलक्षणायां सत्यां त्वचि, गृह्यमाणे त्वगिन्द्रियेण स्पर्शे, इन्द्रियान्तरार्था रूपादयो न गृह्यन्तेऽन्धादिभिः । न स्पर्शग्राहकादिन्द्रियान्तरमस्तीति स्पर्शवदन्धादिभिर्गृह्येरन्रूपादयः । न च गृह्यन्ते । तस्मान्नैकमिन्द्रियं त्वगिति ।

त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः । यथा त्वचोऽवयवविशेषः कश्चिच्चक्षुषि संनिकृष्टो धूमस्पर्शं गृह्णाति, नान्यः । एवं त्वचोऽवयवविशेषा रूपादिग्राहकास्तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति ।

व्याहतत्वादहेतुः । त्वगव्यतिरेकादेकमिन्द्रियमित्युक्त्वा त्वगवयवविशेषेण धूमोपलब्धिवद्रूपाद्युपलब्धिरित्युच्यते । एवं च सति नानाभूतानि विषयग्राहकाणि विषयव्यवस्थानात् । तद्भावे विषयग्रहणस्य भावात्तदुपघाते चाभावात् । तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यत+ इति ।

संदिग्धश्चाव्यतिरेकः । पृथिव्यादिभिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि । न च तेष्वसत्सु विषयग्रहणं भवतीति । तस्मान्न त्वगन्यद्वा सर्वविषयमेकमिन्द्रियमिति ॥ ५२ ॥

---

वृ०—पूर्वपक्षसूत्रम् । सर्वेष्विन्द्रियप्रदेशेष्वव्यतिरेकात्सत्त्वात्त्वगेवैकमिन्द्रियमस्तु ॥ ५२ ॥

---

* नेन्द्रियान्तरार्थानुपलब्धेः, त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः, व्याहतत्वादहेतुः, इति वचनत्रयस्य क्वचित्सूत्रत्वेनोल्लेखो दृश्यते । + प्रागेकमिन्द्रियं त्वगित्युपगम्येदानीं त्वगवयवविशेषा रूपादिग्राहका इति ब्रुवाणः प्रतिषेध्यमभ्यनुजानाति 'न ह्यवयव्यनतिरिक्ता अवयवाः' इति । किंच यांस्त्वचोऽवयवान्रूपादिग्राहकान्मन्यसे ते किमिन्द्रियात्मका उत नेति विचार्यते । यदीन्द्रियात्मकास्तर्हि नैकमिन्द्रियम् । यदि च नेन्द्रियात्मकास्तर्हि रूपादय इन्द्रियग्राह्या न भवन्तीति भावः ।

## न युगपदर्थानुपलब्धेः ॥ ५३ ॥

भा०-आत्मा मनसा संबध्यते मन इन्द्रियेणेन्द्रियं सर्वार्थैः संनिकृष्टमिति आत्मेन्द्रियमनोर्थसंनिकर्षेभ्यो युगपद्ग्रहणानि स्युः । न च युगपद्रूपादयो गृह्यन्ते । तस्मान्नै*कमिन्द्रियं सर्वविषयमस्तीति । असाह+चर्याच्च विषयग्रहणानां नैकमिन्द्रियं सर्वविषयकम् । साहचर्ये हि विषयग्रहणानामन्धाद्यनुपपत्तिरिति ।

विप्र×तिषेधाच्च न त्वगेका । न खलु त्वगेकमिन्द्रियं व्याघातात् । त्वचा रूपाण्यप्राप्तानि गृह्यन्त इति अप्राप्यकारित्वे स्पर्शादिष्वप्येवं प्रसङ्गः । स्पर्शादीनां च प्राप्तानां ग्रहणाद्रूपादीनामप्राप्तानामग्रहणमिति[1] प्राप्तम्[2] ।

प्राप्याप्राप्यकारित्वमिति चेदावरणानुपपत्तेर्विषयमात्रस्य ग्रहणम् । अथापि मन्येत प्राप्ताः स्पर्शादयस्त्वचा गृह्यन्ते रूपाणि त्वप्राप्तानीति एवं सति नास्त्यावरणम्, आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहणं व्यवहितस्य चाव्यवहितस्य चेति दूरान्तिकानुविधानं रूपोपलब्ध्यनुपलब्ध्योर्न स्यादप्राप्तं त्वचा गृह्यते[3] रूपमिति। दूरे रूपस्याग्रहणमन्तिके च ग्रहणमित्येतन्न स्यादिति ॥ ५३ ॥

---

वृ०—उत्तरयति—युगपदेकदाऽर्थानां गन्धरूपादीनामनुपलब्धेर्न त्वगेवैकमिन्द्रियम् । अन्यथा तस्य व्यापकत्वाचाक्षुषादिकाले घ्राणजादिकमपि स्यादिति भावः ॥ ५३ ॥

---

* किं च त्वचः करणस्यैकत्वे तस्य किं प्राप्यकारित्वमाहोस्विदप्राप्यकारित्वम् । नाऽऽद्यः । त्वचाऽप्राप्तानां रूपाणामग्रहणप्रसङ्गात् । नान्त्यः । दूरस्थद्रव्यगतस्पर्शस्यापि ग्रहणप्रसङ्गात् । एकस्यैव प्राप्यकारित्वाप्राप्यकारित्वे तु सुतरां दुर्वचे । तस्मान्नैकमिन्द्रियमिति भावः । + साहचर्यं नाम यस्यैकं विषयग्रहणं तस्य द्वितीयमपीति । एवं चान्धबधिराद्यभावप्रसङ्गः । × अस्य क्वचित्सूत्रत्वेनोल्लेखो दृश्यते ।

---

१ ङ. °दीनां प्रा° । २ ख. ग. घ. ङ °म् । सामिन्द्रा । ३ ख. म. घ. ङ. °ति ॥ ५३ ॥ प्र°

भा०–एकत्वप्रतिषेधाश्च* नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते—

इन्द्रियार्थपञ्च+त्वात् ॥ ५४ ॥

अर्थः प्रयोजनं तत्पञ्चविधमिन्द्रियाणाम् । स्पर्शनेनेन्द्रियेण स्पर्शग्रहणे सति न तेनैव रूपं गृह्यत इति रूपग्रहणप्रयोजनं चक्षुरनुमीयते । स्पर्शरूपग्रहणे च ताभ्यामेव गन्धो न गृह्यत इति गन्धग्रहणप्रयोजनं घ्राणमनुमीयते । त्रयाणां ग्रहणे न तैरेव रसो गृह्यत इति रसग्रहणप्रयोजनं रसनमनुमीयते । न चतुर्णां ग्रहणे तैरेव शब्दः श्रूयत इति शब्दग्रहणप्रयोजनं श्रोत्रमनुमीयते । एवमिन्द्रियप्रयोजनस्यानितरेतरसाधनसाध्यत्वात्पञ्चैवेन्द्रियाणि ॥ ५४ ॥

न तदर्थबहुत्वात् ॥ ५५ ॥

भा–०न खल्विन्द्रियार्थपञ्चत्वात्पञ्चेन्द्रियाणीति सिध्यति । कस्मात् । तेषामर्थानां बहुत्वात् । बहवः खल्विम इन्द्रियार्थाः—स्पर्शास्तावच्छीतोष्णानुष्णशीता इति, रूपाणि शुक्लहरितादीनि, गन्धा इष्टानिष्टोपेक्षणीयाः, रसाः कटुकादयः, शब्दा वर्णात्मानो ध्वनिमात्राश्च भिन्नाः । तद्यस्येन्द्रियार्थपञ्चत्वात्पञ्चेन्द्रियाणि तस्येन्द्रियार्थबहुत्वाद्बहूनीन्द्रियाणि प्रसज्यन्त इति ॥ ५५ ॥

---

वृ०–इन्द्रियाणां नानात्वे कार्यभेदमानमाह—इन्द्रियार्थानामिन्द्रियग्राह्याणां रूपादीनां पञ्चत्वात्पञ्चविधत्वात् । रूपादीनां हि चक्षुराद्येकैकेन्द्रियमात्रग्राह्यत्वाद्वैलक्षण्यम् । तच्चैकेन्द्रियपक्षे न संभवति । अन्धादीनां रूपाद्युपलब्धिप्रसङ्गश्चेति भावः ॥ ५४ ॥

वृ०–शङ्कते—इन्द्रियार्थानां नीलपीतादीनां बहुत्वादिन्द्रियाणां बहुतरत्वप्रसङ्गादिन्द्रियार्थपञ्चत्वादिन्द्रियभेदो न युक्तः ॥ ५५ ॥

---

* एकत्वप्रतिषेधमात्रेणार्थान्नानार्थत्वे सिद्धेऽपि नानात्वसिद्धये वक्ष्यमाणोऽपि हेतुरुच्यत इत्यर्थः । +ननु विषयगतं वा प्रयोजनगतं पञ्चत्वं व्यधिकरणत्वात्कथमिन्द्रियगतपञ्चत्वसाधकमिति चेत् । अत्रोच्यते—यथा लोक एकस्य कर्तुरेकेन करणेनैकस्यां क्रियायां पर्यवसितायां क्रियान्तरनिष्पत्तये करणान्तरापेक्षा तथा कर्तुरात्मनो नानाविषयाणां रूपादीनां मध्य एकेन करणेनैकस्य विषयीकरणेऽपि अन्यविषयकज्ञानक्रियानिष्पत्तये करणान्तरापेक्षणादिन्द्रियपञ्चत्वं सिध्यतीति भावः ।

**गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ५६ ॥**

भा०—गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्थानां गन्धादीनां यानि गन्धादिग्रहणानि तान्यसमानसाधनसाध्यत्वाद्ग्राहकान्तराणि न प्रयोजयन्ति। अर्थसमूहोऽनुमानमुक्तो नार्थैकदेशः। अर्थैकदेशं चाऽऽश्रित्य विषयपञ्चत्वमात्रं भवान्प्रतिषेधति। तस्मादयुक्तोऽयं प्रतिषेध इति। कथं पुनर्गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था गन्धादय इति। स्पर्शः खल्वयं त्रिविधः शीत उष्णोऽनुष्णशीतश्च स्पर्शत्वेन स्वसामान्येन संगृहीतः। गृह्यमाणे च शीतस्पर्शे नोष्णस्यानुष्णशीतस्य वा ग्रहणं ग्राहकान्तरं प्रयोजयति। स्पर्शभेदानामेकसाधनसाध्यत्वात्। येनैव शीतस्पर्शो गृह्यते तेनैवेतरावपीति। एवं गन्धत्वेन गन्धानां रूपत्वेन रूपाणां रसत्वेन रसानां शब्दत्वेन शब्दानामिति। गन्धादिग्रहणानि पुनरसमानसाधनसाध्यत्वाद्ग्राहकान्तराणां प्रयोजकानि। तस्मादुपपन्नमिन्द्रियार्थपञ्चत्वात्पञ्चेन्द्रियाणीति ॥ ५६ ॥

भा०—यदि सामान्यं संग्राहकं प्राप्तमिन्द्रियाणाम्—

**विषयत्वाव्यतिरेकादेकत्वम् ॥ ५७ ॥**

विषयत्वेन हि सामान्येन गन्धादयः संगृहीता इति ॥ ५७ ॥

**न बुद्धिलक्षणाधिष्ठानगत्याकृति-जातिपञ्चत्वेभ्यः ॥ ५८ ॥**

भा०-न खलु विषयत्वेन सामान्येन कृतव्यवस्था विषया ग्राहका-

---

वृ०—समाधत्ते—उक्तप्रतिषेधो न, गन्धादीनां सौरभादीनां गन्धत्वाद्यव्यतिरेकाद्गन्धत्वादिसत्त्वात्। तथा च विभाजकगन्धत्वावच्छिन्नग्राहकत्वमभिमतं न त्ववान्तरधर्मावच्छिन्नग्राहकत्वमिति भावः ॥ ५६ ॥

वृ०—गन्धत्वादिना सुरभ्यादीनामैक्यं तदा विषयत्वेन गन्धरसादीनामप्यैक्यादिन्द्रियैक्यं स्यादिति शङ्कते—विषयत्वाव्यतिरेकाद्विषयत्वेनैक्यात् ॥५७॥

वृ०—उत्तरयति—इन्द्रियाणामैक्यं न। हेतुमाह—बुद्ध्यादि। बुद्धेश्चाक्षुषादेर्यल्ल-

---

* अर्थानामेकजातीयानां विषयाणां समूहोऽनुमानमनुमितिसाधनं न तु प्रत्येकं विषया इत्यर्थः।

---

१ क. ङ. च °णि न प्र°।

न्तरनिरपेक्षा एकसाधनग्राह्या अनुमीयन्ते । अनुमीयन्ते च पञ्च गन्धादयो गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था इन्द्रियान्तरग्राह्यास्तस्मादसंबद्धमेतत् । अयमंत्र चार्थोऽनूद्यते—बुद्धिलक्षणपञ्चत्वादिति । बुद्धय एव लक्षणानि विषयग्रहणलिङ्गत्वादिन्द्रियाणाम् । तदेतत् 'इन्द्रियार्थपञ्चत्वात्' ( ३ । १ । ५४ ) इत्येतस्मिन्सूत्रे कृतभाष्यमिति । तस्माद्बुद्धिलक्षणपञ्चत्वात्पञ्चेन्द्रियाणि । अधिष्ठानान्यपि खलु पञ्चेन्द्रियाणाम्—सर्वशरीराधिष्ठानं स्पर्शनं स्पर्शग्रहणलिङ्गम्, कृष्णसाराधिष्ठानं चक्षुर्बहिर्निःसृतं रूपग्रहणलिङ्गम्, नासाधिष्ठानं घ्राणम्, जिह्वाधिष्ठानं रसनम्, कर्णच्छिद्राधिष्ठानं श्रोत्रम्, गन्धरूपस्पर्शशब्दग्रहणलिङ्गत्वादिति । गतिभेदादपीन्द्रियभेदः । कृष्णसारोपनिबद्धं चक्षुर्बहिर्निःसृत्य रूपाधिकरणानि द्रव्याणि प्राप्नोति । स्पर्शनादीनि त्विन्द्रियाणि विषया एवाऽऽश्रयोपसर्पणात्प्रत्यासीदन्ति । संतानवृत्त्या शब्दस्य श्रोत्रप्रत्यासत्तिरिति । आकृतिः खलु परिमाणमियत्ता । सा पञ्चधा । स्वस्थानमात्राणि घ्राणरसनस्पर्शनानि विषयग्रहणेनानुमेयानि । चक्षुः कृष्णसाराश्रयं बहिर्निःसृतं विषयव्यापि । श्रोत्रं नान्यदाकाशात् । तच्च विभु शब्दमात्रानुभवानुमेयं पुरुषसंस्कारोपग्रहाच्चाधिष्ठाननियमेन शब्दस्य व्यञ्जक* मिति । जातिरिति योनिं+ प्रचक्षते । पञ्च खल्विन्द्रिययोनयः

---

क्षणं चाक्षुषत्वादि तत्पञ्चत्वेन तदवच्छिन्नकरणानां पञ्चत्वम् । एवमधिष्ठानं रूपादिविषयस्तत्पञ्चत्वात् । गतिर्दूरादौ गमनम् । इदं चक्षुरधिकृत्य । यद्वा गतिः प्रकारस्तथाच प्रकाराणां पञ्चत्वात् । चक्षुर्हि गत्वा गृह्णाति, त्वग्देहावच्छेदेन,

---

* अत्रेदं बोध्यम्—धर्माधर्मसहितचेष्टानिष्टोपेक्षणीयशब्दसाधनभूतया कर्णशष्कुल्या य आकाशस्य संबन्धस्तत्संबन्धानुविधाय्याकाशं न विवरान्तरेणाऽऽस्यादिना शब्दमुपलक्षयति नान्यत्रेति । तदुपकारप्रतीकारभेदाद्वोपक्रियते चेति । न पुनराकाशनित्यत्वादुपक्रियते न प्रतिक्रियत इति । प्रकृष्टाप्रकृष्टभेदोऽप्यत एवेति । + इन्द्रियाणां येनिर्नाम तादात्म्यम् । नहि तत्कार्यत्वमाकाशे संभवति । नित्यत्वात् ।

पृथिव्यादीनि भूतानि । तस्मात्प्रकृतिपञ्चत्वादपि पञ्चेन्द्रियाणीति सिद्धम् ॥ ५८ ॥

भा०—कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति—

भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ५९ ॥

दृष्टो हि वाय्वादीनां भूतानां गुणविशेषाभिव्यक्तिनियमः । वायुः स्पर्शव्यञ्जकः । आपो रसव्यञ्जिकाः । तेजो रूपव्यञ्जकम् । पार्थिवं किंचिद्द्रव्यं कस्यचिद्द्रव्यस्य गन्धव्यञ्जकम् । अस्ति चायमिन्द्रियाणां भूतगुणविशेषोपलब्धिनियमः । तेन भूतगुणविशेषोपलब्धेर्मन्यामहे भूतप्रकृतीनीन्द्रियाणि ना*व्यक्तप्रकृतीनीति ॥ ५९ ॥

इतीन्द्रियनानात्वप्रकरणम् ॥ ८ ॥

—.—:—

श्रोत्रं कर्णावच्छेदेनेत्यादिप्रकारभेदात् । आकृतिर्गोलकानां संस्थानविशेषः । जातिः पृथिवीत्वादि । वस्तुतो जातिर्धर्मस्तेन श्रोत्रसंग्रहः ॥ ५८ ॥

वृ०—घ्राणादेः पृथिवीत्वादिसत्त्वे मानमाह—भूतानां पृथिव्यादीनां ये गुणविशेषा गन्धादयस्तदुपलम्भकत्वात् । कुङ्कुमगन्धाभिव्यञ्जकघृतादिदृष्टान्तेन पृथिवीत्वादिसाधनमिति भावः ॥ ५९ ॥

इतीन्द्रियनानात्वप्रकरणम् ॥ ८ ॥

———

* तथाहि—घ्राणेन्द्रियं पार्थिवं रूपादीनां मध्ये नियमेन गन्धस्यैव व्यञ्जकत्वात्, बाह्यपार्थिववत् । यथा हि मृगमदादिगन्धव्यञ्जकाः पार्थिवाः कुङ्कुमादयः । न चाऽऽतपेनानेकान्त इति वाच्यम् । नह्यातपो गन्धव्यञ्जकः, अपि तु जलाभिभूतो द्रव्याणां गन्धो नोपलभ्यते केवलं जलमातपोऽपनयति न तु द्रव्यस्य गन्धमभिव्यनक्ति तस्मान्नानेकान्तः । एवं रसनमिन्द्रियमाप्यं गन्धादिषु नियमेन रसव्यञ्जकत्वात्, दन्तान्तरस्यन्दमानोदबिन्दुवत् । न खलु विस्यन्दास्यो मोदकादिरसमनुभवति । एवं तैजसं चक्षुर्गन्धादीनां मध्ये नियमेन रूपव्यञ्जकत्वात्प्रदीपादिवत् । एवं वायवीयं त्वगिन्द्रियं गन्धादीनां मध्ये नियमेन स्पर्शव्यञ्जकत्वात्स्वेदोदबिन्दुशीतस्पर्शव्यञ्जकव्यजनवातवदिति ।

भा०—गन्धादयः पृथिव्यादिगुणा इत्युपदिष्टम् । उद्देशश्च पृथिव्यादीनामेकगुणत्वे चानेकगुणत्वे समान इत्यत आह—

गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्या अप्तेजोवायूनां पूर्वं पूर्वमपोह्याऽऽकाशस्यो*त्तरः ॥ ६० ॥

स्पर्शपर्यन्तानामिति विभक्तिपरिणामः । आकाशस्योत्तरः शब्दः स्पर्शपर्यन्तेभ्य इति । कथं तरब्निर्देशः[1] । स्व+तन्त्रविनियोगसामर्थ्यात् । तेनोत्तरशब्दस्य परार्थाभिधानं विज्ञायते । उद्देशसूत्रे हि स्पर्शपर्यन्तेभ्यः परः शब्द इति । तन्त्रं वा स्पर्शस्य विवक्षितत्वात् । स्पर्शपर्यन्तेषु नियुक्तेषु योऽन्यस्तदुत्तरः शब्द इति ॥ ६० ॥

न सर्वगुणानुपलब्धेः ॥ ६१ ॥

भा०—नायं गुणनियोगः साधुः । कस्मात् । यस्य भूतस्य ये गुणा न ते तदात्मकेनेन्द्रियेण सर्व उपलभ्यन्ते । पार्थिवेन हि घ्राणेन स्पर्शपर्यन्ता न गृह्यन्ते, गन्ध एवैको गृह्यते । एवं शेषेष्वपीति ॥ ६१ ॥

---

वृ०—क्रमप्राप्तार्थपरीक्षणाय सिद्धान्तसूत्रम् । स्पर्शपर्यन्तेषु ( न्तानाम् ) मध्ये पूर्वपूर्वं त्यक्त्वाऽप्तेजोवायूनां गुणा ज्ञातव्याः । उत्तरः शब्द आकाशस्य गुणः । तथा च स्पर्शान्ताः पृथिव्याः । रसरूपस्पर्शा जलस्य । रूपस्पर्शौ तेजसः । स्पर्शो वायोः । शब्द आकाशस्य ॥ ६० ॥

वृ०—आक्षिपति—उक्तो गुणनियमो न युक्तः । पृथिव्यादेर्गुणत्वाभिमतानां सर्वेषां घ्राणादिग्राह्यत्वाभावान्न पार्थिवत्वादिकम् । घ्राणेन पृथिव्या रसाद्यग्रहणात् । बहिरिन्द्रियाणां स्वप्रकृतिवृत्तियोग्याशेषगुणग्राहकत्वनियमो भज्येतेति भावः ॥ ६१ ॥

---

* वार्तिककारमते सूत्रद्वयमेतत् । + स्वतन्त्रस्यावधारणीयानपेक्षस्य विनियोगो बोधार्थं व्युत्पन्नैः प्रयोगस्तत्सामर्थ्याच्छक्तेरित्यर्थः ।

---

१ ङ. °थं तर्हि त° ।

भा०—कथं तर्हीमे गुणा विनियोक्तव्या[1] इति—

ऐकैकश्येनोत्तरोत्तरगुणसद्भावादु-

त्तरोत्तराणां तदुपलब्धिः ॥ ६२ ॥

गन्धादीनामेकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः। अतस्तदनुपलब्धिस्तेषां तयोस्तस्य चानुपलब्धिः। घ्राणेन रस-रूपस्पर्शानां रसनेन रूपस्पर्शयोश्चक्षुषा स्पर्शस्येति।

कथं तर्ह्यनेकगुणानि भूतानि गृह्यन्त इति—

संसर्गाच्चा*नेकगुणग्रहणम्[2]। अबादिसंसर्गाच्च पृथिव्यां रसादयो गृह्यन्ते, एवं शेषेष्वपीति। नियमस्तर्हि न प्राप्नोति संसर्गस्यानियमाच्चतुर्गुणा पृथिवी त्रिगुणा आपो द्विगुणं तेज एकगुणो वायुरिति ॥ ६२ ॥

भा०—नियमश्चोपपद्यते। कथम्—

विष्टं ह्यपरं परेण ॥ ६३ ॥

भा०—पृथिव्यादीनां पूर्वं पूर्वमुत्तरेणोत्तरेण विष्टमतः संसर्गनियम इति। तच्चैतद्भूतसृष्टौ+ वेदितव्यं नैतर्हीति ॥ ६३ ॥

न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६४ ॥

भा०—नेति त्रिसूत्रीं प्रत्याचष्टे। कस्मात्। पार्थिवस्य द्रव्यस्याऽऽ-

---

वृ०—इत्थं च पृथिव्यादावुपलभ्यमानानां रसादीनां का गतिरित्यत्र स्वमतमाह—उत्तरोत्तराणामबादीनामेकैकश्येनैकैकक्रमेण तदुत्तरगुणसद्भावाद्रसादिगुणसद्भावात्तदनुपलब्धिस्तेषां रसादीनां घ्राणादीनामुपलब्धिरित्यर्थः ॥ ६२ ॥

वृ०—तर्हि कथं पृथिव्यादौ रसादिग्रहणं तत्राऽऽह—अपरं पृथिव्यादि परेण जलादिना हि यस्मात्, विष्टं संबद्धम्। तथा च पृथिव्याद्यवच्छिन्नजलादिना रसनासंयोगाद्रसादिग्रह इति भावः ॥ ६३ ॥

वृ०—सिद्धान्तसूत्रम्। उक्तो गुणनियमो न युक्तः। कुतः। पार्थिवस्या-

---

* अस्य क्वचित्सूत्रत्वेनोल्लेखो दृश्यते। + भूतसृष्टिप्रतिपादकेषु पुराणेष्वित्यर्थः। नैतर्हीति। नेदानीमननुभवादित्यर्थः।

---

१ क. च. 'ति—एकैकस्यैवोत°। २ ख. ग. घ. 'कग्र°।

प्यस्य च प्रत्यक्षत्वात् । महत्त्वानेकद्रव्यत्वाद्रूपाच्चोपलब्धिरिति तैजसमेव द्रव्यं प्रत्यक्षं* स्यान्न पार्थिवमाप्यं वा रूपाभावात् । तैजसवत्तु पार्थिवाप्ययोः प्रत्यक्षत्वान्न संसर्गादनेकगुणग्रहणं भूतानामिति । भूतान्तररूपकृतं च पार्थिवाप्ययोः प्रत्यक्षत्वं ब्रुवतः प्रत्यक्षो वायुः प्रसज्यते, नियमे वा कारणमुच्यतामिति । रसयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् । पार्थिवो रसः षड्विधः । आप्यो मधुर एव । न चैतत्संसर्गाद्भवितुमर्हति । रूपयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् । तैजसरूपानुगृहीतयोः संसर्गे हि व्यञ्जकमेव रूपं न व्यङ्ग्यमस्तीति । एकानेकविधत्वे च पार्थिवाप्ययोः प्रत्यक्षत्वाद्रूपयोः। पार्थिवं हरितलोहितपीताद्यनेकं-विधं रूपम् । आप्यं तु शुक्लमप्रकाशकम् । न चैतदेकगुणानां संसर्गे सत्युपलभ्यत इति । उदाहरणमात्रं चैतत् । अतः परं प्रपञ्चः । स्पर्शयोर्वा पार्थिवतैजसयोः प्रत्यक्षत्वात् । पार्थिवोऽ-नुष्णशीतः स्पर्श उष्णस्तैजसः प्रत्यक्षः । न चैतदेकगुणानामनु-ष्णशीतस्पर्शेन वायुना संसर्गेणोपपद्यत इति । अथवा पार्थिवा-प्ययोर्द्रव्ययोर्व्यवस्थितगुणयोः प्रत्यक्षत्वात् । चतुर्गुणं पार्थिवं द्रव्यं त्रिगुणमाप्यं प्रत्यक्षं तेन तत्कारणमनुमीयते तथाभूतमिति। तस्य कार्यं लिङ्गं कारणभावाद्धि कार्यभाव इति । एवं तैजसवायव्ययोर्द्रव्ययोः प्रत्यक्षत्वाद्गुणव्यवस्थायास्तत्कारणे द्रव्ये व्यवस्थानुमानमिति । दृष्टश्च विवेकः पार्थिवाप्ययोः प्रत्यक्षत्वात्। पार्थिवं द्रव्यमबादिभिर्वियुक्तं प्रत्यक्षतो गृह्यते।आप्यं च पराभ्यां तैजसं च वायुना । न चैकैकगुणं गृह्यत इति। निरनुमानं तु विष्टं

---

ऽऽप्यस्य च द्रव्यस्य प्रत्यक्षत्वाद्रूपस्पर्शसिद्धेस्तस्य रूपस्पर्शशून्यत्वे चक्षुषा

---

* त्रिविधं द्रव्यं चाक्षुषमिष्यते पार्थिवमाप्यं तैजसं च । तत्र रूपवत्त्वेन तैज-समेव चाक्षुषं स्यान्नेतरदरूपत्वात् । नहि रूपिद्रव्यसंसर्गाच्चाक्षुषत्वमरूपयोरपि पार्थिवा-प्ययोरिति युक्तम् । नभोनभस्वतोरपि चाक्षुषत्वप्रसङ्गात् । अस्ति हि तयोरपि रूपवत्ते-जसा संयोगः ।

---

१ पु. इ. °वाद्विका° ।

ह्यपरं परेणेत्येतदिति । नात्र लिङ्गमनुमापकं गृह्यत इति । येनैतदेवं प्रतिपद्येमहि । यच्चोक्तं विष्टं ह्यपरं परेणेति भूतसृष्टौ वेदितव्यं न सांप्रतमिति, नियमकारणाभावादयुक्तम् । दृष्टं च सांप्रतमपरं परेण विसृष्टमिति वायुना च विष्टं तेज इति । विष्टत्वं संयोगः । स च द्वयोः * समानः । वायुना च विष्टत्वात्स्पर्शवत्तेजो न तु तेजसा विष्टत्वाद्रूपवान्वायुरिति नियमकारणं नास्तीति । दृष्टं च तैजसेन स्पर्शेन वायव्यस्पर्शस्याभिभवादग्रहणमिति । न च तेनैव तस्याभिभव इति ॥ ६४ ॥

भा०—तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य ' न सर्वगुणानुपलब्धेः ' ( ३ । १ । ६१ ) इति चोदितं समाधीयते—

**पूर्वपूर्वगुणोत्कर्षात्तत्तत्प्रधानम् ॥ ६५ ॥**

तस्मान्न सर्वगुणोपलब्धिः । घ्राणादीनां पूर्वं पूर्वं गन्धादेर्गुणस्योत्कर्षात्तत्तत्प्रधानम् । का प्रधानता । विषयग्राहकत्वम् । को गुणोत्कर्षः । अभिव्यक्तौ समर्थत्वम् । यथा बाह्यानां पार्थिवाप्यतैजसानां द्रव्याणां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणव्यञ्जकत्वम् । गन्धरसरूपोत्कर्षात्तु यथाक्रमं गन्धरसरूपव्यञ्जकत्वम । एवं घ्राणरसनचक्षुषां चतुर्गुणत्रिगुणाद्विगुणानां न सर्वगुणग्राहकत्वम् । गन्धरसरूपोत्कर्षात्तु यथाक्रमं गन्धरसरूपग्रा-

---

त्वचा च ग्रहणं न स्यात् । रूपादेश्च क्वचित्साक्षात्संबन्धेन क्वचिच्च परम्परया हेतुत्वे गौरवमिति भावः ॥ ६४ ॥

वृ०—रसादेः पृथिव्यादिगुणत्वे घ्राणादीनामपि तद्ग्रहणप्रसङ्ग इत्यत्र नियममाह—पूर्वपूर्वं घ्राणादि तत्तत्प्रधानं गन्धादिप्रधानम् । प्राधान्ये बीजमाह—

---

* अन्यगुणो यदन्यत्रोपलभ्यते तत्किं संयोगादाहोस्विद्व्याप्तेः । यदि व्याप्तेर्नायोगोलके वह्निसपृक्ते वह्निगुणा गृह्येरन्, तयोर्व्याप्यव्यापकभावाभावात् । तस्मादन्यसंयोगो हेतुः । स च द्वयोरविशिष्ट इति तेजसा संयुक्तस्य वायोरपि रूपवत्त्वेन चाक्षुषत्वप्रसङ्ग इति बोध्यम् ।

हकत्वम् । तस्माद् घ्राणादिभिर्न सर्वेषां गुणानामुपलब्धिः*रिति ।
यस्तु प्रतिजानीते गन्धगुणत्वाद् घ्राणं गन्धस्य ग्राहकमेवं रसना-
दिष्वपीति । तस्य यथागुणयोगं घ्राणादिभिर्गुणग्रहणं प्रसज्यत
इति ॥ ६५ ॥

भा०—किंकृतं पुनर्व्यवस्थानं किंचित्पार्थिवमिन्द्रियं न सर्वाणि
कानिचिदाप्यतैजसवायव्यानीन्द्रियाणि न सर्वाणीति—

**तद्व्यवस्थानं तु भूयस्त्वात् ॥ ६६ ॥**

अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुषसं-
स्कारकारितो भूयस्त्वम् । दृष्टो हि प्रकर्षे भूयस्त्वशब्दः । प्रकृष्टो
यथा विषयो भूयानित्युच्यते । यथा पृथगर्थक्रियासमर्थानि
पुरुषसंस्कारवशाद्विषौषधिमणिप्रभृतीनि द्रव्याणि निर्वर्त्यन्ते न
सर्वे सर्वार्थम् । एवं पृथग्विषयग्रहणसमर्थानि घ्राणादीनि निर्व-
र्त्यन्ते न सर्वविषयग्रहणसमर्थानीति ॥ ६६ ॥

भा०—स्वगुणान्नोपलभन्त इन्द्रियाणि । कस्मादिति चेत्—

**सगुणानामिन्द्रियभावात् ॥ ६७ ॥**

स्वान्गन्धादीन्नोपलभन्ते घ्राणादीनि । केन प्रकारेण नेति
चेत् । स्वगुणैः सह घ्राणादीनामिन्द्रियभावात्[1] । घ्राणं स्वेन
गन्धेन समानार्थकारिणा सह बाह्यं गन्धं गृह्णाति । तस्य स्वग-
न्धग्रहणं सहकारिवैकल्यान्न भवति । एवं शेषाणामपि ॥ ६७ ॥

---

गुणोत्कर्षाद्गुणस्य गन्धादेरुत्कर्षात्तद्व्यवस्थापकत्वात् । तथा च गन्धादिषु
( दीनां ) मध्ये स्वव्यवस्थापकगुणस्यैव ग्राहकत्वं घ्राणादीनामिति ॥ ६५ ॥

वृ०—ननु पृथिव्यन्तरस्यापि गन्धप्राधान्यात्किमिन्द्रियं किमनिन्द्रियमित्य-
त्राऽऽह—भूयस्त्वाज्जलाद्यविशिष्टपृथिव्याद्यारब्धत्वात् । तद्व्यवस्थानं घ्राणा-
दीन्द्रियत्वव्यवस्थितिः ॥ ६६ ॥

वृ०—घ्राणादीनां गन्धादिगुणवत्त्वे मानमाह—सगुणानां गन्धादिविशि-
ष्टानां घ्राणादीनामिन्द्रियभावाद्गन्धादिसाक्षात्कारकारणत्वात्कुङ्कुमगन्धादिव्य-
ञ्जकघृतादौ तथैव दर्शनात् ॥ ६७ ॥

---

* सर्वेषां समवायाविशेषेऽपि गन्धस्यैव घ्राण उत्कर्ष इति गन्धमेव गृह्णाति । एवं च
न गन्धवत्त्वं गन्धग्रहणे प्रयोजकम्, अपि तु गन्धस्योत्कर्ष इति सिद्धम् ।

---

१ ग. °त् । स्वे° ।

भा०—यदि पुनर्गन्धः सहकारी च स्याद्घ्राणस्य ग्राह्य[1]स्येत्यत आह—

तेनैव तस्याग्रहणाच्च ॥ ६८ ॥

न गुणोपलब्धिरिन्द्रियाणाम्। यो ब्रूते यथा बाह्यं द्रव्यं चक्षुषा गृह्यते तथा तेनैव चक्षुषा तदेव चक्षुर्गृह्यतामिति तादृगिदम्। तुल्यो ह्युभयत्र प्रतिपत्तिहेत्वभाव इति ॥ ६८ ॥

न शब्दगुणोपलब्धेः ॥ ६९ ॥

भा०—स्वगुणान्नोपलभन्त इन्द्रियाणीत्येतन्न भवति। उपलभ्यते हि स्वगुणः शब्दः श्रोत्रेणेति ॥ ६९ ॥

तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७० ॥

भा०—न शब्देन गुणेन सगुणमाकाशमिन्द्रियं भवति। न शब्दः शब्दस्य व्यञ्जकः। न च घ्राणादीनां स्वगुणग्रहणं प्रत्यक्षम्। नाप्यनुमीयते। अनुमीयते तु श्रोत्रेणाऽऽकाशेन शब्दस्य ग्रहणं शब्दगुणत्वं चाऽऽकाशस्येति। परिशेषश्चानुमानं वेदितव्यम्। आत्मा तावच्छ्रोता न करणम्। मनसः श्रोत्रत्वे बधिरत्वाभावः। पृथिव्यादीनां घ्राणादिभावे सामर्थ्यं श्रोत्रभावे चासामर्थ्यम्। अस्ति चेदं श्रोत्रमाकाशं च शिष्यते परिशेषादाका*शं श्रोत्र-

---

वृ०—इत्थं च गन्धादिसिद्धावप्रत्यक्षत्वादनुद्भूतत्वकल्पनमित्याशयेनाऽऽह—तेनेन्द्रियेण तस्य सगुणस्येन्द्रियस्य ग्रहणादनुद्भूतत्वकल्पनमिति ॥ ६८ ॥

वृ०—नन्विन्द्रियगुणानामप्रत्यक्षत्वनियमो नेत्याशङ्कते—उक्तनियमो न युक्तः शब्दस्य श्रोत्रगुणस्योपलब्धेः ॥ ६९ ॥

वृ०—समाधत्ते—द्रव्यगुणानां रूपशब्दादीनां परस्परं वैधर्म्याच्छब्दस्योप-

---

* तथाहि—मनसः श्रोत्रत्वे बधिराद्यभावः प्राप्नोति, मनसः सर्वविषयत्वेन सर्वविषयस्य श्रोत्रस्य कल्पनात्। पृथिव्याद्यपि न श्रोत्रम्। घ्राणादिभावे विनियोगात्। त्वचः श्रोत्रत्वे बधिराभावः। दिक्कालयोः श्रोत्रत्वे च शब्दस्यान्यगुणत्वादग्रहणप्रसङ्गः। शब्दस्य तद्गुणत्वमेवेति चेन्नास्मि विवादः। यस्य शब्दो गुणस्तदाकाशम्। भवता संज्ञामात्रं भिद्यते तौ दिक्कालाविति। भवतु वा शब्दस्य दिक्कालगुणत्वेनाऽऽकाशप्रत्याख्यानम्। नहि शब्दमन्तरेणाऽऽकाशास्तित्वे प्रमाणमस्ति यथा दिक्कालयोः परापरादि लिङ्गमिति।

---

१ क. ख. ग. घ. च. °ह्यश्चेत्य°।

मिति ॥ ७० ॥

इत्यर्थपरीक्षाप्रकरणम् ॥ ९ ॥

---

इति वात्स्यायनीये न्यायभाष्ये तृतीयस्याध्याय-
स्याऽऽद्यमाह्निकम् ॥ १ ॥

---

भा०—परीक्षितानीन्द्रियाण्यर्थाश्च बुद्धेरिदानीं परीक्षाक्रमः सा किम-
नित्या नित्या वेति । कुतः संशयः—

**कर्माकाशसाधर्म्यात्संशयः ॥ १ ॥**

अस्पर्शवत्त्वं ताभ्यां समानो धर्म उपलभ्यते । बुद्धौ विशेष-
श्चोपजनापायधर्मवत्त्वम् । विपर्ययश्च यथास्वमनित्यनित्ययो-
स्तस्यां बुद्धौ नोपलभ्यते तेन संशय इति ॥ १ ॥

भा०—अनुपपन्नः खल्वयं संशयः । सर्वशरीरिणां हि प्रत्यात्मवेदनी-
याऽनित्या बुद्धिः सुखादिवत् । भवति च संवित्तिर्ज्ञास्यामि जानामि

---

लब्धिर्न । चक्षूरूपादीनां शब्दाश्रयस्य लाघवेनैक्यसिद्धेरिति भावः ॥ ७० ॥

इत्यर्थपरीक्षाप्रकरणम् ॥ ९ ॥

---

इति श्रीविश्वनाथभट्टाचार्यकृतन्यायसूत्रवृत्तौ तृतीयाध्यायस्याऽऽद्यमा-
ह्निकमात्मादिप्रमेयचतुष्कपरीक्षणं नाम ॥ १ ॥

---

वृ०—अथ क्रमप्राप्ततया बुद्धेर्मनसश्च परीक्षा सप्तभिः प्रकरणैस्तत्परीक्षैव
चाऽऽह्निकार्थः । परे तु—शरीरावच्छेदव्याप्यभोगानुकूलसंबन्धवत्परीक्षा, शरी-
रान्तर्वर्तिप्रमेयपरीक्षैवाऽऽह्निकार्थ इति । तदसत् । इन्द्रियपरीक्षायामतिव्याप्तेः ।
तत्र च बुद्धिपरीक्षा पञ्चभिः प्रकरणैः । तत्राऽऽदौ बुद्ध्यनित्यताप्रकरणम् ।
तत्र संशयदर्शनाय सूत्रम् । कर्मण आकाशस्य साधर्म्यान्निःस्पर्शत्वाद्बुद्धिपदार्थे
नित्यत्वसंशयः । बुद्धिपदं नित्यशक्तं न वेति संशयः पर्यवसन्नः ॥ १ ॥

वृ०—तत्र बुद्धिनित्यत्वं सांख्यः साधयति—बुद्धिर्नित्येति शेषः । योऽहं
घटमद्राक्षं सोऽहं घटं स्पृशामीति प्रत्यभिज्ञानमेकं वृत्तिमन्तं विषयी करोति । न

अज्ञासिषमिति । न चोपजनापायावन्तरेण त्रैकाल्यव्यक्तिः । ततश्च त्रैकाल्यव्यक्तेरनित्या बुद्धिरित्येतत्सिद्धम् । प्रमाणसिद्धं चेदं शास्त्रेऽप्युक्तम्—'इन्द्रियार्थसंनिकर्षोत्पन्नम्' (१।१।४) 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' ( १ । १ । १६) इत्येवमादि । तस्मात्संशयप्रक्रियानुपपत्तिरिति । दृष्टि*प्रवादोपालम्भार्थं तु प्रकरणम् । एवं हि पश्यन्तः प्रवदन्ति सांख्याः पुरुषस्यान्तःकरणभूता नित्या बुद्धिरिति । साधनं च प्रचक्षते—

विषयप्रत्यभि+ज्ञानात् ॥ २ ॥

किं पुनरिदं प्रत्यभिज्ञानम् । यं पूर्वमज्ञासिषमर्थं तमिमं जानामीति ज्ञानयोः समानेऽर्थे प्रतिसंधिज्ञानं प्रत्यभिज्ञानम् । एतच्चावस्थिताया बुद्धेरुपपन्नम् । नानात्वे तु बुद्धिभेदेषूत्पन्नापवर्गिषु प्रत्यभिज्ञानानुपपत्तिः, नान्यज्ञातमन्यः प्रत्यभिजानातीति ॥ २ ॥

साध्यसमत्वा×दहेतुः ॥ ३ ॥

भा०—यथा खलु नित्यत्वं बुद्धेः साध्यमेवं प्रत्यभिज्ञानमपीति । किं

---

चाऽऽत्मा तथा । तस्य जन्यधर्मानधिकरणस्य कूटस्थत्वात् । तस्माद्वृत्तिमती बुद्धिरेव । वृत्तिस्तु तस्याः परिणामः । बुद्धेरप्याविर्भावतिरोभावावेव न तूत्पादविनाशाविति ॥ २ ॥

वृ०—परिहरति—साध्यसमत्वादसिद्धत्वात्प्रतिसंधातृत्वं न हेतुः । अहं

---

* सांख्यानां हि दर्शने प्रवादो महदन्तःकरणं बुद्धिरिति तदुपालम्भार्थं प्रकरणमिति भावः । अयमभिप्रायः—नेह नित्यानित्यविचारः प्रधानतः, अपि तु अनया द्वारा वृत्तेरतिरिक्ता सांख्याभिमता बुद्धिर्निराक्रियते सामान्यतो बुद्धिमात्रस्य नित्यानित्यत्वविचारेण । यदि हि नित्या बुद्धिः स्यात्ततो वृत्तिभ्य उदयवतीभ्यो व्यतिरिक्तं महत्तत्त्वमन्तःकरणं स्यात् । यदि तु नित्यत्वसाधनानि प्रतिसंधानादीनि न बुद्धिनित्यत्वस्येशते ततो वृत्तय एव बुद्धयो न तदतिरिक्तं बुद्धितत्त्वं सिध्यतीति । + वृत्तिमान्किल विषयं प्रत्यभिजानन्नात्मानमपि प्रत्यभिजानाति । नहि चेतनो वृत्तिमान्, तस्य कूटस्थनित्यत्वात् । अन्यथा पूर्वापरावस्थाभेदवान्न कूटस्थनित्यः स्यात् । परिणामिनित्या तु बुद्धिरुदयव्ययवदनेकवृत्तिमती युज्यत इति भावः । × वृत्तयो हि वृत्तिमतो भिन्नास्तेन तासामनित्यत्वेऽपि न वृत्तिमान्कौटस्थ्याच्च्यवेत । तथा च प्रत्यभिज्ञाताऽऽत्मैव प्रत्यभिज्ञानान्नित्यः सिध्यति न त्वन्तःकरणं बुद्धिसंज्ञकम् । नहि तत्प्रत्यभिज्ञाने प्रकाशत इत्यर्थः ।

कारणम् । चेतनधर्मस्य करणेऽनुपपत्तिः । पुरुषधर्मः खल्वयं दर्शनमुपलब्धिर्बोधः प्रत्ययोऽध्यवसाय इति । चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानातीति । तस्यैतस्माद्धेतोर्नित्यत्वं युक्तमिति । कारणचैतन्याभ्युपगमे तु चेतनस्वरूपं वचनीयं नानिर्दिष्टस्वरूपमात्मान्तरं शक्यमस्तीति प्रतिपत्तुम् । ज्ञानं चेद्बुद्धेरन्तःकरणस्याभ्युपगम्यते चेतनस्येदानीं किं स्वरूपं को धर्मः किं तत्त्वं ज्ञानेन च बुद्धौ वर्तमानेनायं चेतनः किं करोतीति ।

चेतयत इति चेन्न ज्ञानादर्थान्तरवचनम् । पुरुषश्चेतयते बुद्धिर्जानातीति नेदं ज्ञानादर्थान्तरमुच्यते चेतयते जानीते बुध्यते पश्यत्युपलभत इत्येकोऽयमर्थ इति ।

बुद्धिर्ज्ञापयतीति चेदद्धा जानीते पुरुषो बुद्धिर्ज्ञापयतीति सत्यमेतत् । एवं चाभ्युपगमे ज्ञानं पुरुषस्येति सिद्धं भवति न बुद्धेरन्तःकरणस्येति ।

प्रतिपुरुषं च शब्दान्तरव्यवस्थाप्रतिज्ञाने प्रतिषेधहेतुवचनम् । यश्च प्रतिजानीते कश्चित्पुरुषश्चेतयते कश्चिद्बुध्यते कश्चिदुपलभते कश्चित्पश्यतीति पुरुषान्तराणि खल्विमानि चेतनो बोद्धोपलब्धा द्रष्टेति नैकस्यैते धर्मा इति अत्र कः प्रतिषेधहेतुरिति ।

अर्थस्याभेद इति चेत्समानम् । अभिन्नार्था एते शब्दा इति तत्र व्यवस्थानुपपत्तिरित्येवं चेन्मन्यसे समानं भवति पुरुषश्चेतयते बुद्धिर्जानीत इत्यत्राप्यर्थो न भिद्यते तत्रोभयोश्चेतनत्वादन्यतरलोप इति । यदि पुनर्बुध्यतेऽनयेति बोधनं बुद्धिर्मन एवोच्यते तच्च नित्यम् । अस्त्वेतदेवं न तु मनसो विषयप्रत्यभिज्ञानान्नित्यत्वम् । दृष्टं हि करणभेदे ज्ञातुरेकत्वात्प्रत्यभिज्ञानम् 'सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्' ( ३ । १ । ७ ) इति । चक्षुर्वत्प्रदीपवच्च प्रदीपान्तरदृष्टस्य प्रदीपान्तरेण प्रत्यभिज्ञानमिति । तस्माज्ज्ञातुरयं नित्यत्वे हेतुरिति ॥ ३ ॥

---

जानामीत्यादिनाऽऽत्मन एव प्रतिसंधातृप्रत्ययादनादिनिधनत्वमेव तस्य कौटस्थ्यमन्यादृशं त्वसिद्धमिति भावः ॥ ३ ॥

भा०—यच्च मन्यते बुद्धेरवस्थितताया यथाविषयं वृत्तयो ज्ञानानि निश्चरन्ति वृत्तिश्च वृत्तिमतो नान्येति तच्च—

न युगपदग्र*हणात् ॥ ४ ॥

वृत्तिवृत्तिमतोरनन्यत्वे वृत्तिमतोऽवस्थानाद्वृत्तीनामवस्थानमिति यानीमानि विषयग्रहणानि तान्यवतिष्ठन्त इति युगपद्विषयाणां ग्रहणं प्रसज्यत इति ॥ ४ ॥

अप्रत्यभिज्ञाने च विनाश+प्रसङ्गः ॥ ५ ॥

भा०—अतीते च प्रत्यभिज्ञाने वृत्तिमानप्यतीत इत्यन्तःकरणस्य विनाशः प्रसज्यते । विपर्यये च नानात्वमिति ॥ ५ ॥

भा०—अविभु चैकं मनः पर्यायेणेन्द्रियैः संयुज्यत इति—

क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥

इन्द्रियार्थानाम्, वृत्तिवृत्तिमतोर्नानात्वमिति । एकत्वे च प्रादुर्भावतिरोभावयोरभाव इति ॥ ६ ॥

---

वृ०—बुद्धेरेव स्थायिन्या यथाविषयं ज्ञानात्मिका वृत्तयो वृत्तिमदभिन्ना वह्नेरिव स्फुलिङ्गा निःसरन्तीति सांख्यमतं निरस्यति—वृत्तिवृत्तिमतोरभेदे वृत्तिमदवस्थित्या वृत्तेरव्यवस्थितिर्वाच्या । तथा च सर्वपदार्थग्रहणं युगपत्स्यात् । न चैवम् । तस्मान्नाभेद इति ॥ ४ ॥

वृ०—तत्र वृत्तीनामनवस्थायित्वमुच्यते तत्राऽऽह—अप्रत्यभिज्ञाने प्रत्यभिज्ञानस्याभावे विनाशे वृत्तिमतोऽपि विनाशः स्यादतो न द्वयोरैक्यम् ॥ ५ ॥

वृ०—अयुगपद्ग्रहणं स्वमते व्युत्पादयति—मनस इत्यादि । मनसोऽणुत्वादिन्द्रियैः सह क्रमेण संबन्धाज्ज्ञानानां क्रमिकत्वम् । तथा चाविभु चैकं मनः पर्यायेण सर्वैरिन्द्रियैः संबध्यत इत्यवतारभाष्यम् । तत्तदिन्द्रियमनःसंयोगे सति ज्ञानमुपपद्यते ॥ ६ ॥

---

* वृत्तिमतोऽवस्थानाद्वृत्त्यनवस्थानप्रसङ्ग इति सूत्रार्थः । + वृत्तीनामपगमे वृत्तिमतोऽव्यपगम इति सूत्रार्थः ।

अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥

भा०—अप्रत्यभिज्ञानमनुपलब्धिः । अनुपलब्धिश्च कस्यचिदर्थस्य विषयान्तरव्यासक्ते मनस्युपपद्यते वृत्तिवृत्तिमनोर्नानात्वात्। एकत्वे ह्यनर्थको व्यासङ्ग इति ॥ ७ ॥

भा०—विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियैः संयोगः—

न गत्यभावात् ॥ ८ ॥

प्राप्तानीन्द्रियाण्यन्तःकरणेनेति प्राप्त्यर्थस्य गमनस्याभावः । तत्र क्रमवृत्तित्वाभावादयुगपद्ग्रहणानुपपत्तिरिति । गत्यभावाच्च प्रतिषिद्धं विभुनोऽन्तःकरणस्यायुगपद्ग्रहणं न लिङ्गान्तरेणानुमीयते । यथा चक्षुषो गतिः प्रतिषिद्धा संनिकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणात् । पाणिचन्द्रमसोर्व्यवधानप्रतीघाते साऽनुमीयत इति सोऽयं नान्तःकरणे विवादो न तस्य नित्यत्वे सिद्धं हि मनोऽन्तःकरणं नित्यं चेति । क्व तर्हि विवादः । तस्य विभुत्वे । तच्च प्रमाणतोऽनुपलब्धेः प्रतिषिद्धमिति । एकं चान्तःकरणं नाना चैता ज्ञानात्मिका वृत्तयः—चक्षुर्विज्ञानं घ्राणविज्ञानं रूपविज्ञानं गन्धविज्ञानम्। एतच्च वृत्तिमतोरेकत्वेऽनुपपन्नमिति पुरुषो जानीते नान्तःकरणमिति । एतेन विष*यान्तरव्यासङ्गः प्रत्युक्तः । विषयान्तरग्रहणलक्षणो विषयान्तरव्यासङ्गः पुरुषस्य नान्तःकरणस्येति केनचिदिन्द्रियेण संनिधिः केनचिदसंनिधिरि-

---

वृ०—तद्व्यतिरेके ज्ञानाभावमुपपादयति—अप्रत्यभिज्ञानं तत्तादिन्द्रियजज्ञानाभावः। विषयान्तरेणेन्द्रियान्तरेण मनसः संबन्धादित्यर्थः ॥ ७ ॥

वृ०- त्वन्मते चेदं नोपपद्यत इत्याह—त्वन्मते मनसः क्रमेणेन्द्रियसंबन्धो न। मनसो विभुत्वेन गत्यभावात् । परे तु—नकारो न सूत्रान्तर्गतः किंतु

---

* यदपि सांख्या आचचक्षिरे विषयान्तरव्यासक्तेऽन्तःकरणे चक्षुरादिसंबद्धस्यापि अर्थस्याज्ञानादन्तःकरणवृत्तिर्ज्ञानमिति तन्निराकरणपरमेतद्भाष्यं बोध्यम् ।

---

१ ङ. °यत इति । य° ।

त्ययं तु व्यासङ्गोऽनुज्ञायते मनस इति एकमन्तःकरणं नानावृत्तय इति ॥ ८ ॥

भा०—सत्यभेदे वृत्तेरिदमुच्यते—

स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभि*मानः ॥ ९ ॥

तस्य वृत्तौ नानात्वाभिमानो यथा द्रव्यान्तरोपहिते स्फटिकेऽन्यत्वाभिमानो नीलो लोहित इति एवं विषयान्तरोपधानादिति ॥ ९ ॥

न हेत्वभा+वात् ॥ १० ॥

भा०—स्फटिकान्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमानो गौणो न पुनर्गन्धाद्यन्यत्वाभिमानवदिति हेतुर्नास्ति हेत्वभावादनुपपन्न इति ।

समानो हेत्वभाव इति चेन्न ज्ञानानां क्रमेणोपजनापायद-

---

विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियैः संयोगो नेति भाष्यावतारणिकाया-मित्याहुः ॥ ८ ॥

वृ०—वृत्तिवृत्तिमतोर्वस्तुतो भेदेऽपि भेदप्रत्ययप्रतिपादनाय शङ्कते—यथा जपाकुसुमसंनिधानादेकस्यापि स्फटिकस्य तत्तद्रूपाभिमानस्तथा वृत्तिस्तत्तद्विषय-संनिकर्षवशान्नानेव प्रतिभासत इति ॥ ९ ॥

वृ०—दूषयति—भ्रमत्वे साधकाभावान्नोक्तं युक्तमित्यर्थः । केचित्तु—हेत्वभा-

---

* अयं भावः—यद्यपि वृत्तयो नाना प्रतिभान्ति तथाऽपि भ्रान्तिरियम् । एकस्मादन्तःकरणादभिन्नानां नानात्वानुपपत्तेः । तस्माद्यथैकस्यापि स्फटिकस्य तापिच्छजपाकर्णिकारादिकुसुमोपधानाद्भेद औपाधिक एवमन्तःकरणस्यापि स्वच्छस्येन्द्रियप्रणाडिकया तत्तदर्थोपरक्तस्यौपाधिकं नानात्वं वृत्तिरिति च प्रत्यय इति च ज्ञानमिति चाऽऽख्यायत इति । + योऽयं दृष्टान्तः स्फटिकवदिति तत्रेदं वक्तव्यम् । किमयं स्फटिक उपधानभेदेन भिद्यत आहोस्विन्नेति । यदि भिद्यते दृष्टान्तो न भवति । यदि न भिद्यते नानात्वाभिमानः कथम् । उपधानभेदादिति चेत् । उपधानं भिन्नमिति कथं जानासि । प्रत्ययभेदादिति चेत् । वृत्तेः प्रत्ययपर्यायत्वेनाभिन्ना वृत्तिः प्रत्ययश्च भिन्न इति विरुद्धत्वाद्व्याघात इति ।

---

१ क. ख. ग. घ. च. °जनना° ।

र्शनात् । क्रमेण हीन्द्रियार्थेषु ज्ञानान्युपजायन्ते चापयन्ति चेति दृश्यते । तस्माद्गन्धान्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमान इति ॥ १० ॥

इति बुद्ध्यनित्यताप्रकरणम् ॥ १ ॥

भा०—स्फटिकान्यत्वाभिमानवदित्येतदमृष्यमाणः क्षणिकवाद्याह—

**स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ ११ ॥**

स्फटिकस्याभेदेनावस्थितस्योपधानभेदान्नानात्वाभिमान इत्ययमविद्यमानहेतुकः पक्षः । कस्मात् । स्फटिकेऽप्यपरापरोत्पत्तेः । स्फटिकेऽप्यन्या व्यक्तय उत्पद्यन्तेऽन्या निरुध्यन्त इति । कथम् । क्षणिकत्वाद्व्यक्तीनाम् । क्षणश्चाल्पीयान्कालः । क्षणस्थितिकाः क्षणिकाः । कथं पुनर्गम्यते क्षणिका व्यक्तय इति । उपचयापचयप्रबन्धदर्शनाच्छरीरादिषु । पक्तिनिर्वृत्तस्याऽऽहाररसस्य* शरीरे रुधिरादिभावेनोपचयापचयश्च प्रबन्धेन प्रवर्तते । उपचयाद्व्यक्तीनामुत्पादः, अपचयाद्व्यक्तिनिरोधः । एवं सत्य-

---

वादिति भाष्यमिति टीकादर्शनान्नेदं सूत्रं किंतु तुच्छतया सूत्रकृताऽदूषणान्यूनतापरिहाराय भाष्यकृता तदुक्तमिति मन्यन्ते ॥ १० ॥

इति बुद्ध्यनित्यताप्रकरणम् ॥ १ ॥

वृ०—स्फटिक इव नानात्वभ्रम इत्यसहमानः सौगतः शङ्कते—स्फटिकान्यत्वाभिमानवदित्यहेतुः । कुतः । स्फटिकेऽप्यपरापरोत्पत्तेर्विलक्षणविलक्षणस्फटिकोत्पत्तेः । तत्र मानमाह—व्यक्तीनां भावानां क्षणिकत्वात् । तत्साधनाय भाष्यम्—'उपचयापचयप्रबन्धदर्शनाच्छरीरादिषु' प्रतिक्षणं शरीरेषूपचयापचयदर्शनान्ना-

---

* अस्य प्रयोगः—शरीरं प्रतिक्षणमन्यच्चान्यच्च भवति बाह्यप्रत्ययाभेदे सति अन्ते विशेषदलनात्, पच्यमानभूमिपाकजवदिति । पटस्य कुङ्कुमादिद्रव्यसंयोगे सति अन्तेऽरुणिमलक्षणो विशेषो दृश्यते । न चास्यारुणिमा प्रतिक्षणभावीत्यत उक्तं बाह्यप्रत्ययाभेदे सतीति ।

वयवपरिणामभेदेन वृद्धिः शरीरस्य कालान्तरे गृह्यत इति सोऽयं व्यक्तिविशेषधर्मो व्यक्तिमात्रे वेदितव्य इति ॥ ११ ॥

नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ १२ ॥

भा०—सर्वासु व्यक्तिषूपचयापचयप्रबन्धः शरीरवदिति नायं नियमः । कस्मात् । हेत्वभावात् । नात्र प्रत्यक्षमनुमानं वा प्रतिपादकमस्तीति । तस्माद्यथादर्शनमभ्यनुज्ञा । यत्र यत्रोपचयापचयप्रबन्धो दृश्यते तत्र तत्र व्यक्तीनामपरापरोत्पत्तिरुपचयापचयप्रबन्धदर्शनेनाभ्यनुज्ञायते यथा शरीरादिषु । यत्र यत्र न दृश्यते तत्र तत्र प्रत्याख्यायते यथा ग्रावप्रभृतिषु । स्फटिकेऽप्युपचयापचयप्रबन्धो न दृश्यते । तस्मादयुक्तं स्फटिकेऽप्यपरापरो-*त्पत्तिरिति । यथा चार्कस्य कटुकिम्ना सर्वद्रव्याणां कटुकिमानमापादयेत्तादृगेतदिति ॥ १२ ॥

भा०—यश्चाशेषनिरोधेनापूर्वोत्पादं निरन्वयं द्रव्यसंताने क्षणिकानां मन्यते तस्यैतत्—

नोत्पत्तिविनाशकारणो+पलब्धेः ॥ १३ ॥

उत्पत्तिकारणं तावदुपलभ्यतेऽवयवोपचयो वल्मीकादीनाम् ।

---

नात्वम् । न ह्येकस्मिन्नवयविनि परिमाणसमावेश इति भावः । इदं सूत्रमेवेति केचित् ॥ ११ ॥

वृ०—सिद्धान्तसूत्रम् । पदार्थानां विनाशसामग्रीवैशिष्ट्यनियमे मानाभावात् । अभ्युपेत्याऽऽह—यथादर्शनमिति । यदि कस्यचिद्विनाशसामग्रीवैशिष्ट्ये मानं स्यात्तदा क्षणिकत्वं तस्याभ्यनुज्ञायत एव यथाऽन्त्यशब्द इति ॥ १२ ॥

वृ०—युक्त्यन्तरमाह—न स्फटिकादेः क्षणिकत्वं यत उत्पत्तिविनाशकारणा-

---

* सोऽयं हेतुर्यत्रोपलभ्यते तत्र क्षणिकत्वं साधयेन्न तु सर्वभावानाम् । तत्रापि अनेन हेतुनाऽन्यत्वं सिध्येन्न तु क्षणिकत्वम् । हेतोश्चान्यथोपपत्तेः क्षणिकत्वं विना नानुपपत्तिः । पूर्वशरीरावयवा हि आहारावयवसहिताः पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यमानाः शरीरान्तरमुत्पादयन्तीति युक्तो भेद इत्यहेतुरेषः । ननु क्षणिकत्वमेव भेदहेतुः कुतो नेति चेत् । मैवम् । तत्साधनेन निर्दिष्टेन हेतुनैव भेदसिद्धेः कृतं क्षणिकत्वस्य तद्धेतुत्वकल्पनया । + उपचयापचयौ हि अवस्थितवस्तुविषयौ । सर्वभावानां क्षणिकत्वे तु तौ न संगच्छेयातामिति भावः ।

---

१ ङ. °णिकतां म° ।

विनाशकारणं चोपलभ्यते घटादीनामवयवविभागः । यस्य त्वनपचितावयवं निरुध्यतेऽनुपचितावयवं चोत्पद्यते तस्याशेषनिरोधे निरन्वये चापूर्वोत्पादे न कारणमुभयत्राप्युपलभ्यत इति ॥१३॥

क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः ॥ १४ ॥

भा०—यथाऽनुपलभ्यमानं क्षीरविनाशकारणं दध्युत्पत्तिकारणं चाभ्यनुज्ञायते तथा स्फटिकेऽपरापरासु व्यक्तिषु विनाशकारणमुत्पत्तिकारणं चाभ्यनुज्ञेयमिति ॥ १४ ॥

लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १५ ॥

भा०—क्षीरविनाशलिङ्गं क्षीरविनाशकारणं दध्युत्पत्तिलिङ्गं दध्युत्पत्तिकारणं च गृह्यतेऽतो नानुपलब्धिः । विपर्ययस्तु स्फटिकादिषु, द्रव्येषु अपरापरोत्पत्तौ व्यक्तीनां न लिङ्गमस्तीत्यनुत्पत्ति*रेवेति ॥ १५ ॥

---

न्युपलब्ध्या निर्णीतान्यवयवोपचयापचयादीनि । न च स्फटिके विनाशकारणमुपलभ्यते येन पूर्वविनाशोऽपरोत्पत्तिश्च स्यादिति भावः ॥ १३ ॥

वृ०—आक्षिपति—दध्युत्पत्तिवद्दध्युत्पत्तिकारणानुपलब्धिवत्तदुपपत्तिः पूर्वस्फटिकविनाशकारणानुपलब्धेरुत्तरस्फटिकोत्पत्तिकारणानुपलब्धेश्चोपपत्तिः स्यादिति भावः ॥ १४ ॥

वृ०—सिद्धान्तसूत्रम् । दध्नः क्षीरविनाशस्य च प्रत्यक्षसिद्धत्वात्कारणं कल्प्यते । नत्वेवं स्फटिकविनाशोत्पादावुपलभ्येते येन तत्कारणकल्पनम् ॥१५॥

---

* ननु अत्रापि शीतोष्णस्पर्शभेदान्नानात्वमग्न्युदकवदिति चेन्न । तस्यास्तेजोवयवानुप्रवेशनिमित्तकत्वेन स्फटिकगतत्वाभावात् । ननु न शैत्योष्ण्ययोस्तेजोवयवानुप्रवेशनिमित्तकत्वं हेमन्तेऽनावृतानां काष्ठभूम्यश्मलोहानां शैत्यतारतम्यस्य ग्रीष्मे चौष्ण्यतारतम्यस्यानुपपत्तेः । नहि तेषु क्वचिदधिकावयवानुप्रवेशे क्वचिदल्पावयवानुप्रवेशे कारणं संभवति । तस्माद्बाह्यनिमित्तान्तरानपेक्षो भावानां स्वभावादेव भिन्नभिन्नरूपेण परिणाम इति चेन्न । अन्वयव्यतिरेकाभ्यामस्तेजोवयवानुप्रवेशे कारणताया दुर्वारत्वात् ।

---

१ ङ. °दुत्पत्तिः । २ ङ. °त्पत्तीनां न ।

भा०—अत्र कश्चित्परीहारमाह—

**न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १६ ॥**

पयसः परिणामो न विनाश इत्येक आह । परिणामश्चावस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति । गुणान्तरप्रादुर्भाव इत्यपर आह । सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरमुत्पद्यत इति ॥ १६ ॥

भा०—स खल्वेकपक्षीभाव* इव, अत्र तु प्रतिषेधः—

**व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥ १७ ॥**

संमूर्छनलक्षणादवयवव्यूहाद्द्रव्यान्तरे दध्न्युत्पन्ने गृह्यमाणे पूर्वं पयो द्रव्यमवयवविभागेभ्यो निवृत्तमित्यनुमीयते । यथा मृदवयवानां व्यूहान्तराद्द्रव्यान्तरे स्थाल्यामुत्पन्नायां पूर्वं मृत्पिण्डद्रव्यं मृदवयवविभागेभ्यो निवर्तत इति । मृद्वच्चावयवान्वयः पयोदध्नोः, नाशेषनिरोधे निरन्वयो द्रव्यान्तरोत्पादो घटत इति ॥ १७ ॥

भा०—अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं दध्युत्पादं च प्रतिषेध उच्यत इति—

**क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १८ ॥**

क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीना-

वृ०—सौगतमते सांख्यदूषणमुपन्यस्यति-न क्षीरस्य नाशो दध्नश्चोत्पत्तिः किंतु क्षीरस्य परिणामः । परिणामशब्दार्थो गुणान्तरप्रादुर्भावः । विद्यमानस्य क्षीरस्य पूर्वरसतिरोभावोऽम्लरसात्मकगुणान्तरस्याऽऽविर्भावादित्यर्थः ॥ १६॥

वृ०—एतन्निराकरोति सूत्रकारः-व्यूहान्तराद्रचनान्तरात्पूर्वावयवसंयोगनाशो द्रव्यान्तरोत्पादश्चाऽऽनुभाविक इति भावः ॥ १७ ॥

वृ०—दोषान्तराभिधानाय सिद्धान्तिनः सूत्रम् । क्वचिच्चोपलब्धेरनेकान्त ।

* पक्षद्वयेऽपि द्रव्यमवतिष्ठते, एकस्य तिरोभावाभिव्यक्ती अपरस्य विनाशप्रादुर्भावाविस्युपमार्थः ।

१ क. च. °त्परिहा° ।

मिति नायमेकान्त इति । कस्मात् । हेत्वभावात् । नात्र हेतुरस्ति अकारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनां क्षीरदधिवत्, न पुनर्विनाशकारणभावात्कुम्भस्य विनाश उत्पत्तिकारणभावाच्चोत्पत्तिः, एवं स्फटिकादिव्यक्तीनां विनाशोत्पत्तिकारणभावाद्विनाशोत्पत्तिभाव इति ।

निरधि*ष्ठानं च दृष्टान्तवचनम् । गृह्यमाणयोर्विनाशोत्पादयोः स्फटिकादिषु स्यादयमाश्रयवान्दृष्टान्तः क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्चेति, तौ तु न गृह्येते । तस्मान्निरधिष्ठानोऽयं दृष्टान्त इति ।

अभ्यनुज्ञाय च स्फटिकस्योत्पादविनाशौ योऽत्र साधकस्तस्याभ्यनुज्ञानादप्रतिषेधः । कुम्भवन्न निष्कारणौ विनाशोत्पादौ स्फटिकादीनामित्यभ्यनुज्ञेयोऽयं दृष्टान्तः प्रतिषेद्धुमशक्यत्वात् । क्षीरदधिवत्तु निष्कारणौ विनाशोत्पादाविति शक्योऽयं प्रतिषेद्धुं कारणतो विनाशोत्पत्तिदर्शनात् । क्षीरदध्नोर्विनाशोत्पत्ती पश्यता तत्कारणमनुमेयम् । कार्यलिङ्गं हि कारणमित्युपपन्नमनित्या बुद्धिरिति ॥ १८ ॥

इति क्षणभङ्गप्रकरणम् ॥ २ ॥

---

क्षीरदधिदृष्टान्तेन विनाशोत्पादावकारणकावेवेति न युक्तम् । घटादौ सकारणकत्वोपलब्धेर्व्यभिचारात् । वस्तुतः क्षीरविनाशेऽम्लद्रव्यसंयोगस्य हेतुत्वादम्लरसवत्परमाणुभिश्च दध्न आरम्भान्नाकारणकौ क्षीरविनाशदध्युत्पादाविति ॥ १८ ॥

इति क्षणभङ्गप्रकरणम् ॥ २ ॥

---

* नन्वधिष्ठानशब्दार्थः क इति चेत् । यो हि आश्रयपदार्थः स एव । ननु निरधिष्ठानमित्यनेन किं बोध्यत इति चेत् । धर्मी नास्तीति । नहि स्फटिकस्योत्पादविनाशौ प्रतिक्षणमुपलभ्येते यत इयं चिन्ता भवेत् 'किमेतौ सकारणकावाहोस्विदकारणकौ' इति । एवं च यथाऽनभ्युपगतशब्दतत्त्वं पुरुषं प्रति कश्चिद्ब्रूयात्कृतकत्वादनित्यः शब्द इति तादृगेतद्भवति । धर्म्यसिद्धेश्च दृष्टान्ताभाव इति भावः ।

---

१ क. ख. घ. ङ. °रणाभा° । २ ख. घ. °म्भस्यावि° । ३ क. ख. घ. ङ. च. °रणाभा° । ४ ङ. °वाच्चानुत्प° । ५ क. ख. घ. च. °रणाभा° । ६ क. ग. ङ. °ध्युपलब्धिव° ।

भा०—इदं तु चिन्त्यते—कस्येयं बुद्धिरात्मेन्द्रियमनोर्थानां गुण इति। प्रसिद्धोऽपि खल्वयमर्थः परीक्षाशेषं प्रवर्तयामीति प्रक्रियते। सोऽयं बुद्धौ संनिकर्षोत्पत्तेः संशयो विशेषस्याग्रहणादिति। तत्रायं विशेषः—

नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ १९ ॥

नेन्द्रियाणामर्थानां वा गुणो ज्ञानं तेषां विनाशे ज्ञानस्य भावात्। भवति खल्विदमिन्द्रियेऽर्थे च विनष्टे ज्ञानमद्राक्षमिति। न च ज्ञातरि विनष्टे ज्ञानं भवितुमर्हति। अन्यत्खलु चैतदिन्द्रियार्थासंनिकर्षजं ज्ञानं यदिन्द्रियार्थविनाशे न भवति। इदमन्यदात्ममनःसंनिकर्षजं तस्य युक्तो भाव इति। स्मृतिः खल्वियमद्राक्षमिति पूर्वदृष्टविषया। न च विज्ञातरि नष्टे पूर्वोपलब्धेः स्मरणं युक्तम्। न चान्यदृष्टमन्यः स्मरति। न च मनसि ज्ञातर्यभ्युपगम्यमाने शक्यमिन्द्रियार्थयोर्ज्ञातृत्वं प्रतिपादयितुम् ॥ १९ ॥

भा०—अस्तु तर्हि मनोगुणो ज्ञानम्—

युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥ २० ॥

युगपज्ज्ञेयानुपलब्धिरन्तःकरणस्य लिङ्गम्। तत्र युगपज्ज्ञेयानुपलब्ध्या यदनुमीयतेऽन्तःकरणं न तस्य गुणो ज्ञानम्। कस्य तर्हि। ज्ञस्य वशित्वात्। * वशी ज्ञाता, वश्यं करणम्,

---

वृ०—बुद्धेरात्मगुणत्वं यद्यप्यात्मपरीक्षात एव सिद्धप्रायं तथाऽपि विशिष्य व्युत्पादनाय बुद्ध्यात्मगुणत्वप्रकरणम्। तत्र चेन्द्रियार्थसंनिकर्षाधीनत्वादिन्द्रियादिनिष्ठत्वमेवास्तु भेर्याकाशसंयोगाधीनशब्दस्याऽऽकाशनिष्ठत्ववदिति पूर्वपक्षे सिद्धान्तसूत्रम्। बुद्धिर्नेन्द्रियस्य न वाऽर्थस्य गुणः, तन्नाशेऽपि ज्ञानस्य स्मरणस्यावस्थानादुत्पत्तेः। न ह्यनुभवितुरभावे स्मरणमुपपद्यतेऽतिप्रसङ्गादिति भावः ॥ १९ ॥

वृ०—मनोगुणत्वं निरस्यति—युगपज्ज्ञेयानुपलब्धेर्हेतोः सिद्धस्य मनसो न कर्तृत्वं धर्मिग्राहकमानेन करणत्वेनैव सिद्धेः। वस्तुतो युगपज्ज्ञेयानुपलब्धेरित्यमेन

---

* न चैवं ज्ञातरि नियमो ज्ञाता वश्येवेति, किंतु वश्योऽपि भवति। अचेतने तु नियमोऽचेतनं सर्वं वश्यमिति। एवं च वश्यं मनोऽचेतनत्वाद्घ्राणवदिति बोध्यम्।

ज्ञानगुणत्वे च करणभावनिवृत्तिः । घ्राणादिसाधनस्य च ज्ञातुर्गन्धादिषु ज्ञानभावादनुमीयते—अन्तःकरणसाधनस्य सुखादिज्ञानं स्मृतिश्चेति । तत्र यज्ज्ञानगुणं[1] स आत्मा । यत्तु सुखाद्युपलब्धिसाधनमन्तःकरणं मनस्तदिति संज्ञाभेदमात्रं नार्थभेद[2] इति । युगपज्ज्ञेयानुपलब्धेश्चायोगिन इति चार्थः । योगी खलु ऋद्धौ प्रादुर्भूतायां विकरणधर्मा निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु तेषु युगपज्ज्ञेयान्युपलभते । तच्चैतद्विभौ ज्ञातर्युपपद्यते नाणौ मनसीति । विभुत्वे वा मनसो ज्ञानस्य नाऽऽत्मगुणत्वप्रतिषेधः । विभु मनस्तदन्तःकरणभूतमिति तस्य सर्वेन्द्रियैर्युगपत्संयोगाद्युगपज्ज्ञानान्युत्पद्येरन्निति ॥ २० ॥

तदात्मगुणत्वेऽपि तुल्यम् ॥ २१ ॥

भा०—विभुरात्मा सर्वेन्द्रियैः संयुक्त इति युगपज्ज्ञानोत्पत्तिप्रसङ्ग इति ॥ २१ ॥

इन्द्रियैर्मनसः संनिकर्षाभावात्तदनुत्पत्तिः ॥ २२ ॥

भा०—गन्धाद्युपलब्धेरिन्द्रियार्थसंनिकर्षवदिन्द्रियमनःसंनिकर्षोऽपि कारणम् । तस्य चायौगपद्यमणुत्वान्मनसः । अयौगपद्याद्[3]नुत्पत्तिर्युगपज्ज्ञानानामात्मगुणत्वेऽपीति ॥ २२ ॥

---

मनसोऽणुत्वं सूचितम् । तथा च तद्गतसुखाद्यप्रत्यक्षता स्यात् । एवं कायव्यूहे तत्तद्देहावच्छेदेन ज्ञानादिकं न स्यादिति भावः ॥ २० ॥

वृ०—शङ्कते—तस्या बुद्धेरात्मगुणत्वेऽपि ज्ञानयौगपद्यं तुल्यम्, आत्मनः सर्वेन्द्रियसंयोगात् । तथा च स दोषस्तदवस्थ एवेति कथं तया युक्त्या मनःसिद्धिरिति भावः ॥ २१ ॥

वृ०-उत्तरयति—युगपज्ज्ञानेन्द्रियैः सह मनसः संनिकर्षाभावान्न युगपज्ज्ञानाविषयोपलब्धिरिति भावः ॥ २२ ॥

---

१ ख. घ. ङ. °णं मनः स । २ ग. नार्थभे° । ३ ग. °द्यातद° ।

भा०—यदि पुनरात्मेन्द्रियार्थसंनिकर्षमात्राद्गन्धादिज्ञानमुत्पद्यते—

नोत्पत्तिकारणानपदेशात् ॥ २३ ॥

आत्मेन्द्रियसंनिकर्षमात्राद्गन्धादिज्ञानमुत्पद्यत इति नात्रोत्पत्ति-कारणमपदिश्यते येनैतत्प्रतिपद्येमहीति ॥ २३ ॥

विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २४ ॥

भा०—तदात्मगुणत्वेऽपि तुल्यमित्येतदनेन समुच्चीयते । द्विविधो हि गुणनाशहेतुः—गुणानामाश्रयाभावो विरोधी च गुणः । नित्यत्वादात्मनोऽनुपपन्नः पूर्वः । विरोधी च बुद्धेर्गुणो न गृह्यते । तस्मादात्मगुणत्वे सति बुद्धेर्नित्यत्वप्रसङ्गः ॥ २४ ॥

अनित्यत्वग्रहाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः[1] शब्दवत् ॥ २५ ॥

भा०—अनित्या बुद्धिरिति सर्वशरीरिणां प्रत्यात्मवेदनीयमेतत् । गृह्यते च बुद्धिसंतानस्तत्र बुद्धेर्बुद्ध्यन्तरं विरोधी गुण इत्यनुमीयते, यथा शब्दसंताने शब्दः + शब्दान्तरविरोधीति । असं-

---

वृ०—आक्षिपति—बुद्ध्युत्पत्तौ कारणस्यानपदेशादकथनान्नाऽऽत्मगुणो बुद्धिः । आत्मनः संयोगस्य कारणत्वे ज्ञानस्य सार्वदिकत्वप्रसङ्ग इति भावः ॥ २३ ॥

वृ०—बुद्धेरात्मगुणत्वे दोषमप्याह—बुद्धेरात्मन्यवस्थाने विनाशकारणस्याऽऽश्रयनाशादेरनुपलब्धेस्तस्या बुद्धेर्नित्यताप्रसङ्गः ॥ २४ ॥

वृ०—उत्तरयति—बुद्धेरनित्यत्वस्य ग्रहणादुत्पादनाशयोरानुभविकत्वात्तत्कारणे कल्पनीय आत्ममनोयोगादेरुत्पादकत्वमनन्तरोत्पन्नबुद्धेः संस्कारादेर्वा नाश-

---

* अस्मादेवोत्पद्यतामिति न कारणमपदिश्यत इति सूत्रार्थः । यदा हीन्द्रियमात्मा चार्थेन युगपत्संबद्धौ तदा किमिन्द्रियार्थसंनिकर्षः कारणमुताऽऽत्मार्थसंनिकर्ष उताऽऽत्मेन्द्रियसंनिकर्ष इति कारणानपदेश इति भावः । + बुद्धेरनित्यत्वे साधिते बुद्ध्यन्तरात्संस्काराद्वा विनाश इति बोध्यम् । तस्या युगपदुत्पत्तिप्रतिषेधेऽपि युगपत्स्थितेरप्रतिषेधाद्द्वितीयक्षणोत्पन्नया बुद्ध्या प्रथमक्षणोत्पन्नाया बुद्धेर्नाशः शब्दवत् । अन्त्ययोस्तु बुद्धिशब्दयोः स्थितेर्हेत्वभावात्संस्काराद्वा कालाद्वा विनाश इति बोध्यम् ।

---

१ ग. °राद्धि ना° ।

ष्वयेयेषु ज्ञानकारितेषु संस्कारेषु स्मृतिहेतुष्वात्मसमवेतेष्वात्ममनसोश्च संनिकर्षे समाने स्मृतिहेतौ सति न कारणस्यायौगपद्यमस्तीति युगपत्स्मृतयः प्रादुर्भवेयुर्यदि बुद्धिरात्मगुणः स्यादिति ॥ २५ ॥

भा०—तत्र कश्चित्संनिकर्षस्यायौगपद्यमुपपादयिष्यन्नाह—

**ज्ञानसमवेतात्मप्रदेशसंनिकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २६ ॥**

ज्ञानसाधनः संस्कारो ज्ञानमित्युच्यते । ज्ञानसंस्कृतैरात्मप्रदेशैः पर्यायेण मनः संनिकृष्यते । आत्ममनःसंनिकर्षात्स्मृतयोऽपि पर्यायेण भवन्तीति ॥ २६ ॥

**नान्तःशरीरवृत्तित्वान्मनसः ॥ २७ ॥**

भा०—सदेहस्याऽऽत्मनो मनसा संयोगो विपच्यमानकर्माशयसहितो जीवनमिष्यते । तत्रास्य प्राक्प्रायणादन्तःशरीरे वर्तमानस्य मनसः शरीराद्बहिर्ज्ञानसंस्कृतैरात्मप्रदेशैः संयोगो नोपपद्यत इति ॥ २७ ॥

---

कत्वं कल्प्यते । चरमबुद्धेस्तु अदृष्टनाशात्कालाद्वा नाशः । बुद्धेर्बुद्ध्यन्तरनाश्यत्वेऽनुरूपं दृष्टान्तमाह—शब्दवदिति । शब्दस्य यथा शब्दान्तरान्नाशश्चरमनिमित्तनाशनाश्यत्वं तथा प्रकृतेऽपीति भावः ॥ २५ ॥

वृ०—ननु बुद्धेरात्मगुणत्वे संस्कारात्ममनोयोगयोः सत्त्वात्स्मृतीनां यौगपद्यं स्यात् । अत्रैकदेशिनः परिहारमाशङ्कते—ज्ञानं संस्कारकारणं समवेतं यदवच्छेदेन तदवच्छेदेन मनःसंनिकर्षस्य स्मृत्युत्पादकत्वात्तस्य च क्रमिकत्वान्न स्मृतियौगपद्यमित्यर्थः । ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदं संस्कारपरमित्यन्ये ॥२६॥

वृ०—तन्मतं दूषयति—उक्तं न युक्तं मनसोऽन्तःशरीरवृत्तित्वादन्तःशरीरे वृत्तिज्ञानजनकीभूतो व्यापारो यस्य तत्त्वात् । शरीरातिरिक्तावच्छेदेनाऽऽत्ममनोयोगस्य ज्ञानाहेतुत्वाच्छरीरावच्छिन्नस्य हेतुत्वे तद्दोषतादवस्थ्यमिति भावः ॥ २७ ॥

साध्यत्वादहेतुः ॥ २८ ॥

भा०—विपच्यमानकर्माशयमात्रं जीवनम् । एवं च सति साध्यमन्तःशरीरवृत्तित्वं मनस* इति ॥ २८ ॥

स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २९ ॥

भा०—सुस्मूर्षया खल्वयं मनः प्रणिदधानश्चिरादपि कंचिदर्थं स्मरति स्मरतश्च शरीरधारणं दृश्यते । आत्ममनःसंनिकर्षजश्च प्रयत्नो द्विविधः—धारकः प्रेरकश्च । निःसृते च शरीराद्बहिर्मनसि धारकस्य प्रयत्नस्याभावाद्गुरुत्वात्पतनं स्याच्छरीरस्य + स्मरत इति ॥ २९ ॥

न तदाशुगतित्वान्मनसः ॥ ३० ॥

भा०—आशुगति मनस्तस्य बहिःशरीरादात्मप्रदेशेन ज्ञानसंस्कृतेन संनिकर्षः प्रत्यागतस्य च प्रयत्नोत्पादनमुभयं युज्यत इति । उत्पाद्य वा धारकं प्रयत्नं शरीरान्निःसरणं मनसोऽतस्तत्रोपपन्नं धारणमिति ॥ ३० ॥

न स्मरणकालानियमात् ॥ ३१ ॥

भा०—किंचित्क्षिप्रं स्मर्यते किंचिच्चिरेण । यदा चिरेण तदा सुस्मू-

---

वृ०—एकदेशी शङ्कते—शरीरावच्छिन्नात्ममनोयोगो न हेतुः साध्यत्वादसिद्धत्वान्मानाभावादिति भावः ॥ २८ ॥

वृ०—सिद्धान्तसूत्रम् । उक्तः प्रतिषेधो न युक्तः । स्मरतः शरीरधारणरूपाया उपपत्तेर्युक्तेः । अन्यथा मनसो बहिर्भावे शरीरावच्छिन्नात्ममनोयोगाभावेन प्रयत्नाभावे शरीरधारणं न स्यादिति भावः ॥ २९ ॥

वृ०—पुनः शङ्कते—शरीराधारणं न, मनस आशुगतित्वाच्छीघ्रमेव शरीरे परावृत्तेः ॥ ३० ॥

वृ०—दूषयति—मनसः शीघ्रमागमनं न युक्तम् , स्मरणे कालनियमाभावात् । कदाचिच्छीघ्रं स्मर्यते कदाचित्प्रणिधानाद्विलम्बेनापीति । न च

---

* अशरीरं मनः पुरुषार्थासमर्थमिति साध्यमेतद्बोध्यम् । + स्मरणशरीरधारणे युगपद्भवत इति दृष्टम् । दृष्टं च सर्वेण प्रतिपत्तव्यम् । चिरनिश्चरिते च मनसि स्मरतः शरीरधारणं न स्यात् ।

र्षया मनसि धार्यमाणे चिन्ताप्रबन्धे कस्यचिदर्थस्य लिङ्गभूतस्य चिन्तनमाराधितं स्मृतिहेतुर्भवति । तच्चैतच्चिरनिश्चरिते मनसि नोपपद्यत इति । शरीरसंयोगानपेक्षश्चाऽऽत्मनः संयोगो न स्मृतिहेतुः । शरीरस्य भोगायतनत्वात् । उपभोगायतनं पुरुषस्य ज्ञातुः शरीरम्, न ततो निश्चरितस्य मनस आत्मसंयोगमात्रं ज्ञानसुखादीनामुत्पत्तौ कल्प्यते क्लृप्तौ वा शरीरवैयर्थ्यमिति ॥ ३१ ॥

आत्मप्रेरणयदृच्छाज्ञताभिश्च
न संयोगविशेषः ॥ ३२ ॥

भा०–आत्मप्रेरणेन वा मनसो बहिःशरीरात्संयोगविशेषः स्यात्, यदृच्छया वाऽऽकस्मिकतया, ज्ञतया वा मनसः, सर्वथा चानुपपत्तिः । कथम् । स्मर्तव्यादिच्छातः स्मरणज्ञानासंभवाच्च । यदि तावदात्माऽमुष्यार्थस्य स्मृतिहेतुः संस्कारोऽमुष्मिन्नात्मप्रदेशे समवेतस्तेन मनः संयुज्यतामिति मनः प्रेरयति तदा स्मृत एवासावर्थो न स्मर्तव्यः । न चाऽऽत्मप्रत्यक्ष आत्मप्रदेशः संस्कारो वा तत्रानुपपन्नात्मप्रत्यक्षेण संवित्तिरिति । सुस्मूर्षया चायं मनः प्रणिदधानश्चिरादपि कंचिदर्थं स्मरति, नाकस्मात् । ज्ञत्वं च मनसो नास्ति ज्ञानप्रतिषेधादिति ॥ ३२ ॥

---

प्रणिधानं शरीरान्तःस्थितमनस एव, बहिर्निर्गमस्तु स्मरणाव्यवहितपूर्वमेवेति वाच्यम् । बहिर्निर्गमनान्तःप्रवेशानुकूलक्रियाविभागादिकालकलापं यावत्, शरीरधारणं न स्यादिति भावः ॥ ३१ ॥

वृ०—एकदेशिमतमन्य एकदेशी दूषयति–बहिष्प्रदेशविशेषे मनःसंयोगविशेषो न संभवति । स हि न स्मृत्यर्थमात्मप्रेरणेन, तस्य स्मरणीयज्ञानपूर्वकतया प्रागेव स्मृत्यापत्तेः । नापि यदृच्छयाऽकस्मात् । आकस्मिकत्वस्य निषेधात् । नापि मनसो ज्ञतया ज्ञातृतया मनसो ज्ञातृत्वानभ्युपगमात् । प्रेरणयदृच्छाज्ञताभिः प्रयत्नेच्छाज्ञानैरित्यर्थ इति कश्चित् । तन्न । प्रयत्नेनैव चरितार्थत्वापत्तेः ॥ ३२ ॥

---

* शरीरसंयोगानपेक्षं चाऽऽत्ममनःसंयोगं स्मृतिकारणं ब्रुवाणः शरीरस्य भोगायतनत्वं निम्नुते । तन्निवृत्तौ शरीरोत्पत्तिवैयर्थ्यमिति भावः ।

भा०—एतच्च—

व्यासक्तमनसः पादव्यथनेन संयो-
गविशेषेण समानम् ॥ ३३ ॥

यदा खल्वयं व्यासक्तमनाः क्वचिद्देशे शर्करया कण्टकेन वा पादव्यथनमाप्नोति तदाऽऽत्ममनःसंयोगविशेष एषितव्यः । दृष्टं हि दुःखं दुःखवेदनं चेति । तत्रायं समानः प्रतिषेधः । यदृच्छया तु विशेषो नाऽऽकस्मिकी क्रिया नाऽऽकस्मिकः संयोग इति ।

कर्मादृष्टमुपभोगार्थं क्रियाहेतुरिति चेत्समानम् । कर्मादृष्टं पुरुषस्थं पुरुषोपभोगार्थं मनसि क्रियाहेतुरेवं दुःखं दुःखसंवेदनं च सिध्यतीत्येवं चेन्मन्यसे समानं स्मृतिहेतावपि संयोगविशेषो भवितुमर्हति । तत्र यदुक्तमात्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेष इत्ययमप्रतिषेध इति । पूर्वस्तु प्रतिषेधो नान्तःशरीरवृत्तित्वान्मनस इति ॥ ३३ ॥

भा०—कः खल्विदानीं कारणयौगपद्यसद्भावे युगपदस्मरणस्य हेतुरिति—

प्रणिधानलिङ्गादिज्ञानानामयुगप-
द्भावादयुगपत्स्मरणम् ॥ ३४ ॥

यथा खल्वात्ममनसोः संनिकर्षः संस्कारश्च स्मृतिहेतुरेवं प्रणिधानं लिङ्गादिज्ञानानि तानि च न युगपद्भवन्ति तत्कृता स्मृतीनां युगपदनुत्पत्तिरिति ।

प्रातिभवत्तु * प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः । यत्खल्विदं प्रातिभमिव ज्ञानं प्रणिधानाद्यनपेक्षं स्मार्तमुत्पद्यते कदा-

---

वृ०—एतन्निराकरोति—नृत्यादिकं पश्यतः कण्टकादिना पादव्यथनेन तदवच्छेदेन मनःसंयोगो यथा जायते तथैव तदपीति भावः । इतरथा तत्र मनःसंयोगेऽप्युक्तदोषाः स्युः । अदृष्टविशेषाधीनकर्मवशादसाविति चेत्तुल्यं प्रकृतेऽपीति भावः ॥ ३३ ॥

वृ०—स्मरणायौगपद्यं स्वयमुपपादयति—प्रणिधानं चित्तैकाग्र्यम् । सुस्मूर्षेति यावत् । लिङ्गज्ञानमुद्बोधकम् । उद्बोधकानामानन्त्यात् । आदिपदं ज्ञाना-

---

* अस्य सूत्रत्वेनोल्लेखो बाहुल्येन दृश्यते ।

चित्तस्य युगपदुत्पत्तिप्रसङ्गो हेत्वभावात्[1] । सतः स्मृतिहेतोरसंवेदनात्प्रातिभेन समानाभिमानः । बह्वर्थविषये वै चिन्ताप्रबन्धे कश्चिदेवार्थः कस्यचित्स्मृतिहेतुस्तस्यानुचिन्तनात्तस्य स्मृतिर्भवति । न चायं स्मर्ता सर्वं स्मृतिहेतुं संवेदयत एवं मे स्मृतिरुत्पन्नेति । असंवेदनात्प्रातिभमिव ज्ञानमिदं स्मार्तमित्यभिमन्यते न त्वस्ति प्रणिधानाद्यनपेक्षं स्मार्तमिति ।

प्रातिभे कथमिति चेत्पुरुषकर्मविशेषादुपभोगवन्नियमः । प्रातिभमिदानीं ज्ञानं युगपत्कस्मान्नोत्पद्यते । यथोपभोगार्थं कर्म युगपदुपभोगं न करोति एवं पुरुषकर्मविशेषः प्रतिभाहेतुर्न युगपदनेकं प्रातिभं ज्ञानमुत्पादयति ।

हेत्वभावादयुक्तमिति चेन्न करणस्य प्रत्ययपर्याये सामर्थ्यात् ।

उपभोगवन्नियम इत्यस्ति दृष्टान्तः, हेतुर्नास्तीति चेन्मन्यसे । न करणस्य[2] प्रत्ययपर्याये सामर्थ्य.नैकस्मिञ्ज्ञेये युगपदनेकं ज्ञानमुत्पद्यते, न चानेकस्मिन् । तदिदं दृष्टेन प्रत्ययपर्यायेणानुमेयं कारणसामर्थ्यमित्थंभूतमिति । न । ज्ञातुर्विकरणधर्मणो[3] देहनानात्वे प्रत्ययर्यौगपद्यादिति ।

अयं च द्वितीयः प्रतिषेधः[4]—

अवस्थितशरीरस्य चानेकज्ञानसमवायादेकप्रदेशे युगपदनेकार्थस्मरणं स्यात् । क्वचिदेवावस्थितशरीरस्य ज्ञातुरिन्द्रियार्थप्रबन्धेनं[5] ज्ञानमनेकमेकस्मिन्नात्मप्रदेशे समवैति तेन यदा मनः संयुज्यते तदा ज्ञातपूर्वस्यानेकस्य युगपत्स्मरणं प्रसज्यते प्रदेशसंयोगपर्यायाभावादिति । आत्मप्रदेशानामद्रव्यान्तरत्वादेकार्थसमवायस्याविशेषे स्मृतियौगपद्यप्रतिषेधानुपपत्तिः । शब्दसंताने तु श्रोत्रा-

---

त्परतो योजनीयम् । तस्य क्रमात्स्मरणक्रमः । यदि च युगपदुद्बोधकानि तदा

---

१ ख. घ. 'हेतुभा° । २ ङ. °णस्° । ३ क. ङ. °धर्मिणो । ४ ङ. °धः, व्यव° । ५ ङ. °न न ज्ञा° ।

धिष्ठानप्रत्यासत्त्या शब्दश्रवणवत्संस्कारप्रत्यासत्त्या* मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिप्रसङ्गः। पूर्व एव तु प्रतिषेधो नानेकज्ञानसमवायादेकप्रदेशे युगपत्स्मृतिप्रसङ्ग इति॥ ३४॥

भा०—यत्पुरुषधर्मो ज्ञानमन्तःकरणस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्मा इति कस्यचिद्दर्शनं तत्प्रतिषिध्यते—

**ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३५॥**

अयं खलु जानीते तावदिदं सुखसाधनमिदं मे दुःखसाधनमिति। ज्ञात्वा सुखसाधनमाप्तुमिच्छति दुःखसाधनं हातुमिच्छति। प्राप्तुमिच्छाप्रयुक्तस्यास्य सुखसाधनावाप्तये समीहाविशेष आरम्भः। जिहासाप्रयुक्तस्य दुःखसाधनपरिवर्जनं निवृत्तिः। एवं ज्ञानेच्छाप्रयत्नद्वेषसुखदुःखानामेकेनाभिसंबन्धः। एककर्तृत्वं ज्ञानेच्छाप्रवृत्तीनां समानाश्रयत्वं च। तस्माज्ज्ञस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्मा नाचेतनस्येति+। आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात्परत्रानुमानं वेदितव्यमिति॥ ३५॥

---

तावद्विषयकस्मरणमिष्यत एव यथा पदज्ञानादाविति मन्तव्यम्॥ ३४॥

वृ०—नन्विच्छादीनां मनोधर्मत्वात्तेषां ज्ञानजन्यत्वात्सामानाधिकरण्येन च तत्र कार्यकारणभावात्कथं ज्ञानस्याऽऽत्मगुणत्वमित्याशङ्कायां सिद्धान्तसूत्रम्। ज्ञस्य ज्ञानवत आत्मन इच्छादयः। हेतुमाह—आरम्भनिवृत्त्योरिच्छाद्वेषनिमित्तत्वादिति। प्रवृत्तिनिवृत्त्योरिच्छाद्वेषजन्यत्वात्तत्र सामानाधिकरण्येन ज्ञानस्य हेतुत्वमिति भावः। यद्वा ज्ञस्य ज्ञानवतो याविच्छाद्वेषौ तन्निमित्तत्वादित्यर्थः। तथा च ज्ञानेच्छाप्रयत्नानां सामानाधिकरण्यं नासिद्धम्॥ ३५॥

---

* नन्वत्र का प्रत्यासत्तिः, नहि संस्काराणां संनिकृष्टविप्रकृष्टभावोऽस्ति समानदेशत्वादिति चेत्। शृणु। न ब्रूमः संनिकृष्टता प्रत्यासत्तिः। किंतु संस्कारस्य सहकारिकारणसमवधानं प्रत्यासत्तिः। यथा शब्दाः संतानवर्तिनः सर्वेऽप्याकाशे समवयन्ति समानदेशत्वेऽपि यस्योपलब्धिकारणानि सन्ति स उपलभ्यते नेतरे तथा संस्कारेष्वपीति भावः।

\+ अयं भावः—इच्छादीनां ज्ञानसामानाधिकरण्येनोपलब्धेर्यदीयानामिच्छादीनामन्यस्याप्रत्यक्षीकरणात्तत्करणे वा मैत्रगतानां चैत्रेणापि ग्रहणप्रसङ्गादन्तःकरणवृत्तीनां च गुणान्तराणां नित्याप्रत्यक्षत्वादात्माश्रिता एवेच्छादयो नान्तःकरणाश्रया इति।

---

१ ग. ज्ञात्वा सु°। ख. घ. ज्ञानत्सुख°।

भा०-अत्र भूतचैतनिक आह--

तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥ ३६ ॥

आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति यस्याऽऽरम्भनिवृत्ती तस्येच्छाद्वेषौ तस्य ज्ञानमिति प्राप्तं पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति चैतन्यम् ॥ ६ ॥

परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३७ ॥

भा०-शरीरचैतन्यनिवृत्तिरारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति प्राप्तं परश्वादेः कारणस्याऽऽरम्भनिवृत्तिदर्शनाच्चैतन्यमिति । अथ शरीरस्येच्छादिभिर्योगः, परश्वादेस्तु करणस्याऽऽरम्भनिवृत्ती व्यभिचरतः, न तर्ह्ययं हेतुः पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति । अयं तर्ह्यन्योऽर्थः-'तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः' (३।२।३६) पृथिव्यादीनां भूतानामारम्भस्तावत्त्रसस्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषः । लोष्टादिषु लिङ्गाभावात्प्रवृत्तिविशेषाभावो निवृत्तिः । आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति पार्थिवाद्येष्वणुषु तद्दर्शनादिच्छाद्वेषयोस्तद्योगाज्ज्ञानयोग इति सिद्धं भूतचैतन्यमिति ।

कुम्भादिष्वनुपलब्धेरहेतुः* । कुम्भादिमृदवयवानां व्यूहलिङ्गप्रवृत्तिविशेष आरम्भः । सिकतादिषु प्रवृत्तिविशेषाभावो निवृ-

---

वृ०---नन्वस्तु तेषां सामानाधिकरण्यं परंतु तेषामधिकरणं कायाकारः पार्थिवादिपरमाणुपुञ्ज एवेति चार्वाकः शङ्कते---पार्थिवाद्येषु देहेषु ज्ञानादेर्न प्रतिषेधः । कुतः । इच्छाद्वेषयोस्तल्लिङ्गत्वादारम्भनिवृत्तिलिङ्गकत्वात् । तयोश्चेष्टाविशेषलिङ्गकत्वाच्चेष्टायाश्च शरीरे प्रत्यक्षसिद्धत्वादिति भावः ॥ ३६ ॥

वृ०---समाधित्सुः प्रतिबन्दिमाह---आरम्भनिवृत्त्यनुमापकक्रियाविशेषद-

---

* अस्य सूत्रत्वेनोल्लेखः क्वचिद्दृश्यते ।

---

१ क. च. °रीरे चै° । २ क. च. तर्ह्युभयं । ३ ग. °म्भस्तु स ।

त्तिः। न च मृत्सिकतानामारम्भनिवृत्तिदर्शनादिच्छाद्वेषप्रयत्नज्ञानैर्योगः। तस्मात्तल्लिङ्गत्वादिच्छाद्वेषयोरित्यहेतुरिति ॥३७॥

नियमानियमौ तु तद्विशेषकौ ॥ ३८ ॥

भा०—तयोरिच्छाद्वेषयोर्नियमानियमौ विशेषकौ भेदकौ। ज्ञस्येच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती न स्वाश्रये किं तर्हि प्रयोज्याश्रये।* तत्र प्रयुज्यमानेषु भूतेषु प्रवृत्तिनिवृत्ती स्तः, न सर्वेषु इत्यनियमोपपत्तिः। यस्य तु ज्ञत्वाद्भूतानामिच्छाद्वेषनिमित्ते आरम्भनिवृत्ती स्वाश्रये तस्य नियमः स्यात्। यथा भूतानां गुणान्तरनिमित्ता प्रवृत्तिर्गुणप्रतिबन्धाच्च निवृत्तिर्भूतमात्रे भवति नियमेन, एवं भूतमात्रे ज्ञानेच्छाद्वेषनिमित्तप्रवृत्तिनिवृत्ती स्वाश्रये स्यातां न तु भवतः। तस्मात्प्रयोजकाश्रिता ज्ञानेच्छाद्वेषप्रयत्नाः प्रयोज्याश्रये तु प्रवृत्तिनिवृत्ती इति सिद्धम्।

एकशरीरे तु ज्ञातृबहुत्वं निरनुमानम्। भूतचैतनिकस्यैकशरीरे बहूनि भूतानि ज्ञानेच्छाद्वेषप्रयत्नगुणानीति ज्ञातृबहुत्वं प्राप्तम्, ओमिति ब्रुवतः प्रमाणं नास्ति। यथा नानाशरीरेषु नानाज्ञातारो बुद्ध्यादिगुणव्यवस्थानात्, एवमेकशरीरेऽपि

---

र्शनात्परश्वादिषु ज्ञानादिसिद्धिप्रसङ्गः। तस्मात्क्रियाविशेषाणां प्रयत्नादिजन्यत्वं संबन्धान्तरेण न तु समवायेन व्यभिचारादिति भावः ॥ ३७ ॥

वृ०—स्वमते व्युत्पादयति—तद्विशेषकौ तयोश्चेतनाचेतनयोर्विशेषकावितरव्यावर्तकौ। नियमानियमौ समवायेन जन्यतानियमतदभावौ समवायेन ज्ञानेच्छादीनां चेतनधर्मत्वादवच्छेदकतया च शरीरे तेषां जन्यजनकभावः।

---

* प्रयुज्यमानभूतविषयत्वं प्रवृत्तिनिवृत्त्योर्नियमः। यानि भूतानि प्रयुज्यन्ते तेष्वेव प्रवृत्तिनिवृत्ती भवतो न सर्वेषु। यदि पुनर्ज्ञत्वाद्भूतानां प्रवृत्तिनिवृत्ती स्यातां तर्हि भूतमात्रे स्याताम्। यथा गुरुत्वादिभ्यः। यानि गुरुत्वादिमन्ति भूतानि तानि स्वगुणात्पतन्तीति नियमश्च दृष्टः। तस्मान्न भूतानि चेतनानीति बोध्यम्।

बुद्ध्यादिव्यवस्थानुमानं स्याज्ज्ञातृबहु*त्वस्येति ।

दृष्टश्चान्यान्यगुणनिमित्तः प्रवृत्तिविशेषो भूतानां सोऽनुमानमन्यत्रापि । दृष्टः कारणलक्षणेषु भूतेषु परश्वादिषूपादानलक्षणेषु च मृत्प्रभृतिष्वन्यगुणनिमित्तः प्रवृत्ति+विशेषः सोऽनुमानमन्यत्रापि त्रसस्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषो भूतानामन्यगुणनिमित्त इति । स च गुणः प्रयत्नसमानाश्रयः संस्कारो धर्माधर्मसमाख्यातः सर्वार्थः पुरुषार्थाराधनाय प्रयोजको भूतानां प्रयत्नवदिति । आत्मास्तित्वहेतुभिरात्मनित्यत्वहेतुभिश्च भूतचैतन्यप्रतिषेधः कृतो वेदितव्यः । 'नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्' ( ३ । २ । १९ ) इति च समानः प्रतिषेध इति । क्रियामात्रं क्रियोपरममात्रं च प्रवृत्तिनिवृत्ती इत्यभिप्रेत्योक्तम् । 'तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः' ( ३।२।३६ ) अन्यथा त्विमे आरम्भनिवृत्ती आख्याते न च तथाविधे पृथिव्यादिषु दृश्येते । तस्मादयुक्तं 'तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः' इति ॥ ३८ ॥

भा०—भूतेन्द्रियमनसां समानः प्रतिषेधो मनस्तूदाहरणमात्रम्—

**यथोक्तहेतुत्वात्पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ३९ ॥**

'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति, (१।१।१० )

---

परश्वादौ यत्नविशेषतया क्रिया । वस्तुतस्तु चेष्टैव परश्वादिक्रियाजनिका यत्नादेस्तद्धेतुत्वे मानाभावः ॥ ३८ ॥

वृ०—इच्छादीनां मनोगुणत्वाभावे युक्त्यन्तरमाह—इच्छादय इति शेषः ।

---

* यथा हि मदिरावयवेष्वपि प्रत्येकमेव मदशक्तिरस्ति न तु समुदायमात्रसमवायिनी तथा शरीरावयवेष्वपीति प्रत्येकमेव चैतन्येन भवितव्यम् । न च वैयात्यात्कायसमुदायाश्रयमेव चैतन्यं नावयवाश्रयमिति शक्यमास्थातुम् । त्रिचतुरावयवच्छेदेऽपि चैतन्योपलम्भात् । तस्मादवयवानां प्रत्येकं चैतन्ये सति एकस्मिञ्छरीरे बहवश्चेतनाः स्युः । भवतु किं नो बाध्यत इति चेन्न । स्वतन्त्राणां तेषां विरुद्धाभिप्रायत्वे न किंचिदपि कार्यं जायेतेति भावः । + हिताहितप्राप्तिपरिहारहेतुः परिस्पन्दः प्रवृत्तिविशेषः । तथा च प्रयोगः—त्रसस्थावरशरीरेषु प्रवृत्तिः स्वाश्रयव्यतिरिक्ताश्रयगुणनिमित्ता प्रवृत्तिविशेषत्वात्परश्वादिगतप्रवृत्तिवदिति ।

इत्यतः प्रभृति यथोक्तं संगृह्यते तेन भूतेन्द्रियमनसां चैतन्यप्रतिषेधः। पारतन्त्र्यात्—परतन्त्राणि भूतेन्द्रियमनांसि धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात्प्रवर्तन्ते। चैतन्ये पुनः स्वतन्त्राणि स्युरिति। अकृताभ्यागमाच्च—'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति' (१।१।१७) चैतन्ये भूतेन्द्रियमनसां परकृतं कर्म पुरुषेण भुज्यत इति स्यात्। अचैतन्ये तु तत्साधनस्य स्वकृतकर्मफलोपभोगः पुरुषस्येत्युपपद्यत इति ॥ ३९ ॥

भा०—अथायं सिद्धोपसंग्रहः+—

परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४० ॥

आत्मगुणो ज्ञानमिति प्रकृतम्। परिशेषो नाम प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणसंप्रत्ययः। भूतेन्द्रियमनसां प्रतिषेधे

---

यथोक्तहेतुत्वाज्ज्ञानेच्छादीनां सामानाधिकरण्येन कार्यकारणभावात्। पारतन्त्र्यान्मनसश्चेतनसहकारित्वादिच्छादयो न तद्गुणाः। वस्तुतस्त्विच्छादीनां पारतन्त्र्यात्पराधीनविषयताशालित्वात्। इच्छादीनां हि समानाधिकरणस्वजनकज्ञानविषयतैव विषयता। ज्ञानवैयधिकरण्ये च तन्न स्यादिति भावः। स्वकृतात्स्वयंकृतात्कर्मणोऽभ्यागमो भोगः स मनसो यत्नादिसत्त्वे न स्यात्। न ह्यन्यकृतात्कर्मणो भोगः। न वा भोगोऽपि मनसः। भोक्तुर्बन्धमोक्षादिभागिन एवाऽऽत्मत्वात्तद्भिन्न आत्मनि मानाभावात्। आत्मनः सुखादिसाक्षात्कारानुरोधान्महत्त्वं मनसश्च धर्मिग्राहकमानादणुत्वमतोऽपि नैक्यम्। न च मनसः परमाणुत्वाल्लाघवाच्च नित्यत्वं त्वन्मतम्, तथा चाऽऽत्ममनसोर्नित्यत्वात्सदाज्ञानादिप्रसङ्गादनिर्मोक्षः स्यादतोऽन्तःकरणस्यानित्यत्वं तन्नाशश्च मोक्ष इति वाच्यम्। अदृष्टाद्यभावेन नित्ययोरपि वन्ध्ययोरिव फलाजनकत्वात्। न च ज्ञानादिकं प्रक्रम्य 'इत्येतत्सर्वं मन एव' इति श्रुतेर्मनस एव ज्ञानादिकमभेदमुखेनोपादानोपादेयभावकथनादिति वाच्यम्। अन्नं वै प्राण इत्यादौ निमित्तेऽपि दर्शनात्कारणत्वमात्रे तात्पर्यादिति तत्त्वम् ॥ ३९ ॥

वृ०—आत्मगुणत्वमुपसंहरति—इच्छादिकमात्मगुण इत्यादिः। हेतुमाह—परिशेषाच्छरीरादिहेतुनिरासात्। यथोक्तहेतूनाम् 'दर्शनस्पर्शनाभ्यामेकार्थग्रह-

---

* शरीरस्य चैतन्ये कर्तुर्भस्मीभावेन फलानुपभोगः, अकर्तुः शरीरान्तरस्याकृतकर्मफलाभ्यागम इत्यर्थः। + उपसंहार इत्यर्थः।

---

१ क. ङ. च. °माणं सं°।

द्रव्यान्तरं न प्रसज्यते शिष्यते चाऽऽत्मा तस्य गुणो ज्ञानमिति ज्ञायते । यथोक्तहेतूपपत्तेश्चेति ' दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ' ( ३ । १ । १ ) इत्येवमादीनामात्मप्रतिपत्तिहेतूनामप्रतिषेधा*दिति । परिशेषज्ञापनार्थं प्रकृतस्थापनादिज्ञानार्थं च यथोक्तहेतूपपत्तिवचनमिति । अथवोपपत्तेश्चेति हेत्वन्तरमेवेदं नित्यः खल्वयमात्मा यस्मादेकस्मिञ्छरीरे धर्मं चरित्वा काय+भेदात्स्वर्गे देवेषूपपद्यते, अधर्मं चरित्वा देहभेदान्नरकेषूपपद्यत इति । उपपत्तिः शरीरान्तरप्राप्तिलक्षणा सा सति सत्त्वे नित्ये चाऽऽश्रयवती । बुद्धिप्रबन्धमात्रे तु निरात्मका निराश्रया नोपपद्यत इति । एकसत्त्वाधिष्ठानश्चानेकशरीरयोगः संसार उपपद्यते शरीरप्रबन्धोच्छेदश्चापवर्गो मुक्तिरित्युपपद्यते । बुद्धिसंततिमात्रे त्वेकसत्त्वानुपपत्तेर्न कश्चिद्दीर्घमध्वानं संधावति न कश्चिच्छरीरप्रबन्धाद्विमुच्यत इति संसारापवर्गानुपपत्तिरिति । बुद्धिसंततिमात्रे च सत्त्वभेदात्सर्वमिदं प्राणिव्यवहारजातमप्रतिसंहितम×व्यावृत्तमपरिनिष्ठितं स्यात् । ततः स्मरणाभावान्नान्यदृष्टमन्यः स्मरतीति । स्मरणं च खलु पूर्वज्ञातस्य समानेन ज्ञात्रा ग्रहणम्, अज्ञासिषमहममर्थं ज्ञेयमिति । सोऽयमेको ज्ञाता पूर्वज्ञातमर्थं गृह्णाति । तच्चास्य ग्रहणं स्मरणमिति । तद्बुद्धिप्रबन्धमात्रे निरात्मके नोपपद्यते ॥ ४० ॥

---

णात् ' ( ३ । १ । १ ) इत्यादीनामुपपत्तेरुपपन्नत्वात् ॥ ४० ॥

---

* अप्रतिषेधादिति उपपत्तिपदस्य व्याख्यानं बोध्यम् । + भेदाद्विनाशादित्यर्थः । × समारब्धं ममैव समापनीयमिति प्रतिसंधाय पूर्वेद्युररर्धकृतानाम द्येयुः परिसमापना दृष्टा । अप्रतिसंधाने तु न समापयेयुः । परिसमापने वा चैत्रारब्धमचैत्रः समापयेत् । यतः स्वयमारब्धात्परारब्धमव्यावृत्तमविशिष्टं स्वस्यापि परत्वात् । अपरिनिष्ठितं च कर्मजातं स्यात् । तथाहि—वैश्यस्तोमे वैश्य एवाधिकारी न ब्राह्मणराजन्यौ । एवं राजसूये राजैव न ब्राह्मणो वैश्यो वा । एवं सोमसाधनके ब्राह्मण एवाधिकृतो न राजन्यवैश्यौ शूद्रश्चानधिकृत एवेति परिनिष्ठा सा बुद्धिसंततिमात्रे न स्यात् । कुत इति चेत् । त्रैलोक्यवैलक्षण्येन सलक्षणानां सर्वेषामेव भेदात् । अन्यापोहसामान्यस्य च व्यावर्तितत्वादिति भावः ।

---

२ क. च. निष्ठनं च स्या° ।

स्मरणं त्वात्मनो ज्ञस्वा*भाव्यात् ॥ ४१ ॥

भा०—उपपद्यत इति। आत्मन एव स्मरणं न बुद्धिसंततिमात्रस्येति। तुशब्दोऽवधारणे। कथम्। ज्ञस्वभावत्वात्। ज्ञ इत्यस्य स्वभावः स्वो धर्मः, अयं खलु ज्ञास्यति जानाति अज्ञासीदिति त्रिकालविषयेणानेकेन ज्ञानेन संबध्यते तच्चास्य त्रिकालविषयं ज्ञानं प्रत्या मवेदनीयं ज्ञास्यामि जानामि अज्ञासिषमिति वर्तत तत्रस्यायं स्वो धर्मस्तस्य स्वत्वं न बुद्धिप्रबन्धमात्रस्य निरात्मकस्येति ॥४१॥

भा०—स्मृतिहेतूनामयौगपद्याद्युगपदस्मरणमित्युक्तम् +। अथ केभ्यः स्मृतिरुत्पद्यते। स्मृतिः खलु—

प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसंबन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥ ४२ ॥

सुस्मूर्षया मनसो धारणं × प्रणिधानम्, सुस्मूर्षितलिङ्गचिन्तनं चार्थस्मृतिकारणम्। निबन्धः खल्वेकग्रन्थोपयमोऽर्थानाम्,

---

वृ०—स्मृतेरात्मगुणत्वमर्थसिद्धमपि शिष्यबुद्धिवैशद्याय पृथग्व्युत्पादयति—तुरप्यर्थे। ज्ञस्वाभाव्याज्ज्ञानवत्स्वाभाव्यात्। ज्ञानत्वावच्छिन्नवत्त्वं ह्यात्मनः स्वभावः। स्मृतेश्च ज्ञानत्वावच्छिन्नत्वात्तद्धर्मत्वमर्थातिसिद्धम्। यद्वा ज्ञस्वाभाव्यात्स्मृतिहेतुज्ञानस्याऽऽत्मवृत्तित्वसिद्धेः स्मृतेरात्माश्रितत्वमपि सिद्धम्। परे तु—ज्ञानस्याऽऽशुविनाशित्वात्कथं स्मृतिहेतुतेत्यत्राऽऽह—स्मरणमित्यादि। ज्ञानवतः स्वभावः संस्कारस्तस्मादित्यर्थ इत्याहुः ॥ ४१ ॥

वृ०—स्मृतेर्यौगपद्यसमाधानाय प्रणिधानादीनामुद्बोधकानां क्रमो हेतुरुक्तः। तत्र प्रणिधानादीनि दर्शयति। स्मरणमित्यनुवर्तते। निमित्तशब्दस्य द्वंद्वात्परं

---

* त्रिकालव्यापिनी ज्ञानशक्तिरेव ज्ञस्वाभाव्यं तद्वयाकाशादिभ्यो व्यावृत्तं त्रिकालव्यापि स्वरूपमेवाऽऽत्मन इति भावः। + सिंहावलोकनन्यायेन स्मृतिहेतूनामयौगपद्यादित्येतत्पृच्छत्यनन्तरसूत्रमवतारयितुम्। × तेषु तेषु प्रसक्तस्य मनसस्ततो निवारणमित्यर्थः।

एकग्रन्थोपयताः खल्वर्था अन्योन्यस्मृतिहेतव आनुपूर्व्येणेतरथा* वा भवन्तीति । +धारणाशास्त्रकृतो वा प्रज्ञातेषु वस्तुषु स्मर्तव्यानामुपनिक्षेपो निबन्ध इति । अभ्यासस्तु समाने विषये ज्ञानानामभ्यावृत्तिः, अभ्यासजनितः संस्कार आत्मगुणोऽभ्यासशब्देनोच्यते । स च स्मृतिहेतुः समान इति । लिङ्गं पुनः संयोगि समवाय्येकार्थसमवायि विरोधि चेति । संयोगि यथा धूमोऽग्नेः, गोर्विषाणम्, पाणिः पादस्य, रूपं ÷ स्पर्शस्य, अभूतं भूतस्येति । × लक्षणम् । पश्ववयवस्थं गोत्रस्य स्मृतिहेतुः, विदानामिदं गर्गाणामिदमिति । सादृश्यम्—चित्रगतं प्रतिरूपकं देवदत्तस्येत्येवमादि । परिग्रहात्—स्वेन वा स्वामी स्वामिना वा स्वं स्मर्यते । आश्रयात्—ग्रामण्या तदधीनं स्मरति । आश्रितात्—तदधीनेन ग्रामण्यमिति । संबन्धात्—अन्तेवासिना गुरुं स्मरति ऋत्विजा याज्यमिति । आनन्तर्यात्—इतिकरणीये-

---

श्रुतस्य प्रत्येकमभेदेनान्वयः । प्रणिधानम्—मनसो विषयान्तरसंचारवारणम् । निबन्धः—एकग्रन्थोपनिबन्धनम् । यथा प्रमाणेन प्रमेयादिस्मरणम् । अभ्यासः संस्कारबाहुल्यम् । एतस्य यद्यपि नोद्बोधकत्वं तथाऽपि तादृशे शीघ्रमुद्बोधकसमाधानं स्यादित्याशयेन तदुपन्यासः । अभ्यासो दृढतरसंस्कार उद्बोधकत्वेनोक्त इति केचित् । लिङ्गम्—व्याप्यं व्यापकस्य स्मारकम् । लक्षणम्—यथा कपिध्वजादि अर्जुनादेः । सादृश्यम्—देहादेः । परिग्रहः—स्वीकारः । तस्य स्वस्वामिभावोऽर्थः । तदेकतरेणान्यतरस्मरणम् । आश्रयाश्रितौ—राजादितत्परिजनौ परस्परस्मारकौ । संबन्धः—गुरुशिष्यभावादिः । गोवृषन्याया-

---

* यथा निग्रहस्थानानि स्मृत्वा प्रमाणानि स्मरति । + धारणाशास्त्रं हि जैगीषव्यादिप्रोक्तं तत्कृतो ज्ञातेषु वस्तुषु नाडीचक्रहृत्पुण्डरीककण्ठकूपनासाग्रतालुललाटब्रह्मरन्ध्रादिषु स्मर्तव्यानां बीजसंस्थानाभरणभृतां देवतानामुपनिक्षेपः समारोपः । तथा च तत्र तत्र देवताः समारोपितास्तत्तदवयवग्रहणात्स्मर्यन्त इत्यर्थः । ÷ एकस्यावयविनोऽर्थस्य समवायोऽत्रेति समासे पाणिः पादस्येत्युदाहरणम् । अवयव्यपेक्षया पाणिपादयोः पार्थक्येन स्वीकाराभावात् । एकस्मिन्नर्थे समवायोऽस्येति समासे तु रूपं स्पर्शस्येति । द्रव्यापेक्षया रूपस्पर्शयोः पार्थक्येन स्वीकारात् । उभयत्रापि समवायसंबन्ध एवेत्यन्यदेतत् ।
× स्वाभाविकाविनाभावयुक्तं लिङ्गम्, सांकेतिकं तु लक्षणमिति विशेषः ।

ष्वर्थेषु । वियोगात्–येन विप्रयुज्यते तद्वियोगप्रतिसंवेदी भृशं स्मरति । एककार्यात्–कर्त्रन्तरदर्शनात्कर्त्रन्तरे स्मृतिः । विरोधात्–विजिगीषमाणयोरन्यतरदर्शनादन्यतरः स्मर्यते । अतिशयात्–येनातिशय उत्पादितः । प्राप्तेः–यतोऽनेन किंचित्प्राप्तमाप्तव्यं वा भवति तमभीक्ष्णं स्मरति । व्यवधानात्–कोशादिभिरसिप्रभृतीनि स्मर्यन्ते । सुखदुःखाभ्याम्–तद्धेतुः स्मर्यते । इच्छाद्वेषाभ्याम्–यमिच्छति यं च द्वेष्टि तं स्मरति । भयात्—यतो बिभेति । अर्थित्वात्—येनार्थी भोजनेनाऽऽच्छादनेन वा । क्रियया–रथेन रथकारं स्मरति । रागात्–यस्यां स्त्रियां रक्तो भवति तामभीक्ष्णं स्मरति । धर्मात्—जात्यन्तरस्मरणमिह चाधीतश्रुतावधारणमिति । अधर्मात्–प्रागनुभूतदुःखसाधनं स्मरति । न चैतेषु निमित्तेषु युगपत्संवेदनानि भवन्तीति युगपदस्मरणमिति । * निदर्शनं चेदं स्मृतिहेतूनां न परिसंख्यानमिति ॥४२॥

इति बुद्ध्यात्मगुणत्वप्रकरणम् ॥ ३ ॥

---

त्पृथगुक्तः । आनन्तर्यम्—प्रोक्षणावघातादेः । वियोगः—यथा दारादेः । एककार्याः—अन्तेवासिप्रभृतयः परस्परस्मारकाः । विरोधात्—अहिनकुलादेरन्यतरेणापरस्मरणम् । अतिशयः—संस्कार उपनयनादिराचार्यस्मारकः । प्राप्तिः—धनादेर्दातारं स्मारयति । व्यवधानम्—आवरणम् । यथा खड्गादेः कोपादिः । सुखदुःखयोः—अन्यतरेणापरस्य ताभ्यां तत्प्रयोजकस्य वा स्मरणम् । इच्छाद्वेषौ—यद्विषयकतया गृहीतौ तस्य स्मारकौ । भयम्—मरणादेर्भयहेतोर्वा स्मारकम् । अर्थित्वम्–दातुः । शाखादेः क्रिया–वाय्वादेः । रागात्—प्रीतेः पुत्रादेः स्मरणम् । धर्माधर्माभ्याम्—जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतसुखादेश्च स्मरणमिति । उक्तेषु च किंचित्स्वरूपसत्किंचिच्च ज्ञातमुद्बोधकम् । शिष्यव्युत्पादनाय चायं प्रपञ्चः ॥ ४२ ॥

इति बुद्ध्यात्मगुणत्वप्रकरणम् ॥ ३ ॥

---

* ननून्मादादयोऽपि स्मृतिहेतवो लोकसिद्धास्तत्किं तेऽपि नोक्ता इत्याशङ्क्याऽऽह—निदर्शनमिति ।

---

१ क. च. 'तो येन ।

भा०—अनित्यायां च बुद्धावुत्पन्नापवर्गित्वात्कालान्तरावस्थानाच्च नित्यानां संशयः किमुत्पन्नापवर्गिणी बुद्धिः शब्दवदाहोस्वित्कालान्तरावस्थायिनी कुम्भवदिति । * उत्पन्नापवर्गिणीति पक्षः परिगृह्यते । कस्मात्—

कर्मानवस्थायिग्रहणात् ॥ ४३ ॥

कर्मणोऽनवस्थायिनो ग्रहणादिति क्षिप्तस्येषोरापतनात्क्रियासंतानो गृह्यते । प्रत्यर्थनियमाच्च बुद्धीनां क्रियासंतानवद्बुद्धिसंतानोपपत्तिरिति । अवस्थितग्रहणे च व्यवधीयमानस्य प्रत्यक्षनिवृत्तेः । अवस्थिते च कुम्भे गृह्यमाणे संतानेनैव बुद्धिर्वर्तते प्राग्व्यवधानात् । तेन व्यवहिते प्रत्यक्षं ज्ञानं निवर्तते । कालान्तरावस्थाने तु बुद्धेर्दृश्यव्यवधानेऽपि प्रत्यक्षमवतिष्ठेतेति । स्मृतिश्चालिङ्गं बुद्ध्यवस्थाने संस्कारस्य बुद्धिजस्य स्मृतिहेतुत्वात् । यश्च मन्येतावतिष्ठते बुद्धिः, दृष्टा हि बुद्धिविषये स्मृतिः । सा च बुद्धावनित्यायां कारणाभावान्न स्यादिति । तदिदमलिङ्गम् । कस्मात् । बुद्धिजो हि संस्कारो गुणान्तरं स्मृतिहेतुर्न बुद्धिरिति ।

---

वृ० बुद्धेर्बुद्ध्यन्तराद्विनाश उक्तः । स च तृतीयक्षणवर्तिध्वंसप्रतियोगित्वसिद्धौ स्यादतो बुद्धेरुत्पन्नापवर्गित्वं व्युत्पादनीयम् । तत्र सिद्धान्तसूत्रम् । शरीरादिकर्मधाराया अनवस्थायिन्याः प्रत्यक्षधाराऽपि वाच्या । न चाऽऽद्यबुद्धेरुत्तरोत्तरग्राहकत्वम् । विरम्य व्यापाराभावात् । पूर्वपूर्वस्य च परपरतोऽ-

---

* अन्येभ्यो विनाशिभ्य आशुतरं विनश्यतीत्यर्थः । न त्वयमर्थ उत्पत्त्युत्तरक्षण एव नश्यतीति । किंतु प्रथमक्षण उत्पत्तिर्द्वितीयक्षणे स्थितिस्तृतीयक्षणे नाश इति । अपेक्षाबुद्धिस्तु क्षणत्रयं तिष्ठति नाम प्रथमक्षण उत्पत्तिर्द्वितीयतृतीयक्षणयोः स्थितिश्चतुर्थक्षणे नाश इति । अत्रायं प्रयोगः—बुद्धिराशुतरविनाशिनी जातिमत्त्वे सति अस्मदादिप्रत्यक्षत्वे सति व्यापकद्रव्यसमवायाच्छब्दवदिति । आत्मत्वे व्यभिचारवारणायाऽऽद्यं विशेषणम् । आत्मगतपरममहत्परिमाणे व्यभिचारवारणाय द्वितीयम् । घटादौ व्यभिचारवारणाय विशेष्यं व्यापकत्वविशेषणं च । अथवा बुद्धिराशुतरविनाशिनी गुणत्वे सत्यबाह्यकरणप्रत्यक्षत्वात्सुखवदिति । सुखत्वादौ व्यभिचारवारणाय विशेषणमिति ।

---

१ क. ग. च प्राग्व्यव ।

हेत्वभावादयुक्तमिति चेद्बुद्ध्यवस्थानात्प्रत्यक्षत्वे स्मृत्यभावः। यावदवतिष्ठते बुद्धिस्तावदसौ बोद्धव्योऽर्थः प्रत्यक्षः प्रत्यक्षे च स्मृतिरनुप*पन्नेति ॥ ४३ ॥

अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्सं-
पाते रूपाव्यक्तग्रहणवत् ॥ ४४ ॥

भा०–यद्युत्पन्नापवर्गिणी बुद्धिः प्राप्तमव्यक्तं बोद्धव्यस्य ग्रहणम्। यथा विद्युत्संपाते वैद्युतस्य प्रकाशस्यानवस्थानादव्यक्तं रूपग्रहणमिति। व्यक्तं तु द्रव्याणां ग्रहणं तस्मादयुक्तमेतदिति ॥ ४४ ॥

हेतूपादानात्प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४५ ॥

भा०—उत्पन्नापवर्गिणी बुद्धिरिति प्रतिषेद्धव्यं तदेकत्राभ्यनुज्ञायते विद्युत्संपाते रूपाव्यक्तग्रहणवदिति। यत्राव्यक्तं ग्रहणं तत्रोत्पन्नापवर्गिणी बुद्धिरिति।

ग्रहणहेतुविकल्पाद्ग्रहणविकल्पो न बुद्धिविकल्पात्। यदिदं क्वचिदव्यक्तं क्वचिद्व्यक्तं ग्रहणमयं[2] विकल्पो ग्रहणहेतुविकल्पात्।

---

ननुभवाद्विनाशसिद्धावाश्रयनाशादेरभावाद्विरोधिगुणस्यैव नाशकत्वमिति। कर्मवद्बुद्धेरनवस्थायित्वग्रहणादिति वाऽर्थः ॥ ४३ ॥

वृ०–शङ्कते—बुद्धिर्यद्याशुविनाशिनी स्याद्योग्याशेषविशेषधर्मविशिष्टधर्मिग्राहिणी न स्याद्विद्युत्संपातकालीनवस्तुग्रहणवत्। न चैवम्। तस्मान्न तथेत्यर्थः ॥ ४४ ॥

वृ०–उत्तरयाति—प्रतिषेद्धव्यस्य बुद्धेराशुविनाशित्वस्याभ्यनुज्ञा त्वया कृत

---

* बुद्धेः स्थिरत्वे घटप्रत्यक्षानन्तरं व्यवधानेऽपि घटं साक्षात्करोमीत्यनुव्यवसायप्रसङ्गः। अतो बुद्धेर्न स्थिरत्वम्। कालान्तरे स्मृतिस्तु तज्जन्यसंस्कारनिमित्तिका, न तु बुद्धिस्थैर्यनिमित्तिका। बुद्धेरनवस्थायित्वे प्रमाणं तु स्मृतिरेव। प्रत्यक्षनिरोधे सति तत्पूर्वकविषयप्रतिसंधेरेव स्मृतित्वात्प्रत्यक्षस्थैर्ये तदनुपपत्तेः।

---

१ क. °हणे हे°। २ क. °यं म°।

यत्रानवस्थितो ग्रहणहेतुस्तत्राऽव्य*क्तं ग्रहणं यत्रावस्थितस्तत्र व्यक्तं न तु बुद्धेरवस्थानानवस्थानाभ्यामिति ।

भा०—कस्मात्—

अर्थग्रहणं हि बुद्धिः । यत्तदर्थग्रहणमव्यक्तं व्यक्तं वा बुद्धिः सेति । विशेषाग्रहणे च सामान्यग्रहणमात्रमव्यक्तग्रहणं तत्र विषयान्तरे बुद्ध्यन्तरानुत्पत्तिर्निमित्ताभावात् । यत्र समानधर्मयुक्तश्च धर्मी गृह्यते विशेषधर्मयुक्तश्च तद्व्यक्तं ग्रहणम् । यत्र तु विशेषेऽगृह्यमाणे सामान्यग्रहणमात्रं तदव्यक्तं ग्रहणम् । समानधर्मयोगाच्च विशिष्टधर्मयोगो विषयान्तरं तत्र यद्ग्रहणं न भवति तद्ग्रहणनिमित्ताभावात्, न बुद्धेरनवस्थानादिति । यथाविषयं च ग्रहणं व्यक्तमेव प्रत्यर्थनियतत्वाच्च बुद्धीनाम् । सामान्यविषयं च ग्रहणं स्वविषयं प्रत्यव्यक्तम् । विशेषविषयं च ग्रहणं स्वविषयं प्रति व्यक्तं प्रत्यर्थनियता हि बुद्धयः । तदिदमव्यक्तग्रहणं दर्शितं क्व विषये बुद्ध्यनवस्थानकारितं स्यादिति ।

धर्मिणस्तु धर्मभेदे बुद्धिनानात्वस्य भावाभावाभ्यां तदुपपत्तिः । धर्मिणः खल्वर्थस्य समानाश्च धर्मा विशिष्टाश्च तेषु प्रत्यर्थनियता नाना बुद्धयस्ता उभय्यो यदि धर्मिणि वर्तन्ते तदा व्यक्तं ग्रहणं धर्मिणमभिप्रेत्य । यदा तु सामान्यग्रहणमात्रं तदाऽव्यक्तं ग्रहणमिति । एवं धर्मिणमभिप्रेत्य व्यक्ताव्यक्तयोर्ग्रहणयोरुपपत्तिरिति । न चेदमव्यक्तं ग्रहणं बुद्धर्बोद्धव्यस्य वाऽनवस्थायित्वादुपपद्यत इति ॥ ४५ ॥

---

विद्युत्संपातदृष्टान्तरूपस्य हेतोः साधकस्योपादानात् । तथा चांशतो बाध इति भावः ॥ ४५ ॥

---

* विद्युत्संपातकाल आलोकसंयोगेनैकस्याः सामान्यविषयिण्या बुद्धेरुत्पादेऽपि द्वितीयक्षण आलोकसंयोगाभावेन सहकारिकारणवैकल्याद्विशेषविषयकबुद्धेरनुत्पादादव्यक्तं ग्रहणमिति भावः ।

---

१ ङ. यत्र तद्° । २ ङ. °मात्रं व्य° । ३ ङ. °हणं नि° । ४ ख. ग. घ. ङ. प्रति व्य° ।

भा०—इदं हि न—

प्रदीपार्चिःसंतत्यभिव्यक्त-

ग्रहणवत्तद्ग्रहणम् ॥४६॥

अनवस्थायित्वेऽपि बुद्धेस्तेषां द्रव्याणां ग्रहणं व्यक्तं प्रतिपत्तव्यम्। कथम्। प्रदीपार्चिःसंतत्याभिव्यक्तग्रहणवत्प्रदीपार्चिषां संतत्या वर्तमानानां ग्रहणानवस्थानं ग्राह्यानवस्थानं च प्रत्यर्थनियतत्वाद्बुद्धीनां यावन्ति प्रदीपार्चींषि तावत्यो बुद्धय इति। दृश्यते चात्र व्यक्तं प्रदीपार्चिषां ग्रहणमिति ॥ ४६ ॥

इति बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ॥ ४ ॥

---

भा०—चेतना शरीरगुणः सति शरीरे भावादसति चाभावादिति—

द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४७ ॥

सांशयिकः सति भावः। स्वगुणोऽप्सु द्रवत्वमुपलभ्यते परगुणश्चोष्णता तेनायं संशयः किं शरीरगुणश्चेतना शरीरे गृह्यतेऽथ द्रव्यान्तरगुण इति ॥ ४७ ॥

---

वृ०—अस्तु तर्हि तद्दृष्टान्तेनान्यासां बुद्धीनामनवस्थायित्वमित्याह—यथा प्रदीपार्चिषां संतन्यमानानामनवस्थायित्वेऽप्यभिव्यक्तग्रहणं तथाऽन्यत्रापि स्यात्। विद्युत्संपातस्थले या बुद्धिरुत्पन्ना सा स्वविषये व्यक्तैवेति भावः ॥ ४६ ॥

इति बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ॥ ४ ॥

---

वृ०—अथ बुद्धेः शरीरगुणत्वाभावप्रकरणम्। न च प्रागेव तत्सिद्धेरनारम्भणीयमेतत्। गौरोऽहं जानामीत्याद्यनुभवेन तत्साधकानामाभासीकरणादतो विशिष्य तद्व्युत्पादनाय संशयबीजमाह—द्रव्ये चन्दनादौ रूपादेः परगुणस्य शैत्यादेश्च ग्रहादेवं शरीरे रूपादेरौष्ण्यस्य च ग्रहाद्बुद्ध्यादिः शरीरगुणो न वेति संशयः ॥ ४७ ॥

---

१ ग. 'ह्यन०'।

भा०—न शरीरगुणश्चेतना कस्मात्—

यावच्छरीरभावित्वाद्रूपादीनाम् ॥ ४८ ॥

न रूपादिहीनं शरीरं गृह्यते चेतनाहीनं तु गृह्यते यथोष्णताहीना आपः । तस्मान्न शरीरगुणश्चेतनेति ।

संस्कारवदिति* चेन्न कारणानुच्छेदात्+ । यथाविधे द्रव्ये संस्कारस्तथाविध एवोपरमो न, तत्र कारणोच्छेदादत्यन्तं संस्कारानुपपत्तिर्भवति यथाविधे शरीरे चेतना गृह्यते तथाविध एवात्यन्तोपरमश्चेतनाया गृह्यते । तस्मात्संस्कारवदित्यसमः समाधिः । अथापि शरीxरस्थं चेतनोत्पत्तिकारणं स्याद्द्रव्यान्तरस्थं वोभयस्थं वा । तन्न । नियमहेत्वभावात् । शरीरस्थेन कदाचिच्चेतनोत्पद्यते कदाचिन्नेति नियमे हेतुर्नास्तीति । द्रव्यान्तरस्थेन शरीर एव चेतनोत्पद्यते न लोष्टादिषु इत्यत्र न नियमहेतुरस्तीति । उभ-

---

वृ०—तत्र सिद्धान्तसूत्रम् । 'न शरीरगुणश्चेतना' इति आदौ भाष्यकृतः पूरणम् । न शरीरविशेषगुण इत्यर्थः । अयं तर्काकारः—बुद्ध्यादिकं शरीरविशेषगुणः स्याद्यावच्छरीरभावि स्याद्रूपादिवत् । तत्परिष्कार्यं चानुमानम्—बुद्ध्या-

---

* यथा संस्कारः शरीरगुणो न च यावच्छरीरं वर्तते तथा चेतनाऽपीति भावः ।
+ अयं भावः—संस्कारस्य न शरीरमात्रं कारणम्, किंतु नोदनादिकारणसंनिधाने संस्कारसद्भावस्तदभावे तदभावः । चेतनायास्तु शरीरमात्रं कारणम् । शरीरसत्त्वे चेतनासत्त्वात्तदभावे तदभावात् । एवं च विषमो दृष्टान्त इति । × ननु संस्कारस्य यथा शरीरव्यतिरिक्तं कारणं तथैव चेतनाया अपीति चेत् । अत्रेदं प्रष्टव्यम्—यच्चेतनोत्पत्तिकारणं भवत्संमतं तत्किं शरीरस्थमुत द्रव्यान्तरस्थम् । शरीरस्थमपि किं यावद्द्रव्यभावि उत नैमित्तिकमिति । यदि यावद्द्रव्यभावि तर्हि न कदाचिदपि चेतनाहीनं शरीरमुपलभ्येत । निमित्तस्य संनिहितत्वात् । अथ नैमित्तिकम् । यच्छरीरे चेतनोत्पत्तेर्निमित्तस्य कारणं तत्रापि चेतनावत्प्रसङ्गः । यदि द्रव्यान्तरवृत्तिकारणं शरीरे चेतनां करोति, न द्रव्यान्तरेष्वित्युच्यते तर्हि तत्रापि नियमहेतुर्वक्तव्यः । किं च द्रव्यान्तरस्थं नित्यमनित्यं वा । अनित्यमपि कालान्तरस्थायि प्रतिक्षणध्वंसि वेति चेतनावत्प्रसङ्ग इति भावः ।

---

१ क. ग. च तत्र नि° ।

यस्तस्य निमित्तत्वे शरीरसमानजातीये द्रव्ये चेतना नोत्पद्यते शरीर एव चोत्पद्यत इति नियमहेतुर्नास्तीति ॥ ४८ ॥

भा०—यच्च मन्येत सति श्यामादिगुणे द्रव्ये श्यामाद्युपरमो दृष्ट एवं चेतनोपरमः स्यादिति—

न पाकजगुणान्तरोत्पत्तेः ॥ ४९ ॥

नात्यन्तरूपोपरमो द्रव्यस्य श्यामे रूपे निवृत्ते पाकजं गुणान्तरं रक्तं रूपमुत्पपद्यते शरीरे तु चेतनामात्रोपरमोऽत्यन्तमिति ॥ ४९ ॥

भा०—अथापि—

प्रतिद्वंद्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५० ॥

यावत्सु द्रव्येषु पूर्वगुणप्रतिद्वंद्विसिद्धिस्तावत्सु पाकजोत्पत्तिर्दृश्यते पूर्वगुणैः सह पाकजानामवस्थानस्याग्रहणात् । न च शरीरे चेतनाप्रतिद्वंद्विसिद्धौ सहानवस्थायि गुणा*न्तरं गृह्यते

---

दिकं न शरीरविशेषगुणोऽयावद्द्रव्यभावित्वाच्छब्दवत् । व्यतिरेके रूपवद्वा । अयावद्द्रव्यभावित्वं चाऽऽश्रयत्वाभिमतकालीननाशप्रतियोगित्वम् ॥ ४८ ॥

वृ०—पिठरपाकमते व्यभिचारमाशङ्कते—शरीरे पाकाधीनरूपादिना व्यभिचारान्नोक्तं साधनं युक्तमित्यर्थः । परेतु सिद्धान्तसूत्रमेवेदम् । तथाहि—पाकजरूपेण व्यभिचारः शङ्कनीयः पाकजगुणान्तरस्य रूपान्तरस्योत्पत्तेः । तथा च स्वसमानाधिकरणस्वसमानजातीयासमानकालीनत्वं पूर्वोक्तहेतौ नाशप्रतियोगित्वे विशेषणीयमित्यर्थ इत्याहुः ॥ ४९ ॥

वृ०—सिद्धान्तसूत्रम् । पाकजानां प्रतिद्वंद्विनि पूर्वशरीरप्रतिरूपके शरीरान्तरे सिद्धेः । घटादौ पाकजरूपसम्भवेऽपि शरीरे न तत्संभवः । शरीरावयवानां चर्मादीनामग्निसंयोगविशेषेण नाशावश्यकत्वात् । परे तु पाकजादीनां प्रतिद्वंद्विनोऽग्निसंयोगात्सिद्धेः । तथा च तादृशाग्निसंयोगासमानाधिकरणत्वमर्थस्तेनाग्निसंयोगनाश्येऽग्निसंयोगजन्ये च न व्यभिचार इत्याहुः । अन्ये तु शरीरगुण-

---

* ननु अचेतनैव शरीरे गुणान्तरमिति चेत् । मैवम् । रूपतोऽनिर्देशात् । यद्धि अचेतनत्वं तत्किं चेतनाविपरीतं धर्मभूतं वस्तु आहोस्विच्चेतनाप्रतिषेधमात्रम् । आद्ये चेतनावत्संवेद्यतापत्तिः । अन्त्ये चेतनाप्रतिषेधमात्रस्य गुणत्वं दुर्वचमिति भावः ।

येनानुमीयेत तेन चेतनाया विरोधः । तस्मादप्रतिषिद्धा चेतना यावच्छरीरं वर्तेत न तु वर्तते । तस्मान्न शरीरगुणश्चेतनेति॥५०॥

भा०—इतश्च न शरीरगुणश्चेतना—

शरीरव्यापित्वात् ॥ ५१ ॥

शरीरं शरीरावयवाश्च सर्वे चेतनोत्पत्त्या व्याप्ता इति न क्वचिदनुत्पत्तिश्चेतनायाः । शरीरवच्छरीरावयवाश्चेतना इति प्राप्तं चेतनबहुत्वम् । तत्र यथा प्रतिशरीरं चेतनबहुत्वे सुखदुःखज्ञानानां व्यवस्थालिङ्गमेवमेकशरीरेऽपि स्यान्न तु भवति । तस्मान्न शरीरगुणश्चेतनेति ॥ ५१ ॥

भा०—यदुक्तं न क्वचिच्छरीरावयवे चेतनाया अनुत्पत्तिरिति सा न—

न केशनखादिष्वनुपलब्धेः ॥ ५२ ॥

केशेषु नखादिषु चानुत्पत्तिश्चेतनाया इति अनुपपन्नं शरीरव्यापित्वमिति ॥ ५२ ॥

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥ ५३ ॥

भा०—इन्द्रियाश्रयत्वं शरीरलक्षणं त्वक्पर्यन्तं जीवमनःसुखदुःखसंवित्त्यायतनभूतं शरीरम् । तस्मान्न केशादिषु चेतनोत्पद्यते ।

---

त्वाभावे हेत्वन्तरमाह—प्रतिद्वंद्वीति । पाकजानां पूर्वरूपादिकं प्रतिद्वंद्वि विरोधि एकस्मिन्रूपे विद्यमाने रूपान्तराभावात् । प्रकृते त्वेकस्मिञ्ज्ञाने सत्यपि द्वितीयक्षणे ज्ञानान्तरोत्पत्तेर्ज्ञानादिकं न शरीरविशेषगुण इत्यर्थ इत्याहुः ॥ ५० ॥

वृ०—हेत्वन्तरमाह—शरीरविशेषगुणानामिति शेषः । ज्ञानसुखादिकं तु न शरीरव्यापकं हृदयाद्यवच्छेदेन तदानुभविकत्वादिति भावः ॥ ५१ ॥

वृ०—देशयति—शरीररूपादेराश्रयव्यापकत्वं न, शरीरस्य गौररूपस्पर्शादेः केशनखादावनुपलब्धेरित्यर्थः ॥ ५२ ॥

वृ०—दूषयति—स्पष्टम् । अन्ये तु चेतना न शरीरगुणः शरीरव्यापित्वाच्छरीरे तदवयवेषु सर्वेष्वेकेन संबन्धेन सत्त्वात् । शरीरगुणस्तु न स्वावय-

---

१ ख. घ. 'ति । न ।

अर्थकारितस्तु शरीरोपनिबन्धः केशादीनामिति ॥ ५३ ॥

भा०—इतश्च न शरीरगुणश्चेतना—

शरीरगुणवैधर्म्यात् ॥ ५४ ॥

द्विविधश्च शरीरगुणः—अप्रत्यक्षश्च गुरुत्वमिन्द्रियग्राह्यश्च रूपादिः। विधान्तरं तु चेतना नाप्रत्यक्षा संवेद्यत्वान्नेन्द्रियग्राह्या मनोविषयत्वात्। तस्माद्द्रव्यान्तरगुण इति ॥ ५४ ॥

न रूपादीनामितरेतरवैधर्म्यात् ॥ ५५ ॥

भा०—यथेतरेतरविधर्माणो रूपादयो न शरीरगुणत्वं जहति एवं रूपादिवैधर्म्याच्चेतना शरीरगुणत्वं न हास्यतीति ॥ ५५ ॥

ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ ५६ ॥

भा०—अप्रत्यक्षत्वाच्चेति। यथेतरेतरविधर्माणो रूपादयो न द्वैविध्यमतिवर्तन्ते तथा रूपादिवैधर्म्याच्चेतना न द्वैविध्यमतिवर्तेत यदि शरीरगुणः स्यादिति। अतिवर्तते तु। तस्मान्न शरीर*गुण इति ॥ ५६ ॥

इति बुद्धेः शरीरगुणत्वाभावप्रकरणम् ॥ ५ ॥

---

बवृत्तिः। शङ्कते—न केशेति। चैतन्यस्यानुपलब्धेः। समाधत्ते—त्वगितीत्याहुः ॥ ५३ ॥

वृ०—हेत्वन्तरमाह—बुद्धिर्न शरीरगुणः शरीरगुणवैधर्म्याद्बहिरिन्द्रियावेद्यत्वे सति वेद्यत्वात् ॥ ५४ ॥

वृ०—आक्षिपति—नोक्तं युक्तं रूपादीनां परस्परवैधर्म्यात्। तथा च तद्रीत्या स्पर्शादीनां शरीरगुणत्वं न स्यादचाक्षुषत्वात्। तथा चोक्तमप्रयोजकमिति भावः ॥ ५५ ॥

वृ०—समाधत्ते—रूपादीनां न शरीरगुणत्वप्रतिषेधः। कुतः। ऐन्द्रियकत्वात्। तत्तदिन्द्रियाग्राह्यत्वलक्षणतत्तद्गुणवैधर्म्येऽपि शरीरगुणत्वावच्छिन्नवैधर्म्यस्य बहिरिन्द्रियाग्राह्यत्वे सति ग्राह्यत्वस्याभावात्। बुद्धौ च तत्सत्त्वादिति भावः ॥ ५६ ॥

इति बुद्धेः शरीरगुणत्वाभावप्रकरणम् ॥ ५ ॥

---

* अत्रायं प्रयोगः—विमता चेतना शरीरगुणत्वाभाववती बाह्यकरणाजन्यप्रत्यक्षविषयत्वात्सुखादिवदिति।

भा०—भूतेन्द्रियमनसां ज्ञानप्रतिषेधात्सिद्धे सत्यारम्भो विशेषज्ञापनार्थं बहुधा परीक्ष्यमाणं तत्त्वं सुनिश्चिततरं भवतीति परीक्षिता बुद्धिः । मनस इदानीं परीक्षाक्रमः । तत्किं प्रतिशरीरमेकमनेकमिति विचारे—

## ज्ञानायौगपद्यादेकं मनः ॥ ५७ ॥

अस्ति खलु वै ज्ञानायौगपद्यमेकैकस्येन्द्रियस्य यथाविषयं करणस्यैकप्रत्ययनिर्वृत्तौ सामर्थ्यान्न तदेकत्वे मनसो लिङ्गम् । यत्तु खल्विदमिन्द्रियान्तराणां विषयान्तरेषु ज्ञानायौगपद्यमिति तल्लिङ्गम् । कस्मात् । संभवति खलु वै बहुषु मनःसु इन्द्रियमनःसंयोगयौगपद्यमिति ज्ञानयौगपद्यं स्यान्न तु भवति । तस्माद्विषये प्रत्ययपर्यायादे*कं मनः ॥ ५७ ॥

## न युगपदनेकक्रियोपलब्धेः ॥ ५८ ॥

भा०—अयं खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यति शृणोत्यरण्यजाञ्छब्दा[1]न्बिभेति व्याललिङ्गानि बुभुत्सते स्मरति च गन्तव्यं[2] सं[3]स्त्यायनमिति क्रमस्याग्रहणाद्युगपदेताः क्रिया इति प्राप्तं मनसो बहुत्वमिति ॥ ५८ ॥

---

वृ०—क्रमप्राप्ता मनःपरीक्षा । तत्र प्रतिशरीरमेकं मनश्चक्षुरादिसहकारितया मनःपञ्चकं वेति संशये मनःपञ्चकमेवोचितम् । तेन च प्रत्येकं सकलमनःसंबन्धाद्व्यासङ्गयौगपद्ये उपपद्येते इति पूर्वपक्षे सिद्धान्तसूत्रम् । प्रतिशरीरं मनोनानात्वे व्यासङ्गस्थलेऽपि यौगपद्यं स्यादतो न मनोनानात्वमिति भावः ॥ ५७ ॥

वृ०—दीर्घशष्कुलीभक्षणादौ ज्ञानयौगपद्यान्नानात्वं स्यादित्याशङ्कते— नैकं मनोऽनेकक्रियाणामनेकज्ञानानामुपलब्धेरित्यर्थः ॥ ५८ ॥

---

* यदि बहूनि मनांसि स्युस्तर्हि प्रतीन्द्रियं मनसः संबन्ध इति युगपदनेकार्थसंनिधाने युगपदनेकज्ञानानि स्युरिति दोषः ।

---

१ क. ख. ग. घ. च. °ब्दान्बिभ्यद्व्याल° । २ क. च. °व्यं स्त्यानीगमि° । ३ म. संस्थानीवमि° ।

अलातचक्रदर्शनवत्तदुपलब्धिराशुसंचारात् ॥ ५९ ॥

भा०—आशुसंचारादलातस्य[1] भ्रमतो विद्यमानः क्रमो न गृह्यते क्रमस्याग्रहणादविच्छेदबुद्ध्या चक्रबुद्धिर्भवति । तथा बुद्धीनां क्रियाणां चाऽऽशुवृत्तित्वाद्विद्यमानः क्रमो न गृह्यते । क्रमस्याग्रहणाद्युगपत्क्रिया भवन्तीत्यभिमानो भवति । किं पुनः क्रमस्याग्रहणाद्युगपत्क्रियाभिमानोऽथ युगपद्भावादेव युगपदनेकक्रियोपलब्धिरिति । नात्र विशेषप्रतिपत्तेः कारणमुच्यते । उक्तमिन्द्रियान्तराणां विषयान्तरेषु पर्यायेण बुद्धयो भवन्तीति तच्चाप्रत्याख्येयमात्मप्रत्यक्षत्वात् । अथापि दृष्टश्रुतानर्थांश्चिन्तयतः क्रमेण बुद्धयो वर्तन्ते न युगपदनेनानुमातव्यमिति । वर्णपदवाक्यबुद्धीनां तदर्थबुद्धीनां चाऽऽशुवृत्तित्वात्क्रमस्य ग्रहणम् । कथम् । वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावच्छ्रवणं भवति । श्रुतं वर्णमेकमनेकं वा पदभावेन प्रतिसंधत्ते । प्रतिसंधाय पदं व्यवस्यति । पदव्यवसायेन स्मृत्या पदार्थं प्रतिपद्यते । पदसमूहप्रतिसंधानाच्च वाक्यं व्यवस्यति । संबन्धांश्च पदार्थान्गृहीत्वा वाक्यार्थं प्रतिपद्यते । न चाऽऽसां क्रमेण वर्तमानानां बुद्धीनामाशुवृत्तित्वात्क्रमो गृह्यते । तदेतदनुमानमन्यत्र बुद्धिक्रियायौगपद्याभिमानस्येति । न चास्ति मुक्तसंशयं युगपदुत्पत्तिर्बुद्धीनां यया मनसां बहुत्वमेकशरीरेऽनुमीयत इति ॥ ५९ ॥

यथोक्तहेतुत्वाच्चा*णु ॥ ६० ॥

भा०—अणु मन एकं चेति धर्मसमुच्चयो ज्ञानायौगपद्यात् । महत्त्वे

---

वृ०—समाधत्ते—क्रमिकेऽपि तदुपलब्धियौगपद्योपलब्धिराशुसंचाराच्छीघ्रसंचारात्मकदोषात् । यथाऽलातचक्रे वेगातिशयेन भ्राम्यमाणे क्रियासंतानस्य भेदेनानुपलब्धिरिति ॥ ५९ ॥

वृ०—ननु यौगपद्योपपादकतया मनसो वैभवं स्यादत्राऽऽह—मन इति

---

* य एव मनस एकत्वे हेतुरुक्तोऽनेनैवाणु मनोऽवसातव्यमिति भावः ।

---

१ क. ग. च. °स्य संभ्र° ।

मनसः सर्वेन्द्रियसंयोगाद्युगपद्विषयग्रहणं स्यादिति ॥ ६०

इति मनःपरीक्षाप्रकरणम् ॥ ६ ॥

---

भा०—*मनसः खलु भोः सेन्द्रियस्य शरीरे वृत्तिलाभो नान्यत्र शरीरात् । ज्ञातुश्च पुरुषस्य शरीरायतना बुद्ध्यादयो विषयोपभोगो जिहासितहानमीप्सितावाप्तिश्च सर्वे च शरीराश्रया व्यवहाराः । तत्र खलु विप्रतिपत्तेः संशयः किमयं पुरुषकर्मनिमित्तः शरीरसर्ग आहो भूतमात्रादकर्मनिमित्त इति । श्रूयते खल्वत्र विप्रतिपत्तिरिति । तत्रेदं तत्त्वम्—

पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ६१ ॥

पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत्पूर्वकृतं कर्मोक्तं तस्य फलं तज्जनितौ धर्माधर्मौ तत्फलस्यानुबन्ध आत्मसमवेतस्यावस्थानं तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः शरीरस्य न स्वतन्त्रेभ्य इति । यदधिष्ठानोऽयमात्माऽयमहमिति मन्यमानो यत्राभियुक्तो यत्रोपभोगतृष्णया विषयानुपलभमानो धर्माधर्मौ संस्करोति तदस्य शरीरम् । तेन संस्कारेण[1] धर्माधर्मलक्षणेन भूतसहितेन पतितेऽस्मिञ्छरीर उत्तरं निष्पद्यते ।

---

शेषः । यथोक्तस्य ज्ञानायौगपद्यस्य हेतुत्वान्मनोणुत्वसाधकत्वादित्यर्थः ॥ ६० ॥

इति मनःपरीक्षाप्रकरणम् ॥ ६ ॥

---

वृ०—अथ प्रसङ्गाच्छरीरस्य तत्तत्पुरुषादृष्टनिष्पाद्यताप्रकरणम् । अथवैकत्रैव शरीरे मनसः सर्वैरात्मभिः सह संयोगात्सर्वत्रैव मनसा ज्ञानं जन्यतामतस्तददृष्टजन्यताप्रतिपादनप्रकरणम् । तत्र शरीरं तत्तत्पुरुषसमवेतादृष्टानिमित्तकं न वेति विप्रतिपत्तौ निषेधकोटिस्त्रेधा—अदृष्टाभावात्, तस्य शरीरहेतुत्वा-

---

* अत्राधिकरणविचारेणापि मन एव परीक्ष्यत इति शरीरोत्पत्तिनिमित्तविचारस्य नासंबन्धः । परित ईक्षा हि परीक्षा साऽपि रूपतः संबन्धितश्च भवति । शरीरं च मनःसंबन्धि तदधिकरणत्वान्मनसः । तस्मान्मनस एवेयं परीक्षा या शरीरस्येति भावः ।

---

१ क. च. निष्पाद्य° ।

निष्पन्नस्य चास्य पूर्वशरीरवत्पुरुषार्थक्रिया पुरुषस्य च पूर्वशरीरवत्प्रवृत्तिरिति कर्मापेक्षेभ्यो भूतेभ्यः शरीरसर्गे सत्येतदुपपद्यत इति । दृष्टा च पुरुषगुणेन प्रयत्नेन प्रयुक्तेभ्यो भूतेभ्यः पुरुषार्थक्रियासमर्थानां द्रव्याणां रथप्रभृतीनामुत्पत्तिः । तथाऽनुमातव्यं शरीरमपि पुरुषार्थक्रियासमर्थमुत्पद्यमानं पुरुषस्य गुणान्तरापे*क्षेभ्यो भूतेभ्य उत्पद्यत इति ॥ ६१ ॥

भा०—अत्र नास्तिक आह—

भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् ॥ ६२ ॥

यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता मूर्तयः सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतयः पुरुषार्थकारित्वादुपादीयन्ते तथा कर्मनिरपेक्षेभ्यो भूतेभ्यः शरीरमुत्पन्नं पुरुषार्थकारित्वादुपादीयत इति ॥ ६२ ॥

न साध्यसमत्वात् ॥ ६३ ॥

भा०—यथा शरीरोत्पत्तिरकर्मनिमित्ता साध्या तथा सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतीनामप्यकर्मनिमित्तः सर्गः साध्यः। साध्यसमत्वादसाधनमिति ॥ ६३ ॥

---

भावात्, अदृष्टस्य पुरुषसमवायाभावाद्वा । तत्राऽऽद्यं पक्षं निरस्यति—पूर्वकृतस्य यागदानहिंसादेः, फलस्य धर्माधर्मरूपस्यानुबन्धात्सहकारिभावात्तस्य शरीरस्योत्पत्तिः ॥ ६१ ॥

वृ०—आक्षिपति—भूतेभ्य इति सावधारणम् । तथा चादृष्टनिरपेक्षेभ्यो भूतेभ्यः परमाणुभ्यो मूर्तेर्मृदादेरुपादानमारम्भो यथा तथैव तस्य शरीरस्योपादानमारम्भः परमाणुभ्योऽदृष्टनिरपेक्षेभ्य इत्यर्थः ॥ ६२ ॥

वृ०—समाधत्ते—नोक्तं युक्तम् । दृष्टान्तस्य साध्यसमत्वात्पक्षसमत्वात् । मृदादेरप्यदृष्टसापेक्षपरमाणुभ्य एवोत्पत्तेरुपगमात्तदजन्यत्वस्य तत्रासिद्धेरिति भावः ॥ ६३ ॥

---

* तथा च प्रयोगः—शरीरं पुरुषगुणप्रेरितभूतपूर्वकं कार्यत्वे सति पुरुषार्थक्रियासामर्थ्यात् । यत्पुरुषार्थसमर्थं तत्पुरुषगुणप्रेरितभूतपूर्वकं दृष्टम्, यथा रथादि पुरुषगुणेन प्रयत्नेन प्रेरितैर्भूतैरारभ्यमाणं पुरुषार्थक्रियासमर्थं दृष्टम् । तथा च शरीरम् । तस्मादिदमपि सापेक्षैर्भूतैरारभ्यत इति ।

भा०—भूतेभ्यो मूर्त्युपादानवदिति चानेन साम्यम्—

नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६४ ॥

विषमश्चायमुपन्यासः । निर्बीजा इमा मूर्तय उत्पद्यन्ते बीजपूर्विका तु शरीरोत्पत्तिः । *मातापितृशब्देन लोहितरेतसी बीजभूते गृह्येते । तत्र सत्त्वस्य गर्भवासानुभवनीयं कर्म पित्रोश्च पुत्रफलानुभवनीये कर्मणी मातुर्गर्भाशये शरीरोत्पत्तिं भूतेभ्यः प्रयोजयन्तीत्युपपन्नं बीजानुविधानमिति ॥ ६४ ॥

तथाऽऽहारस्य ॥ ६५ ॥

भा०—उत्पत्तिनिमित्तत्वादिति प्रकृतम् । भुक्तं पीतमाहारस्तस्य पक्तिनिर्वृत्तं रसद्रव्यं मातृशरीरे चोपचीयते । बीजे गर्भाशयस्थे बीजसमानपाकं मात्रया चोपचयो बीजे यावद्व्यूहसमर्थः संचय इति । संचितं चार्बुदमांसपेशीकललकण्डराशिरःपाण्यादिना च व्यूहेनेन्द्रियाधिष्ठानभेदेन व्यूह्यते । व्यूहे च गर्भनाड्याऽवतारितं रसद्रव्यमुपचीयते यावत्प्रसवसमर्थमिति । न चायमन्नपानस्य स्थाल्यादिगतस्य कल्प्यत इति । एतस्मात्कारणात्कर्मनिमित्तत्वं शरीरस्य विज्ञायत इति ॥ ६५ ॥

प्राप्तौ चानियमात् ॥ ६६ ॥

भा०—न सर्वो दंपत्योः संयोगो गर्भाधानहेतुर्दृश्यते । तत्रासति कर्मणि न भवति सति च भवतीत्यनुपपन्नो नियमाभाव इति ।

---

वृ०—न मृदादिसाम्यमित्याह सूत्राभ्याम्—शरीरे न मृदादिसाम्यं मातापित्रोः कर्मणः शरीरोत्पत्तिनिमित्तत्वात् । पुत्रदर्शनादिजन्यसुखानुभावकादृष्टस्य देवाराधनादिजन्यस्य पुत्रादिनिमित्तत्वात् । एवं मातापित्रोराहारस्य शरीरोत्पत्तिनिमित्तत्वाददृष्टसहकारेणाऽऽहारस्य शुक्रशोणितादिद्वारा कललादिजनकत्वात् । आहारस्य पितामहपिण्डभोजनादेरदृष्टद्वारा पुत्रजनकत्वादित्यर्थ इत्यन्ये ॥ ६४ ॥ ६५ ॥

वृ०—आहारस्यादृष्टसहकारित्वे विपक्षे बाधकमाह—प्राप्तौ दंपत्योः संप्र-

---

* ननु मातापितरौ शरीरोत्पत्तौ न साक्षात्कारणमत आह—मातापितृशब्देनेत्यादि ।

---

१ ख. घ. °ति वाऽने° । २ ग. ङ °र्भाश्रये । ३ ङ. °पचिने । ४ ङ. °क्लाते ।

कर्मनिरपेक्षेषु भूतेषु शरीरोत्पत्तिहेतुषु नियमः स्यात् । न ह्यत्र कारणाभाव इति ॥ ६६ ॥

भा०—अथापि—

शरीरो*त्पत्तिनिमित्तवत्संयोगो-
त्पत्तिनिमित्तं कर्म ॥ ६७ ॥

यथा खल्विदं शरीरं धातुप्राणसंवाहिनीनां नाडीनां शुक्रान्तानां धातूनां च स्नायुत्वगस्थिशिरापेशीकललकण्डराणां च शिरोबाहूदराणां सक्थ्नां च कोष्ठगानां वातपित्तकफानां च मुखकण्ठहृदयामाशयापक्वाशयाधःस्रोतसां च परमदुःखसंपादनीयेन संनिवेशेन व्यूहनमशक्यं पृथिव्यादिभिः कर्मनिरपेक्षैरुत्पादयितुमिति कर्मनिमित्ता शरीरोत्पत्तिरिति विज्ञायते । एवं च प्रत्यात्मानियतस्य निमित्तस्याभावान्निरातिशयैरात्माभिः संबन्धात्सर्वात्मनां च समानैः पृथिव्यादिभिरुत्पादितं शरीरं पृथिव्यादिगतस्य च नियमहेतोरभावात्सर्वात्मनां सुखदुःखसंवित्त्यायतनं समानं प्राप्तम् । यत्तु प्रत्यात्मं व्यवतिष्ठते तत्र शरीरोत्पत्तिनिमि+त्तं कर्म व्यवस्थाहेतुरिति विज्ञायते । परिपच्यमानो हि प्रत्यात्मनियतः कर्माशयो यस्मिन्नात्मनि वर्तते तस्यैवोपभोगायतनं शरीर-

---

योगे तु गर्भधारणस्य यतो न नियमस्ततोऽदृष्टस्य सहकारित्वमावश्यकमिति भावः ॥ ६६ ॥

वृ०—नन्वदृष्टनिरपेक्षैरेव भूतैः कैश्चित्स्वभावविशेषाच्छरीरं जन्यताम् । स्वभावानभ्युपगमे च शरीरस्य सर्वात्मसंयुक्तत्वात्साधारण्यापत्तिरत आह—अयमर्थः—शरीरस्य सर्वात्मसंयुक्तत्वेऽपि संयोगविशेषोऽवच्छेदकतालक्षणो येनाऽऽत्मना सह तदीयं तच्छरीरम् । संयोगविशेष एव कुत इत्यत आह—संयोगेति । संयोगविशेषोत्पत्तौ कर्म, अदृष्टविशेषो निमित्तम् । यथा शरीरो-

---

* नन्वात्मनां विभुत्वात्सकलशरीरैः संबन्धादिदं शरीरमस्यैवाऽऽत्मन इति नियमे को हेतुरित्यस्योत्तरबोधकमेतत्सूत्रमिति बोध्यम् । + येन कर्मणा शरीरमुत्पद्यते तदेव संयोगं नियमयति । ऽकर्मनिमित्ते शरीरसर्गे यथोक्तदोष इति भावः ।

---

१ क. ख. ग. घ. च. स्नाय्वस्थि० ।

मुत्पाद्य व्यवस्थापयति । तदेवं शरीरोत्पत्तिनिमित्तवत्संयोगानिमित्तं कर्मेति विज्ञायते । प्रत्यात्मव्यवस्थानं तु शरीरस्याऽऽत्मना संयोगं प्र*चक्ष्महे इति ॥ ६७ ॥

एतेनानियमः प्रत्युक्तः ॥ ६८ ॥

भा०—योऽयमकर्मनिमित्ते शरीरसर्गे सत्यनियम इत्युच्यतेऽयं 'शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म' ( ३ । २ । ६७ ) इत्यनेन प्रत्युक्तः । कस्तावदयं नियमः । यथैकस्याऽऽत्मनः शरीरं तथा सर्वेषामिति नियमः । अन्यस्यान्यथाऽन्यस्यान्यथेत्यनियमो भेदो व्यावृत्तिर्विशेष इति । दृष्टा च जन्मव्यावृत्तिः—उच्चाभिजनो निकृष्टाभिजन इति, प्रशस्तं निन्दितमिति, व्याधिबहुलमरोगमिति, समग्रं विकलमिति, पीडाबहुलं सुखबहुलमिति, पुरुषातिशयलक्षणोपपन्नं विपरीतमिति, प्रशस्तलक्षणं निन्दितलक्षणमिति, पट्विन्द्रियमृद्विन्द्रियमिति । सूक्ष्मश्च भेदोऽपरिमेयः ।

---

त्पत्तावदृष्टविशेषो निमित्तमिति । संयोगे विशेषस्तदात्मज्ञानजननानियामको जातिविशेष एव । संयोगः शरीरावयवसंस्थानविशेष इति केश्चित् ॥ ६७ ॥

वृ०—अथ 'शरीरं नादृष्टजन्यं प्रकृतेरारम्भस्वभावत्वादेव तदुपपत्तेः । प्रतिबन्धकपूर्वशरीरापगमस्त्वदृष्टाधीनो जलस्य निम्नानुसरणस्वभावस्येव बन्धापगमाधीनत्वम्' इति द्वितीयपक्षं सांख्यसंमतं निरस्यति—एतेनादृष्टहेतुकव्यवस्थापनेन । अनियमस्तु आत्मनः कदाचिन्मानुषशरीरसंबन्धः कदाचिदन्या-

---

* अत्रेदं बोध्यम्—कर्मणस्तदात्मसंबन्धित्वनियमः संयोगनिमित्तकः । संयोगेऽपि तदात्मसंबन्धित्वानियमो मनोहेतुकः । यस्य ह्यात्मनो यन्मनस्तेन यः संयोगो जन्यते स तस्येति । मनसस्तदीयभावस्तु कर्मनिमित्तकः । अनादित्वाच्च संसारस्य न चक्रकमिति ।

+ तदेवमात्मगुणनिबन्धने शरीरसर्गे व्यवस्था दर्शिता । यत्तु सांख्याः—न कर्मनिबन्धनः शरीरसर्गः, अपि तु प्रकृत्यादिनिबन्धनः । प्रकृतयो हि स्वयमेव धर्माधर्मरूपनिमित्तानपेक्षाः सत्त्वरजस्तमोरूपतया प्रवृत्तिशीलाः स्वं स्वं विकारमारभन्ते । प्रतिबन्धापगममात्रे तु धर्माधर्मावपेक्षन्ते । तद्यथा कृषीवलः केदारादपां पूर्णात्केदारान्तरमपूर्णमापिप्लावयिषुरपां सेतुमात्रं भिनत्ति, तास्तु निम्नाभिसर्पणस्वभावा अपहतसेतवः स्वयमेव केदारमाप्लावयन्ति, एवमाप्लावयन्ति प्रकृतयोऽपि विकारानिति मन्यते तान्प्रत्याह—

सोऽयं जन्मभेदः प्रत्यात्मनियतात्कर्मभेदादुपपद्यते । असति कर्मभेदे प्रत्यात्मनियते निरतिशयित्वादात्मनां समानत्वाच्च पृथिव्यादिगतस्य नियमहेतोरभावात्सर्वं सर्वात्मनां प्रसज्येत, न त्विदमित्थंभूतं जन्म । तस्मात्कर्मनिमित्ता शरीरोत्पत्तिरिति ।

उपप*न्नश्च तद्वियोगः कर्मक्षयोपपत्तेः । कर्मनिमित्ते शरीरसर्गे तेन शरीरेणाऽऽत्मनो वियोग उपपन्नः । कस्मात् । कर्मक्षयोपपत्तेः । उपपद्यते खलु कर्मक्षयः सम्यग्दर्शनात्प्रक्षीणे मोहे वीतरागः पुनर्भवहेतुकर्म कायवाङ्मनोभिर्न करोति, इत्युत्तरस्यानुपचयः पूर्वोपचितस्य विपाकप्रतिसंवेदनात्प्रक्षयः, एवं प्रसवहेतोरभावात्पतितेऽस्मिञ्छरीरे पुनः शरीरान्तरानुपपत्तेरप्रतिसंधिः । अकर्मनिमित्ते तु शरीरसर्गे भूतक्षयानुपपत्तेस्तद्वियोगानुपपत्तिरिति ॥ ६८ ॥

**तददृ+ष्टकारितमिति चेत्पुनस्तत्प्रसङ्गोऽपवर्गे ॥ ६९ ॥**

भा०—अदर्शनं खल्वदृष्टमित्युच्यते । अदृष्टकारिता भूतेभ्यः शरीरोत्पत्तिः । न जात्वनुत्पन्ने शरीरे द्रष्टा निरायतनो दृश्यं पश्यति । तच्चास्य दृश्यं द्विविधं विषयश्च नानात्वं चाव्यक्तात्मनोः । तदर्थः शरीरसर्गः । तस्मिन्नवसिते चरितार्थानि भूतानि न शरीरमुत्पाद-

---

दृशः । किंचिच्च शरीरं सकलावयवं किंचिच्च विकलावयवमित्यादि । अदृष्टहेतुत्वानभ्युपगमे त्वयमनियमो न त्वस्मन्मते । किं चादृष्टनिरपेक्षप्रकृतिमात्रारब्धत्वे सर्वात्मसाधारण्यं शरीरस्य स्यादिति भावः । अन्ये त्वदृष्टमप्यनियतं स्यादित्यत्राऽऽह—एतेनेति । तत्राप्यदृष्टान्तरानित्यनादित्वमेवेति भाव इत्याहुः ॥ ६८ ॥

वृ०—आर्हतास्तु मनःपरमाणुगुणमदृष्टं मन्यन्ते । तथाहि—पार्थिवाः परमाणवः सहिताः स्वादृष्टवशाच्छरीरमारभन्ते । मनश्च स्वादृष्टप्रयुक्तं शरीरमाविशति । तच्चादृष्टस्वभावादेव पुद्गलस्य सुखदुःखे साधयतीति । तत्रोत्तरमाह—तददा-

---

* न केवलमकर्मनिमित्ते शरीरसर्गे साधारणविग्रहवत्त्वं दोषः, अपि तु मोक्षोऽपि न स्यादिति दर्शयितुं स्वपक्षे मोक्षमुपपादयति । अस्य सूत्रत्वेन क्वचिदुल्लेखो दृश्यते ।

+ उपभोग्या ये शब्दादयस्तददर्शनं प्रकृतिपुरुषभेदादर्शनं चादृष्टमुच्यते तत्कारितमित्यर्थः ।

यन्तीत्युपपन्नः शरीरवियोग इति । एवं चेन्मन्यसे पुनस्तत्प्रसङ्गोऽपवर्गे पुनः शरीरोत्पत्तिः प्रसज्यत इति । या चानुत्पन्ने शरीरे दर्शनानुत्पत्तिरदर्शनाभिमता या चापवर्गे शरीरनिवृत्तौ दर्शनानुत्पत्तिरदर्शनभूता नैतयोरदर्शनयोः कचिद्विशेष इत्यदर्शनस्यानिवृत्तेरपवर्गे पु*नः शरीरोत्पत्तिप्रसङ्ग इति ।

चरितार्थता विशेष इतिचेन्न करणाकरणयोरारम्भ+दर्शनात् । चरितार्थानि भूतानि दर्शनावसानान्न शरीरान्तरमारभन्त इत्ययं विशेष एवं चेदुच्यते न करणाकरणयोरारम्भदर्शनात् । चरितार्थानां भूतानां विषयोपलब्धिकरणात्पुनः पुनः शरीरारम्भो दृश्यते प्रकृतिपुरुषयोर्नानात्वदर्शनस्याकरणान्निरर्थकः शरीरारम्भः पुनः पुनर्दृश्यते । तस्मादकर्मनिमित्तायां भूतसृष्टौ न दर्शनार्था शरीरोत्पत्तिर्युक्ता, युक्ता तु कर्मनिमित्ते सर्गे दर्शनार्था शरीरोत्पत्तिः । कर्मविपाकसंवेदनं दर्शनमिति तददृष्टकारितमिति चेत्, कस्यचिद्दर्शनमदृष्टं नाम परमाणूनां गुणविशेषः क्रियाहेतुस्तेन प्रेरिताः परमाणवः संमूर्छिताः शरीरमुत्पादयन्तीति । तन्मनः समाविशति स्वगुणेनादृष्टेन प्रेरितम् । समनस्के शरीरे द्रष्टुरुपलब्धिर्भवतीति ।

एतस्मिन्वै दर्शने—

गुणानुच्छेदात्पुनस्तत्प्रसङ्गोऽपवर्गे । अपवर्गे शरीरोत्पत्तिः परमाणुगुणस्यादृष्टस्यानुच्छेद्यत्वादिति ॥ ६९ ॥

**मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः ॥ ७० ॥**

भा०—मनोगुणेनादृष्टेन समावेशिते मनसि संयोगव्युच्छेदो न स्यात् ।

---

त्माददृष्टोपग्रहं विनैव तत्तदात्मोपभोगाय परमाणवश्चेच्छरीरमारभन्ते मुक्तेऽपि तदात्मनि तद्भोगाय शरीरमारभेरन् । अपवर्ग इत्युपलक्षणं संसारिणामपि नरकरितुरगादिशरीरोपग्रहे विनिगमकं न स्यादिति भावः ॥ ६९ ॥

वृ०—अदृष्टस्य मनोगुणत्वमपि दूषयति—संयोगस्य शरीरारम्भकस्य ज्ञाना-

---

* यथा प्रागदर्शनमेवं निरोधसमाधेः पश्चादप्यदर्शनमिति मुक्तोऽपि पुनः संसरेदित्यर्थः ।

+ न करणेत्यादेः सूत्रत्वेनोल्लेखः प्रायशो दृश्यते ।

---

१ क. ग. च. °तार्थावि° । २ क. च. °ते क्र° । ३ ङ. °पाकः सं° ।

तच्च किं कृतं शरीरादपसर्पणं मनस इति । कर्माशयक्षये तु कर्माशयान्तराद्विपच्यमानादपसर्पणोपपत्तिरिति ।

अदृष्टादेवापसर्पणमिति चेत् । योऽदृष्टः(ष्टं) शरीरोपसर्पणहेतुः स एवापसर्पणहेतुरपीति नैकस्य जीवनप्रायणहेतुत्वानुपपत्तेः । एवं च सति एकोऽदृष्टं जीवनप्रायणयोर्हेतुरिति प्राप्तं नैतदुपपद्यते ॥ ७० ॥

नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ॥ ७१ ॥

भा०—विपाकसंवेदनात्कर्माशयक्षये शरीरपातः प्रायणम् । कर्माशयान्तराच्च पुनर्जन्म । भूतमात्रात्तु कर्मनिरपेक्षाच्छरीरोत्पत्तौ कस्य क्षयाच्छरीरपातः प्रायणमिति । प्रायणानुपपत्तेः खलु वै नित्यत्वप्रसङ्गं विद्मः । यादृच्छिके तु प्रायणे प्रायणभेदानुपपत्तिरिति ॥ ७१ ॥

भा०— पुनस्तत्प्रसङ्गोऽपवर्ग इत्येतत्समाधित्सुराह—

अणुश्यामतानित्यत्ववदेतत्स्यात् ॥ ७२ ॥

यथाऽणोः श्यामता नित्याऽग्निसंयोगेन प्रतिबिद्धा न पुनरुत्पद्यत एवमदृष्टकारितं शरीरमपवर्गे पुनर्नोत्पद्यत इति ॥ ७२ ॥

---

दिजनकस्य चोच्छेदो न स्यात् । कुतः । मनसो यत्कर्मादृष्टं तन्निमित्तत्वात्तस्य नित्यत्वात्तादृशसंयोगधारा नोच्छिद्येत । तस्यानित्यत्वेऽपि व्यधिकरणभोगस्य तन्नाशकत्वेऽतिप्रसङ्ग इति भावः ॥ ७० ॥

वृ०—संयोगानुच्छेदे का क्षतिरत आह—तथा सति प्रायणस्य मरणस्यानुपपत्तेः । शरीरादेर्नित्यत्वस्याविनाशित्वस्य प्रसङ्गः ॥ ७१ ॥

वृ०—आक्षिपति—यथा परमाणोः श्यामता नित्याऽपि निवर्तते तथा शरीरादिकमपि निवर्तते । यद्वा तथैव परमाणुनिष्ठं नित्यमप्यदृष्टं निवर्तते तदभावाच्च नापवर्गे शरीरमिति ॥ ७२ ॥

---

१ छ. °ति । तदिदं दृष्टान्तस्य साध्यसमत्वमभिधीयत इति अथवा । नाकृताभ्यागमप्रसङ्गादणुश्यामता दृष्टान्ते क° ।

## नाकृताभ्यागमप्रसङ्गात् ॥ ७३ ॥

भा०——नायमस्ति दृष्टान्तः । कस्मात् । अकृताभ्यागमप्रसङ्गात् । अकृतं प्रमाणतोऽनुपपन्नं तस्याभ्यागमोऽभ्युपपत्तिर्व्यवसायः, एतच्छ्रद्दधानेन प्रमाणतो मन्तव्यम् । तस्मान्नायं दृष्टान्तो न प्रत्यक्षं न चानुमानं किंचिदुच्यत इति । तदिदं दृष्टान्तस्य साध्यसमत्वमभिधीयत इति । अथवा नाकृताभ्यागमप्रसङ्गात्, अणुश्यामतादृष्टान्तेनाकर्मनिमित्तां शरीरोत्पत्तिं समादधानस्याकृताभ्यागमप्रसङ्गः । अकृते सुखदुःखहेतौ कर्मणि पुरुषस्य सुखं दुःखमभ्यागच्छतीति प्रसज्येत । ओमिति ब्रुवतः प्रत्यक्षानुमानविरोधः । प्रत्यक्षविरोधस्तावत्—" भिन्नमिदं सुखदुःखं प्रत्यात्मवेदनीयत्वात्प्रत्यक्षं सर्वशरीरिणाम् । को भेदः । तीव्रं मन्दं चिरमाशु नानाप्रकारमिति एवमादिर्विशेषः । न चास्ति प्रत्यात्मनि यतः सुखदुःखहेतुविशेषः । न चासति हेतुविशेषे फलविशेषो दृश्यते । कर्मनिमित्ते तु सुखदुःखयोगे कर्मणां[1] तीव्रमन्दतोपपत्तेः कर्मसंचयानां चोत्कर्षभावान्नानाविधैकविधभावाच्च कर्मणां सुखदुःखभेदोपपत्तिः । सोऽयं हेतुभेदाभावाद्दृष्टः सुखदुःखभेदो न स्यात् " इति प्रत्यक्षविरोधः । तथाऽनुमानविरोधः—' दृष्टं हि पुरुषगुणव्यवस्थानात्सुखदुःखव्यवस्थानम् । यः खलु चेतनावान्साधननिर्वर्तनीयं सुखं बुद्ध्वा तदीप्सन्साधनावाप्तये प्रयतते स सुखेन युज्यते न विपरीतः । यश्च साधननिर्वर्तनीयं दुःखं बुद्ध्वा तज्जिहासुः साधनपरिवर्जनाय यतते स दुःखेन त्यज्यते न विपरीतः । अस्ति चेदं यत्नमन्तरेण चेतनानां सुखदुःखव्यवस्थानं तेनापि चेतनगुणान्तरव्यवस्थानकृतेन भवितव्यम् ' इत्यनुमानम् । तदेतदकर्मनिमित्ते सुखदुःखयोगे विरुध्यत इति । तच्च गुणान्तरमसंवेद्यत्वाददृष्टं विपाककालानियमाच्चाव्यवस्थितम् । बुद्ध्या-

---

वृ०- सिद्धान्तसूत्रम् । अकृतस्य प्रमाणाविषयस्याभ्यागमः स्वीकारस्तत्प्रसङ्गादित्यर्थः । नहि परमाणुनिष्ठादृष्टस्य कारणस्य सत्त्वे शरीरोच्छेदः स्याद-

---

१ ग. °विधातामा° ।

दयस्तु संवेद्याश्चापवर्गिणश्चेति । अथाऽऽगमविरोधः—बहु खल्विदमार्षमृषीणामुपदेशजातमनुष्ठानपरिवर्जनाश्रयमुपदेशफलं च शरीरिणां वर्णाश्रमविभागेनानुष्ठानलक्षणा प्रवृत्तिः, परिवर्जनलक्षणा निवृत्तिः, तच्चोभयमेतस्यां दृष्टौ नास्ति कर्म सुचरितं दुश्चरितं वा कर्मनिमित्तः पुरुषाणां सुखदुःखयोग इति विरुध्यते । सेयं पापिष्ठानां मिथ्यादृष्टिरकर्मनिमित्ता शरीरसृष्टिरकर्मनिमित्तः सुखदुःखयोग इति ॥ ७२ ॥

इति शरीरस्यादृष्टनिष्पाद्यताप्रकरणम् ॥ ७ ॥

---

इति वात्स्यायनीये न्यायभाष्ये तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

समाप्तश्चायं तृतीयोऽध्यायः ॥ ३ ॥

---

वमणुश्यामतानित्यत्वस्यापि प्रमाणागोचरस्य स्वीकारः स्यात् । तथा च दृष्टान्तासिद्धिः । न वाऽनादेर्भावस्य नाशः संभवति जन्यभावत्वेन तद्धेतुत्वात् । यद्वा नित्यादृष्टाच्छरीरसंबन्धोपगमेऽकृतात्स्वयमजनितात्कर्मणोऽभ्यागमः फलसंबन्धः स्यात्तथा च स्वाकृतत्वाविशेषात्किं शरीरं कस्य भविष्यतीत्यत्र नियामकाभाव इति भावः ॥ ७२ ॥

इति शरीरस्यादृष्टनिष्पाद्यताप्रकरणम् ॥ ७ ॥

---

समाप्तं च तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

इति श्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ तृतीयाध्यायवृत्तिः समाप्ता ॥ ३ ॥

भा०—मनसोऽनन्तरा वृत्तिः[1] परीक्षितव्या[2]। तत्र खलु यावद्धर्माधर्माश्रयशरीरादि परीक्षितं सर्वा सा प्रवृत्तेः परीक्षेत्याह—

प्रवृत्तिर्यथोक्ता ॥ १ ॥

तथा परीक्षितेति ॥ १ ॥

---

वृ०—सूरकोटिविजयिप्रभाभरं योगिमानसचरं परं महः ।
श्यामलं किमपि धाम कामदं कामकोटिकमनीयमाश्रये ॥

तृतीये तावदात्मादिप्रमेयषट्कं कारणरूपं परीक्षितम् । अथ कार्यरूपं प्रवृत्त्यादिप्रमेयषट्कमवसरतो हेतुमद्भावेन च परीक्षणीयम् । यद्यपि प्रथमाह्निके षट्कं परीक्षणीयं द्वितीयाह्निके तु तत्त्वज्ञानं तथाऽपि तस्यापवर्गहेतुत्वादुपोद्घातेन च परीक्षणीयत्वादपवर्गपरीक्षान्तःपातितया षट्कपरीक्षैवाध्यायार्थः । तत्र चोद्दिष्टधर्मवत्तया षट्कपरीक्षा प्रथमाह्निकार्थः । तत्र प्रथमाह्निके चतुर्दश प्रकरणानि । तत्र चोक्तरूपवत्तया प्रवृत्तिदोषयोः परीक्षा प्रथमप्रकरणार्थः । न चार्थभेदात्प्रकरणभेदः । यथा तथेति परस्परसाकाङ्क्षाभ्यामवयवाभ्यामुक्तरूपवत्त्वलक्षणैकार्थवत्त्वकथनात् । प्रवृत्तिपरीक्षायामाकाङ्क्षितायां सूत्रम् । अत्र तथैवेति शेषं पूरयन्ति । तदयुक्तम् । तथा सत्यत्रैव यथाशब्दस्याऽऽकाङ्क्षाशान्तावग्रिमसूत्रस्थतथाशब्देऽपि यथाशब्दान्तरस्य पूरणीयतया प्रकरणभेदापत्तेः । तस्मादग्रिमसूत्रस्थतथाशब्देनान्वयो युक्तः । प्रवृत्तिर्यथोक्तलक्षणवती तथा दोषा अप्युक्तलक्षणवन्त इत्यग्रिमसूत्रसंवलितोऽर्थः । ‘ प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति ’ ( १ । १ । १७ ) इत्युक्तलक्षणसत्त्वात्सिद्धं लक्षणमिति भावः । प्रवृत्तिस्तु द्वयी कारणरूपा कार्यरूपा च । द्वे अप्यात्मसमवेते । तत्राऽऽद्या जन्यत्वेनाविशिष्टा विशिष्टा वा यत्नत्वजातिमती प्रत्यक्षसिद्धा । द्वितीया तु धर्माधर्मरूपा यागादेरगम्यागमनादेश्च चिरध्वस्तस्य व्यापारतया कर्मनाशाजलस्पर्शादेः प्रायश्चित्तादेश्च नाश्यतया सिध्यतीति ॥ १ ॥

---

१ क. ग च. °न्तरं प्र° । २ क च. °तं पूर्वा सा । ३ ग. र्वाङ्गं प्र° ।

भा०—प्रवृत्त्यनन्तरास्तर्हि दोषाः परीक्ष्यन्तामित्यत आह—

तथा दोषाः ॥ २ ॥

परीक्षिता इति । बुद्धिसमानाश्रयत्वादात्मगुणाः,* प्रवृत्तिहेतुत्वात्पुनर्भवप्रतिसंधानसामर्थ्याच्च संसारहेतवः, संसारस्यानादित्वादनादिना प्रबन्धेन प्रवर्तन्ते । मिथ्याज्ञाननिवृत्तिस्तत्त्वज्ञानात्, तन्निवृत्तौ रागद्वेषप्रबन्धोच्छेदेऽपवर्ग इति । प्रादुर्भावनिरोधधर्मका इत्येवमाद्युक्तं दोषाणामिति ॥ २ ॥

इति प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ॥ १ ॥

---

भा०—'प्रवर्तनालक्षणा दोषाः' ( १ । १ । १८ ) इत्युक्तं तथा चेमे मानेर्ष्यासूयाविचिकित्सामत्सरादयः । ते कस्मान्नोपसंख्यायन्त इत्यत आह—

तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥

तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः । रागपक्षः—कामो मत्सरः स्पृहा तृष्णा लोभ इति । द्वेषपक्षः—क्रोध ईर्ष्याऽसूया द्रोहोऽमर्ष इति । मोहपक्षः—मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति । त्रैराश्यान्नोपसंख्यायन्त इति । लक्षणस्य तर्ह्यभेदा-

---

वृ०—दोषपरीक्षायां प्राप्तायामाह—तथा दोषा अपि 'प्रवर्तना लक्षणा दोषाः' ( १ । १ । १८ ) इत्युक्तलक्षणवन्त एवेति नासिद्धिरिति भावः ॥२॥

इति प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ॥ १ ॥

---

वृ०—अत्र त्रैराश्येन विशेषेण दोषपरीक्षणाय तत्त्रैराश्यप्रकरणम् । तत्र सिद्धान्तसूत्रम् । तेषां दोषाणां त्रयो राशयस्त्रयः पक्षा न तु रागद्वेषमोहानामेकैकत्वम् , तेषामर्थान्तरभावादवान्तरभेदवत्त्वात् । तथा च भयशोकमानादीनामेष्वे-

---

* अभीष्टानभीष्टविषयानुचिन्तनप्रभवा वक्ष्यमाणा दोषा न बुद्धिव्यधिकरणा भवितुमर्हन्ति । तथा सति चैत्रस्य विषयानुचिन्तने मैत्रस्य द्वेषादिप्रसङ्गः स्यादिति भावः ।

त्रित्वमनुपपन्नम् । नानुपपन्नम् । रागद्वेषमोहार्थान्तरभावात् । आसक्तिलक्षणो रागः । अमर्षलक्षणो द्वेषः । मिथ्याप्रतिपत्तिलक्षणो मोह इति । एतत्प्रत्यात्मवेदनीयं सर्वशरीरिणाम् । विजानात्ययं शरीरी रागमुत्पन्नमस्ति मेऽध्यात्मं रागधर्म इति । विरागं च विजानाति नास्ति मेऽध्यात्मं रागधर्म इति । एवमितरेतरयोरपीति । मानेर्ष्यासूयाप्रभृतयस्तु त्रैराश्यमनुपातिता इति नोपसंख्यायन्ते ॥ ३ ॥

---

वान्तर्भावान्न विभागन्यूनत्वम् । इच्छात्वद्वेषत्वमिथ्याज्ञानत्वरूपविरुद्धधर्मवत्त्वान्न विभागाधिक्यम् । इच्छात्वादिकं तु रागादावनुभवसिद्धम् । तत्र रागपक्षः—कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भ इति । कामो रिरंसा रतिश्च विजातीयः संयोगः । नारीगताभिलाष इति न युक्तम् । स्त्रियाः कामेऽव्याप्तेः । मत्सरः स्वप्रयोजनप्रतिसंधानं विना पराभिमतनिवारणेच्छा । यथा राजकीयादुदपानान्नोदकं पेयमित्यादि । एवं परगुणनिवारणेच्छाऽपि । स्पृहा धर्माविरोधेन प्राप्तीच्छा । तृष्णा, इदं मे न क्षीयतामितीच्छा । उचितव्ययाकरणेनापि धनरक्षणेच्छारूपं कार्पण्यमपि तृष्णाभेद एव । धर्मविरोधेन परद्रव्येच्छा लोभः । परवञ्चनेच्छा माया । कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा दम्भः । द्वेषपक्षः—क्रोध ईर्ष्याऽसूया द्रोहोऽमर्षोऽभिमान इति । क्रोधो नेत्रलौहित्यादिहेतुर्दोषविशेषः । ईर्ष्या साधारणे वस्तुनि परस्वत्वात्तद्ग्रहीतरि द्वेषः । यथा दुरन्तदायादानाम् । असूया परगुणादौ द्वेषः । द्रोहो नाशाय द्वेषः । हिंसा तु द्रोहजन्या । परे तु तां द्रोहं मन्यन्ते । अमर्षः कृतापराधेऽसमर्थस्य द्वेषः । अभिमानोऽपकारिण्यकिंचित्करस्याऽऽत्मनि द्वेषः । मोहपक्षः—विपर्ययसंशयतर्कमानप्रमादभयशोकाः । विपर्ययो मिथ्याज्ञानापरपर्यायोऽयथार्थनिश्चयः । एकधर्मिकविरुद्धभावाभावज्ञानं संशयः । स एव च विचिकित्सेत्युच्यते । व्याप्यारोपाद्व्यापकप्रसञ्जनं तर्कः । आत्मन्यविद्यमानगुणारोपेणोत्कर्षधीर्मानः । गुणवति निर्गुणत्वधीरूपस्मयोऽपि मानेऽन्तर्भवति । प्रमादः पूर्वंकर्तव्यतया निश्चितेऽप्यकर्तव्यताधीः । एवं वैपरीत्येऽपि । भयमनिष्टहेतूपनिपाते तत्परित्यागानर्हताज्ञानम् । शोक इष्टवियोगे तल्लाभानर्हताज्ञानम् ॥ ३ ॥

---

१ ख. ग. घ. ङ. °त् । सक्ति° ।

नैकप्रत्यनीकभावात् ॥ ४ ॥

भा०–नार्थान्तरं रागादयः । कस्मात् । एकप्रत्यनीकभावात् । तत्त्वज्ञानं सम्यङ्मतिरार्यप्रज्ञा संबोध इत्येकमिदं प्रत्यनीकं त्रयाणामिति ॥ ४ ॥

व्यभिचारादहेतुः ॥ ५ ॥

भा०—एकप्रत्यनीकाः पृथिव्यां श्यामादयोऽग्निसंयोगेनैकेनैकयोनयश्च पाकजा इति सति चार्थान्तरभावे ॥ ५ ॥

तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः* ॥ ६ ॥

भा०–मोहः पापः पापतरो वा द्वावभिप्रेत्योक्तम् । कस्मात् । नामूढस्येतरोत्पत्तेः । अमूढस्य रागद्वेषौ नोत्पद्येते, मूढस्य तु यथासंकल्पमुत्पत्तिः । विषयेषु रञ्जनीयाः संकल्पा रागहेतवः । कोपनीयाः संकल्पा द्वेषहेतवः । उभये च संकल्पा न मिथ्याप्रतिपत्तिलक्षणत्वान्मोहादन्ये, ताविमौ मोहयोनी रागद्वेषाविति । तत्त्वज्ञानाच्च मोहनिवृत्तौ रागद्वेषानुत्पत्तिरित्येकप्रत्यनीकभावोपपत्तिः । एवं च कृत्वा तत्त्वज्ञानात् ' दुःखजन्मप्रवृत्तिदोषमि-

---

वृ०–शङ्कते–रागादीनां भेदो न, एकप्रत्यनीकभावात् । एकस्मिन्प्रत्यनीकभावो विरोधित्वं यस्य तत्तथा तेनैकनाश्यत्वादित्यर्थः । एकं हि तत्त्वज्ञानं तेषां विरोधि ॥ ४ ॥

वृ०–समाधत्ते—एकविरोधित्वं भेदनिषेधे न हेतुर्व्यभिचारादेकाग्निसंयोगनाश्यत्वेऽपि रूपादीनां भेदात् ॥ ५ ॥

वृ०–किं च नैतेषामेकनिवर्त्यत्वं तत्त्वज्ञानस्य मोहनिवर्तकत्वात्तन्निवृत्त्या रागादिनिवृत्तेरित्याशयेनाऽऽह—यद्यपि बहूनां निर्धारण इष्ठनस्तमपो वा विधानात्पापतमः पापिष्ठ इति वा युक्तं तथाऽपि द्वौ द्वावधिकृत्य निर्धारणं द्वयोर्निर्धारण ईयसुनो विधानात्तेन रागमोहयोर्द्वेषमोहयोर्वा मोहः पापीयान् । अनर्थमूलं बलवद्द्वेष्य इति यावत् । हेतुमाह—नामूढस्य मोहशून्यस्य रागद्वेषयोरभावादित्यर्थः । न च तत्त्वज्ञानिनोऽपि हिताहितगोचरप्रवृत्तिनिवृत्ती रागद्वेषाधीने

---

* अमूढस्येतरोत्पत्तिर्न भवति यत इत्यर्थे नामूढस्येतरोत्पत्तेरित्युक्तमिति बोध्यम् ।

थ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः' इति व्याख्यातमिति ॥ ६ ॥

भा०—प्राप्तस्तर्हि—

निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥

अन्यद्धि निमित्तमन्यच्च नैमित्तिकमिति दोपनिमित्तत्वाददोषो मोह इति ॥ ७ ॥

* न दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥

भा०–'प्रवर्तनालक्षणा दोषाः' ( १ । १ । १८ ) इत्यनेन दोषलक्षणेनावरुध्यते दोषेषु मोह इति ॥ ८ ॥

निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥

भा०–द्रव्याणां गुणानां वाऽनेकविधविकल्पो निमित्तनैमित्तिकभावे तुल्यजातीयानां दृष्ट इति ॥ ९ ॥

इति दोषपरीक्षाप्रकरणम् ॥ २ ॥

---

इति तत्र व्यभिचार इति वाच्यम् । धर्माधर्मप्रयोजकरागद्वेषयोर्दोषत्वेन विवक्षितत्वादेतदभिप्रायकमेवाऽऽसक्तो द्विपंश्च मुक्त इत्यादिकमपीति भावः ॥ ६ ॥

वृ०–शङ्कते—दोषनिमित्तत्वान्मोहस्य दोषभिन्नत्वं स्यादभेदेन कार्यकारणभावाभावात् । दोषेभ्य इत्यान्तर्गणिकभेदाद्बहुवचनम् । 'प्राप्तस्तर्हि' इत्यंशस्तु न सूत्रं किंतु भाष्यकृतः पूरणमित्यपि वदन्ति ॥ ७ ॥

वृ०–निराकरोति—मोहस्य दोषलक्षणसत्त्वाद्दोषत्वं व्यक्तिभेदाच्च हेतुहेतुमद्भावो न विरुध्यत इति भावः ॥ ८ ॥

वृ०–अप्रयोजकमुक्त्वाऽनैकान्तिकत्वमप्याह—एकजातीययोरपि द्रव्ययोर्गुणयोश्च निमित्तनैमित्तकयोरुपपत्तेर्हेतुहेतुमद्भावस्वीकारात्तुल्यजातीयत्वप्रतिषेधो न युक्त इति ॥ ९ ॥

इति दोषपरीक्षाप्रकरणम् ॥ २ ॥

---

* दोषनिमित्तत्वादिति हेतोरप्रयोजकत्वमाह—न दोषेत्यादिना ।

भा०—दोषानन्तरं प्रेत्यभावस्तस्यासिद्धिरात्मनो नित्यत्वात् । न खलु नित्यं किंचिज्जायते म्रियत इति जन्ममरणयोर्नित्यत्वादात्मनोऽनुपपत्तिः । उभयं च प्रेत्यभाव इति तत्रायं सिद्धानुवादः—

आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥

नित्योऽयमात्मा प्रैति पूर्वशरीरं जहाति म्रियत इति प्रेत्य च पूर्वशरीरं हित्वा शरीरान्तरमुपादत्त इति तच्चैतदुभयम् ‘ पुनरुत्पत्तिः प्रेत्यभावः ’ ( १ । १ । १९ ) इत्यत्रोक्तं पूर्वशरीरं हित्वा शरीरान्तरोपादानं[1] प्रेत्यभाव इति तच्चैतन्नित्यत्वे संभवतीति । यस्य तु सत्त्वोत्पादः सत्त्वनिरोधः प्रेत्यभावस्तस्य कृतहानमकृताभ्यागमश्च दोषः । उच्छेदहेतुवाद ऋष्युपदेशाश्चानर्थका इति ॥ १० ॥

भा०—कथमुत्पत्तिरिति चेत्—

व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥

केन प्रकारेण किंधर्मकात्कारणाद्व्यक्तं शरीराद्युत्पद्यत इति । व्यक्ताद्भूतसमाख्यातात्पृथिव्यादितः परमसूक्ष्मान्नित्याद्व्यक्तं

---

वृ०—क्रमप्राप्ततया प्रेत्यभावे परीक्षणीये प्रेत्यभावः शरीरस्य बुद्धेरात्मनो वेति संशये ‘ पुनरुत्पत्तिः प्रेत्यभावः ’ ( १ । १ । १९ ) इति लक्षणसूत्राद्विनष्टस्योत्पादः प्रतीयते । न चासौ नित्यस्याऽऽत्मनः संभवतीति शरीरादेः स्यात् । न च मृतस्य शरीरादेरुत्पत्तिविरोधाच्चेदं युक्तमिति वाच्यम् । प्रेत्यभाव इत्यस्य मुखं व्यादाय स्वपितीतिवद्व्यत्ययेन भूत्वा प्रायणमित्यर्थात् । अत्र सिद्धान्तसूत्रम् । आत्मनः पूर्वोक्तयुक्त्या नित्यत्वे प्रेत्यभावस्तस्य सिध्यति । एकजातीयशरीराद्यसंबन्धचरमसंबन्धनाशयोरुत्पादप्रायणयोरात्मनः संभवात् । संबन्धस्त्ववच्छेद्यावच्छेदकभावलक्षणः । स च स्वरूपसंबन्धविशेषोऽतिरिक्तो वेत्यन्यदेतत् । लक्षणसूत्रे पुनरुत्पत्तिरित्यत्र पुनःपदं प्रेत्यभावप्रवाहस्यानादित्वज्ञापनाय । तज्ज्ञानं च वैराग्य उपयुज्यत इति ॥ १० ॥

वृ०—ननु प्रेत्यभाव उत्पत्तिनिरूप्यः । सा च न सजातीयाद्विजातीयाद्वा संभवति । आद्यपृथिव्यादौ व्यभिचारात्तन्नित्यत्वे मानाभावादतः प्रेत्यभावोऽ-

---

१ ख, ग, घ. ‘रवुत्प’ ।

शरीरेन्द्रियविषयोपकारणाधारं प्रज्ञातं द्रव्यमुत्पद्यते । व्यक्तं च खल्विन्द्रियग्राह्यं तत्सामान्यात्कारणमपि व्यक्तम् । किं सामान्यम् । रूपादिगुणयोगः । रूपादिगुणयुक्तेभ्यः पृथिव्यादिभ्योऽनित्येभ्यो रूपादिगुणयुक्तं शरीराद्युत्पद्यते प्रत्यक्षप्रामाण्यात् । दृष्टो हि रूपादिगुणयुक्तेभ्यो मृत्प्रभृतिभ्यस्तथाभूतस्य द्रव्यस्योत्पादः । तेन चादृष्टस्यानुमानमिति । रूपादीनामन्वयदर्शनात्प्रकृतिविकारयोः पृथिव्यादीनामतीन्द्रियाणां कारणभावोऽनुमीयत इति ॥ ११ ॥

न घटाद्घटानिष्पत्तेः ॥ १२ ॥

भा०—इदमपि प्रत्यक्षं न खलु व्यक्ताद्घटाद्व्यक्तो घट उत्पद्यमानो दृश्यत इति व्यक्ताद्व्यक्तस्यानुत्पत्तिदर्शनान्न व्यक्तं कारणमिति ॥ १२ ॥

व्यक्ताद्घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥

भा०—न ब्रूमः सर्वं सर्वस्य कारणमिति किंतु यदुत्पद्यते व्यक्तं द्रव्यं तत्तथाभूतादेवोत्पद्यत इति । व्यक्तं च तन्मृद्द्रव्यं कपालसं-

---

सिद्ध इत्युपोद्घातप्रसङ्गाद्वोत्पत्तिप्रकारं दर्शयति—व्यक्तानामुत्पत्तिरिति शेषः । व्यक्ताद्व्यक्तजातीयात्पृथिव्यादितो व्यक्तानां व्यक्तजातीयानां जन्यपृथिव्यादीनामुत्पत्तिः । इत्थं च पृथिव्यादेः पृथिव्यादितो रूपवदादितश्च रूपवदादीनामुत्पत्तेः प्रत्यक्षसिद्धत्वात्परमाणुरपि कल्प्यते । त्रसरेणोरपकृष्टमहत्त्वेन सावयवावयवत्वसिद्धेस्तस्य लाघवान्नित्यत्वमिति भावः ॥ ११ ॥

वृ०—अबुद्ध्वा शङ्कते—विशेषकार्यकारणभावाभावे सामान्यतोऽपि न तथेति भावः ॥ १२ ॥

वृ०—विशेषतो व्यभिचारो न विरोधी सामान्यतस्तु नास्त्येवेत्याशयवान्समाधत्ते—सजातीयासजातीयोत्पत्तेर्न प्रतिषेधः । पृथिवीजातीयात्कपालादितो

र्कं यतो घट उत्पद्यते। न चैतस्मिन्हेतुं ब्रुवाणः कचिदभ्यनुज्ञां लब्धु-
* मर्हतीति। तदेतत्तत्त्वम् ॥ १३ ॥

इति प्रेत्यभावपरीक्षाप्रकरणम् ॥ ३ ॥

---

भा०—अतः परं प्रावादुकानां दृष्टयः प्रदर्श्यन्ते—

अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥

असतः सदुत्पद्यत इत्ययं पक्षः। कस्मात्। उपमृद्य प्रादु-
र्भावात्। उपमृद्य बीजमङ्कुर उत्पद्यते। नानुपमृद्य न चेद्बीजोप-
मर्दोऽङ्कुरकारणमनुपमर्देऽपि बीजस्याङ्कुरोत्पत्तिः स्यादिति ॥१४॥

भा०—अत्राभिधीयते—

व्याघातादप्रयोगः+ ॥ १५ ॥

उपमृद्य प्रादुर्भावादित्ययुक्तः प्रयोगो व्याघातात्। यदुपमृ-
द्नाति न तदुपमृद्य प्रादुर्भवितुमर्हति विद्यमानत्वात्। यच्च प्रादु-
र्भवति न तेन प्रादुर्भूतेनाविद्यमानेनोपमर्द इति ॥ १५ ॥

---

घटादिनिष्पत्तेरुक्तापादनं चाप्रयोजकमिति भावः ॥ १३ ॥

इति प्रेत्यभावपरीक्षाप्रकरणम् ॥ ३ ॥

---

वृ०—अथात्राष्टौ प्रकरणानि प्रसङ्गाद्व्यक्तानामित्येतत्सिद्ध्यर्थमुपोद्घाताद्वा।
तत्राऽऽदौ शून्यतोपादानप्रकरणम्। तत्र पूर्वपक्षसूत्रम्। कार्याणां भावानामु-
त्पत्तिर्यतोऽङ्कुरादेर्बीजादिकमनुपमृद्य प्रादुर्भावाभावात्तथा च बीजादिविनाशोऽ-
ङ्कुराद्युपादानमिति ॥ १४ ॥

वृ०—अत्रोत्तरम्—उपमृद्य प्रादुर्भवतीति न युक्तः प्रयोगो व्याघातात्।
उपमर्दकस्य पूर्वमसत्त्व उपमर्दकत्वायोगात्पूर्वं सत्त्वे च परतः प्रादुर्भावायो-
गात् ॥ १५ ॥

---

* प्रत्यक्षप्रमाणापलापी न कस्मिन्नपि दर्शने संवादं लब्धुं योग्यः स्यादिति भावः।
+ प्रादुर्भावस्योपमर्दोत्तरकालिकत्वेनोपमर्दात्पूर्वमविद्यमानस्योपमर्दे हेतुत्वोक्तिर्व्याहतेति भावः।

नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥

भा०—अतीते चानागते चाविद्यमाने कारकशब्दाः प्रयुज्यन्ते। पुत्रो जनिष्यते जनिष्यमाणं पुत्रमभिनन्दति पुत्रस्य जनिष्यमाणस्य नाम करोति अभूत्कुम्भो भिन्नं कुम्भमनुशोचति भिन्नस्य* कुम्भस्य कपालानि अजाताः पुत्राः पितरं तापयन्तीति बहुलं भाक्ताः प्रयोगा दृश्यन्ते। का पुनरियं भक्तिः। आनन्तर्यं भक्तिः। आनन्तर्यसामर्थ्यादुपमृद्य प्रादुर्भावार्थः प्रादुर्भविष्यन्नङ्कुर उपमृद्नातीति भाक्तं कर्तृत्वमिति ॥ १६ ॥

न विनष्टेभ्योऽनिष्पत्तेः + ॥ १७ ॥

भा०—न विनष्टाद्बीजादङ्कुर उत्पद्यत इति। तस्मान्नाभावाद्भावोत्पत्तिरिति ॥ १७ ॥

क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥

भा०—उपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः। स खल्वभावाद्भावोत्पत्तेर्हेतुर्निर्दिश्यते। स च न प्रतिषिध्यत इति। व्याहतव्यूहाना-

---

वृ०—पूर्वपक्षी दूषयति—नायुक्तः प्रयोगोऽतीतेऽनागते च कारकशब्दप्रयोगात्कर्तृकर्मादिबोधकशब्दप्रयोगात्। यथा जनिष्यते पुत्रः जनिष्यमाणं पुत्रमभिनन्दति अभूत्कुम्भो भिन्नं कुम्भमनुशोचति ॥ १६ ॥

वृ०—नन्वास्तामौपचारिकः प्रयोगस्तथाऽपि बीजादेर्विनष्टस्योपादानत्वं मन्यसे बीजादिविनाशस्य वा। अन्त्येऽपि तस्योपादानत्वं निमित्तत्वं वा तत्राऽऽदावुत्तरम्—विनष्टानां बीजादीनामुपादानत्वायोगात्। अत एव न द्वितीयः, तत्र विनष्टं विनाशस्ततो नोत्पत्तिः, द्रव्यत्वस्य भावकार्यसमवायिकारणतावच्छेदकत्वात् ॥ १७ ॥

वृ०—तृतीये त्वाह—अभावस्य कारणत्वं न प्रतिषिध्यते प्रतिबन्धकाभावस्य हेतुत्वोपगमादित्याह—क्रमेति। बीजे विनष्टेऽङ्कुरो जायत इति प्रत्यया-

---

* भिन्नस्य कुम्भस्य कपालानीति यद्यपि न साक्षात्कारकशब्दस्तथाऽपि षष्ठ्या संबन्धाभिधानात्तस्य क्रियागर्भत्वात्क्रियायाश्च कारकनान्तरीयकत्वात्पारम्पर्येण कारकशब्दता द्रष्टव्या। + यदि बीजविनाशोऽङ्कुरोत्पादहेतुस्तर्हि विनष्टे बीजे तदवयवेषु परस्परविच्छिन्नेषु असति च तेषां व्यूहान्तरे कस्मादङ्कुरो न भवति सति तु तेषां व्यूहे भवति। कस्माद्विनष्टेभ्योऽङ्कुरानुत्पत्तेरसति व्यूहे न बीजविनाशः कारणमिति सूत्रार्थः।

मवयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तराद्द्रव्यनिष्पत्तिर्नाभावात् । बीजावयवाः कुतश्चिन्निमित्तात्प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति व्यूहान्तरं चाऽऽपद्यन्ते व्यूहान्तरादङ्कुर उत्पद्यते । दृश्यन्ते खल्ववयवास्तत्संयोगाश्चाङ्कुरोत्पत्तिहेतवः । न चानिवृत्ते पूर्वव्यूहे बीजावयवानां शक्यं व्यूहान्तरेण भवितुमित्युपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः । तस्मान्नाभावाद्भावोत्पत्तिरिति । न चान्यबीजावयवेभ्योऽङ्कुरोत्पत्तिकारणम्, इत्युपपद्यते बीजोपादाननियम इति ॥ १८ ॥

इति शून्यतोपादननिराकरणप्रकरणम् ॥ ४ ॥

---

भा०—अथापर आह—

**ईश्वरः * कारणं पुरुषकर्माफल्यदर्शनात् ॥ १९ ॥**

पुरुषोऽयं समीहमानो नावश्यं समीहाफलमाप्नोति तेनानुमी-

---

बीजस्य प्रतिबन्धकस्याभावः कारणम् । बीजे विनष्टे हि तदवयवैर्जलाभिषिक्तभूम्यवयवसहितैरङ्कुर आरभ्यते । अभावमात्रस्य कारणत्वे चूर्णीकृतादपि बीजादङ्कुरोत्पत्तिः स्यादभावस्य निर्विशेषत्वादिति भावः ॥ १८ ॥

इति शून्यतोपादाननिराकरणप्रकरणम् ॥ ४ ॥

---

वृ०—मतान्तरमाह—अनेन ब्रह्मपरिणामवादो ब्रह्मविवर्तवादो वा दर्शित

---

* मा भूदयं नामरूपप्रपञ्चः शून्यतोपादानकः, अपि तु ब्रह्मोपादानको भविष्यति । उपादानं च द्विविधं परिणाम्युपादानं विवर्तोपादानं च । परिणामो नाम—उपादानसमसत्ताककार्यापत्तिः । विवर्तो नाम—उपादानविषमसत्ताककार्यापत्तिः । आद्ये ब्रह्मैव प्रपञ्चरूपेण परिणमते मृत्तिकेव घटशरावोदञ्चनादिभावेन । न चैवं नित्यत्वव्याघातः । परिणामेऽपि तत्त्वानपायात्तल्लक्षणत्वाच्च नित्यतायाः । तदुक्तं महाभाष्ये यस्मिंस्तत्त्वं न विहन्यते तदपि नित्यमिति । द्वितीये ब्रह्मैवानाद्यविद्यावशान्नामरूपप्रपञ्चभेदेन विवर्तते मुखमिवैकमनेकमणिकृपाणादर्शभेदान्नैकविधप्रतिबिम्बभेदेन । एवं चात्रेश्वरो नाम ब्रह्म, ईशनायोगात् । चेतनाशक्तिः क्रियाशक्तिश्चेशना सा चास्ति ब्रह्मणीति ब्रह्मेश्वरः कारणं जगतः । श्रूयते हि तदैक्षत बहु स्यां प्रजायेयेति । सा चेयं चेतनस्य जगत्कारणतामाह । न ह्यभावो वा प्रधानं वा परमाणवो वा चेतयन्ते येन जगत्कारणानि स्युः । ननु जीवा एव चेतनास्तत्कर्मनिबन्धनो नामरूपप्रपञ्चो भविष्यति कृतमत्र भगवतेश्वरेणेत्याशङ्कयोक्तं पुरुषकर्माफल्यदर्शनादिति । पुरुषश्चेतयते नैव निष्फलं कर्माऽऽरभेत । निष्फलं विद्वान्प्रवर्तमानः कथं चेतनो नाम तस्मात्पुरुषकर्माफल्यदर्शनादीश्वरः कारणमिति भावः ।

यतो पराधीनं पुरुषस्य कर्मफलाराधनमिति । यदधीनं स ईश्वरः । तस्मादीश्वरः कारणमिति ॥ १९ ॥

न * पुरुषकर्माभावे फलानिष्पत्तेः ॥ २० ॥

भा०—ईश्वराधीना चेत्फलनिष्पत्तिः स्यादपि तर्हि पुरुषस्य समीहामन्तरेण फलं निष्पद्येतेति + ॥ २० ॥

---

इति वदन्ति । तथाहि—ब्रह्मैव नामरूपप्रपञ्चभेदेन विपरिणमते मृत्तिकेवोदञ्चनादिभावेन । अत एव प्राकृतरूपस्य सत्त्वस्यापरित्यागः प्रपञ्चेषूदञ्चनादाविव मृत्तिकात्वस्येति परिणामवादः । ब्रह्मैव चानाद्यनिर्वचनीयाविद्यावशान्नानारूपेण विवर्तते मुखमिव तत्तज्जलाद्यालम्बनभेदादिति विवर्तवादः । ननु पुरुषकर्मैव कारणमस्तु किमीश्वरस्य कारणत्वेनेत्यत आह—पुरुषेति । पुरुषकर्मणो हि वैफल्यमपि दृश्यते सहकार्यन्तरमवश्यं वाच्यम् । तथा चेश्वर एव यथा यथेच्छति तथा जगद्विपरिवर्तत इत्येवास्तु किं पुरुषकर्मणेति भावः । वस्तुतस्तु केवलेश्वरकारणतापरं प्रकरणं तदुपादानतापरत्वे तु न किमपि मानमाकलयाम इति ॥ १९ ॥

वृ०—समाधत्ते—केवलब्रह्मण एव हेतुत्वे तदिच्छाया अप्यतिरिक्तायास्तद्विषयतायाश्चानभ्युपगमादभ्युपगमे द्वैतापत्तिरतः सर्वं सर्वदा स्यान्न स्याद्वा कार्यवैचित्र्यमिति । पुरुषकर्मणोऽपि सहकारिताऽऽवश्यकी । ब्रह्मण उपादानत्वं तु न संभवति । असमवायिकारणासंभवात् । तस्य कारणमात्रं त्विष्यत एवेति भावः ॥ २० ॥

---

* यदुक्तं मृत्तिकेव नामरूपप्रपञ्चरूपेण ब्रह्म परिणमत इति । तत्रेदं प्रष्टव्यं किं सर्वात्मना परिणमत आहोस्विदेकदेशेन । नाऽऽद्यः । सर्वात्मना परिणामे तत्त्वविघातादनित्यत्वमापद्यते । नान्त्यः । एकदेशेन परिणामे ब्रह्मणः सावयवत्वात्तथैवानित्यत्वापत्तिः । नापि ब्रह्म विवर्तते । निर्भागस्यैकस्य स्वसंवेदनप्रत्यक्षस्य विपरीतज्ञानगोचरत्वासंभवात् । दृष्टो हि शुक्तिरजतादौ सामान्यतो ग्रहे रूपविशेषाग्रहे च तदन्यरूपारोपेण विभ्रमः । न जातु शुक्तिरूपं विद्वान्रजतमिति विपर्यस्यति । न च निरंशे स्वसंवेदनप्रत्यक्षे ब्रह्मणि तत्स्वरूपाग्रहः सामान्यग्रहो वा भवति । तस्मादीश्वरो जगद्भेदेन विवर्तत इत्ययुक्तम् । किंतु जगतो निमित्तमीश्वर इति भावः । + ततश्च कर्मलोपोऽनिर्मोक्षश्च स्यात् । ईश्वरस्यैकरूपत्वेन तदिच्छाया अपि एकरूपत्वात् । यदि कारणभेदानुविधानेनेश्वरः कार्यं निर्वर्तयतीति ब्रूषे तर्हि यदपेक्षते तन्न करोतीति प्राप्तम् । नहि कुलालो दण्डादि करोति । एवं च कर्मसापेक्षश्चेदीश्वरो जगदुत्पत्तिकारणं स्यात्तर्हि कर्मणीश्वरो नेश्वरः स्यात् । तथा च तत्तत्कारणानि नेश्वरेण प्रयुज्यन्त इति स्यादिति भावः ।

**तत्*कारितत्वादहेतुः ॥ २१ ॥**

भा०—पुरुषकारमीश्वरोऽनुगृह्णाति फलाय पुरुषस्य यतमानस्येश्वरः फलं संपादयतीति। यदा न संपादयति तदा पुरुषकर्माफलं भवतीति। तस्मादीश्वरकारितत्वादहे+तुः पुरुषकर्माभावे फलानिष्पत्तेरिति । गुण×विशिष्टमात्मान्तरमीश्वरः। तस्याऽऽ=त्मकल्पात्कल्पान्तरानुपपत्तिः। अधर्ममिथ्याज्ञानप्रमादहान्या धर्मज्ञानसमाधिसंपदा च विशिष्टमात्मान्तरमीश्वरः। तस्य च धर्मसमाधिफल-

---

वृ०—नन्वेवं पुरुषव्यापारस्य फले व्यभिचारो न स्यादिति चेदत्राऽऽह—फलाभावस्य पुरुषकर्माभावकारितत्वात्पुरुषस्य कर्मादृष्टं तदभावाधीनत्वात्पुरुषकारोऽहेतुः फलानुपधायकः। नन्वीश्वर एव क इत्यत्र भाष्यम्—गुणविशिष्टमात्मान्तरमीश्वरः। गुणैर्नित्यज्ञानेच्छाप्रयत्नैः सामान्यगुणैश्च संयोगादिभिर्विशिष्टमान्तरं जीवेभ्यो भिन्न आत्मा जगदाराध्यः सृष्ट्यादिकर्ता वेदद्वारा हिताहितोपदेशको

---

* तदेवं ब्रह्मोपादानत्वं ब्रह्मविवर्तत्वं च तथा निरपेक्षेश्वरनिमित्तत्वं च प्रत्याख्यायाभिमतं पक्षं गृह्णाति—तत्कारितेति । + परमाणूपादानकस्य जगतः पुरुषकर्मापेक्ष ईश्वरो निमित्तम्। यच्च तेनापेक्षणीयं पुरुषकर्म तदपीश्वरनिमित्तकमेव। न च यदपेक्षते तस्यानिमित्तम्। वास्यादेस्तक्षसहकारिणस्तक्षनिमित्तकत्वदर्शनात्। तस्मादीश्वरकारितत्वात्पुरुषकारस्य तत्सहाय ईश्वरो निमित्तकारणं जगत इत्यस्य पक्षस्य निराकरणविषये 'पुरुषकर्माभावे फलानिष्पत्तेः' इत्यहेतुः। निरपेक्षेश्वरनिमित्तत्वे तु हेतुरेवेति भावः। × संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धय एव तस्य गुणा इति वार्तिककाराः। अत्र बुद्धिपदमिच्छाप्रयत्नयोरप्युपलक्षकम्। तथाहि—क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानेन क्षित्यङ्कुरादिषु सकर्तृकत्वसिद्धौ तदुपपत्त्यर्थं जीवभिन्नः कश्चित्कर्ता स्वीकार्यः। स चेश्वरः। नहि जीवेषु क्षित्यङ्कुरादिजनकं सामर्थ्यं दृश्यते। एवं चेश्वरे कर्तृत्वसिद्धिः। कर्तृत्वं च ज्ञानचिकीर्षाप्रयत्नसमवायवत्त्वम्। तथा च सकर्तृकत्वसिद्ध्यन्तर्गतत्वेनेच्छाप्रयत्नौ नित्यावीश्वरे मन्तव्याविति बोध्यम्। तथा चोक्तम्—संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे। इति। = आत्मकल्पात्=आत्मप्रकारादात्मजातीयादिति यावत्। ननु आत्मान्तराण्यनित्यज्ञानयोगीनि दृष्टानि तद्विलक्षणादीश्वरो नाऽऽत्मजातीयो भवितुमर्हतीत्यत आह—आत्मकल्पादिति। यद्यप्यात्मान्तराण्यनित्यज्ञानयोगीनि अयं च नित्यबुद्ध्यादियुक्तस्तथाऽपि आत्मजातीय एव बुद्ध्यादिगुणयोगित्वात्। अन्यथा तोयादिपरमाणूनामतोयादित्वप्रसङ्गो नित्यरूपादियोगात्करकादिगतानां रूपादीनामनित्यत्वोपलब्धेरिति भावः।

मणिमाद्यष्टविधमैश्वर्यम् । संक*ल्पानुविधायी चास्य धर्मः प्रत्यात्मवृत्तीन्धर्माधर्मसंचयान्पृथिव्यादीनि च भूतानि प्रवर्तयति । एवं च स्वकृताभ्यागमस्या+लोपेन निर्माणप्राकाम्यमीश्वरस्य स्वकृतकर्मफलं वेदितव्यम् । आ×प्तकल्पश्चायं यथा पिताऽपत्यानां तथा पितृभूत ईश्वरो भूतानाम् । न चाऽऽत्मकल्पादन्यः कल्पः संभवति । न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उपपादयितुम् । आगमाच्च द्रष्टा, बोद्धा, सर्वज्ञाता, ईश्वर इति । बुद्ध्यादिभिश्चाऽऽत्मलिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमविषयातीतं कः शक्त उपपादयितुम् । + स्वकृताभ्यागमलोपेन च प्रवर्तमानस्यास्य

---

जगतः पितेति । परे तु प्रसङ्गादीश्वरप्रतिपादनाय तावत्त्रिसूत्री । तथाहि—ईश्वरः कारणमर्थाज्जन्यजातस्य । अनुमानं तु क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदित्यूह्यम् । ननु जीवानामेव कर्तृत्वं स्यादत्राऽऽह— पुरुषेति । पुरुषकर्मणां वैफल्यं दृश्यते । तथा च विफले कर्मणि प्रवर्तमानत्वादज्ञत्वं जीवानाम् । यत उपादानगोचरापरोक्षज्ञानादिमतो हि कर्तृत्वम् । न च क्षित्याद्युपादानगोचरज्ञानं जीवानामिति भावः । नन्वदृष्टद्वारा जीवानां कर्तृत्वमस्त्वित्याशङ्क्ते—न पुरुषेति ।

---

* नन्वस्य कर्मानुष्ठानाभावात्कुतो धर्मः । तथा चाणिमादिकमस्यैश्वर्यं कार्यरूपं विनैव कर्मणेत्यकृताभ्यागमप्रसङ्ग इत्यत आह–संकल्पेति । + मा भूद्बाह्यानुष्ठानं संकल्पलक्षणानुष्ठानजनितधर्मफलमस्यैश्वर्यं जगन्निर्माणफलमिति नाकृताभ्यागमप्रसङ्ग इत्यर्थः । × ननु प्रयोजनं विना प्रेक्षावतां न प्रवृत्तिः । न च प्राप्तसकलप्राप्तव्यस्येश्वरस्यास्ति किंचित्प्रापणीयम् । तस्मात्कृतमस्य जगन्निर्माणेनेत्याशङ्क्याऽऽह–आप्तकल्पश्चेति । माभूदस्य भगवतः स्वार्थः, परानुग्रहार्थं प्रवर्त्स्यतीत्यर्थः । + नुन यदि कारुण्यादीश्वरो जगन्निर्माणे प्रवर्तते हन्त भोः सुखिनमेव सृजेन्न दुःखिनम् । न च जीवगतधर्माधर्मसहकारितया निर्माणवैचित्र्यमिति वाच्यम् । स्वकार्याकरणेन तदनधिष्ठितस्याधर्मस्य कारुणिकेनाधिष्ठानायोगात् । तस्मात्सुखिदुःख्यादिभेदेन जगद्वैचित्र्यदर्शनान्नानुकम्पाप्रयुक्त ईश्वरः करोतीत्यत आह–स्वकृताभ्यागमलोपेन प्रवर्तमानस्येति । पुरुषैर्यत्कृतं तत्फलाभ्यागमलोपेन प्रवर्तमानस्येत्यर्थः । अयमभिसंधिः—कारुणिकोऽप्ययमात्मान्तरातिशायिमहिमाऽपि न वस्तूनां सामर्थ्यमन्यथा कर्तुं पारयति । तस्मादधर्मेणोत्पत्तिमता नेश्वरप्रभावादपि नित्येन भवितुं युक्तम् । न च स्वफलविरोधिना फलमप्रदाय विनंष्टुमपि शक्यम् । अतः क्षेत्रज्ञानां नियतिमलङ्घयतेश्वरेण नाधर्मः शक्योऽनधिष्ठातुम् । तस्मात्कारुणिकोऽप्ययं वस्तुस्वभावमनुविधीयमानो धर्माधर्मसहकारी जगद्वैचित्र्यं विधत्त इति ।

यदुक्तं प्रतिषेधजातमकर्मनिमित्ते शरीरसर्गे तत्सर्वं प्रसज्यत इति ॥ २१ ॥

इतीश्वरोपादानताप्रकरणम् ॥ ५ ॥

---

भा०—अपर इदानीमाह—

**अनिमित्ततो * भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥ २२ ॥**

अनिमित्ता शरीराद्युत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् । कण्टकस्य तैक्ष्ण्यं वर्तते धातूनां चित्रता ग्राव्णः श्लक्ष्णता निर्निमित्तं चोपादानं दृष्टं तथा शरीरसर्गोऽपीति ॥ २२ ॥

---

फलस्य कार्यस्य कर्माभावेऽनिष्पत्तेः । तत्तत्पुरुषोपभोगसाधनत्वात्तत्कर्मजन्यत्वमिति स्फोरणाय पुरुषेति । समाधत्ते—तदिति । कर्मणाऽपि तत्कारितत्वादीश्वरकारितत्वादचेतनस्य चेतनाधिष्ठितस्यैव जनकत्वादिति भावः ॥ २१ ॥

इतीश्वरोपादानताप्रकरणम् ॥ ५ ॥

---

वृ०—यदि च कार्याणामाकस्मिकत्वं तदा न परमाण्वादीनामुपादानत्वम् । न चेश्वरस्य निमित्तत्वमत आकस्मिकत्वनिराकरणमारभते । तत्र पूर्वपक्षसूत्रम् । अनिमित्तत इति प्रथमान्तात्तसिल् । अनिमित्ता भावोत्पत्तिरित्यर्थः । भावेति स्पष्टार्थम् । घटाद्युत्पत्तिर्न कारणनियम्या, उत्पत्तित्वात्कण्टकतैक्ष्ण्याद्युत्पत्तिवत् । यद्वा घटादिकं न सकारणकं भावत्वात्कण्टकतैक्ष्ण्यादिवत् । तैक्ष्ण्यं संस्थानविशेषः । आदिपदान्मयूरचित्रादिपरिग्रहः । तदकारणकमेवेत्याशयः ॥ २२ ॥

---

* कण्टकादीनां संस्थानभेदवतां निमित्तादर्शनेनानिमित्ततां मन्वानस्तेनैव दृष्टान्तेन शरीरादीनामपि संस्थानवतामनिमित्ततां मन्वानः पूर्वपक्षयति—अनिमित्तत इति । सिद्धान्ते तु शरीरकण्टकादीनां निमित्तवत्त्वमेव । तथा हि यथा शरीरं पक्षभूतं तथैव कण्टकादयोऽपि पक्षभूता एव । तथा च प्रयोगः—शरीरकण्टकादयः सनिमित्तकाः संस्थानवत्त्वात्पटवत् । एवं च पक्षैकदेशे कण्टके व्यभिचारो दुर्वचः । तथा सति सर्वानुमानोच्छेदप्रसङ्गः सर्वत्र तस्य सुलभत्वादिति बोध्यम् ।

अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥

भा०—-अनिमित्ततो भावोत्पत्तिरित्युच्यते यतश्चोत्पद्यते तन्निमित्तम् । अनिमित्तस्य निमित्तत्वान्नानिमित्ताभावोत्पत्तिरिति ॥ २३ ॥

निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥

भा०—-अन्यद्धि निमित्तमन्यच्च निमित्तप्रत्याख्यानम् । न च प्रत्याख्यानमेव प्रत्याख्येयम् । यथाऽनुदकः कमण्डलुरिति नोदकप्रतिषेध उदकं भवतीति । * स खल्वयं वादोऽकर्मनिमित्तः शरीरादिसर्ग इत्येतस्मान्न भिद्यते । अभेदात्तत्प्रतिषेधेनैव प्रतिषिद्धो वेदितव्य इति ॥ २४ ॥

इत्याकस्मिकत्वप्रकरणम् ॥ ६ ॥

———

वृ०—-एकदेशी भ्रान्तो दूषयति—अनिमित्तत इति हेतुपञ्चमीनिर्देशादनिमित्तस्यैव निमित्तत्वात्कथमनिमित्तत इति ॥ २३ ॥

वृ०—दूषयति—अनिमित्तस्य निमित्तस्य चार्थान्तरभावाद्भेदादुक्तः प्रतिषेधो न युक्तः । अनिमित्तस्य निमित्ता(त्त्वा)संभवात् । शरीरस्याकर्मनिमित्तत्वदूषणेनैव च तद्दूषितप्रायमित्याशयेन न दूषितमिति । नव्यास्तु सूत्रद्वयीमेवं व्याचक्षते—-समाधत्तेऽनिमित्तेति । अनिमित्तस्यानिमित्तत्वसाधकस्य निमित्तत्वादनिमित्तत्वानुमितिजनकत्वादनिमित्तत इति व्याहतम् । अनिमित्तत्वानुमितिजनकानभ्युपगमेऽनिमित्तत्वं न सिध्येदिति । कण्टकतैक्ष्ण्यादिकमपि नानिमित्तकम् । अदृष्टविशेषसहकृतैरणुभिस्तदुत्पादनादिति हृदयम् । दोषान्तरमाह—निमित्तेति । इदमत्र निमित्तमिदमनिमित्तमिति प्रतीत्या तयोर्भेदसिद्धेर्निमित्तप्रतिषेधो न युक्तः । इतरथा च सार्वलौकिकी प्रतीतिर्नोपपद्येतेति भावः ॥२४॥

इत्याकस्मिकत्वप्रकरणम् ॥ ६ ॥

———

* ननु कस्मात्पुनः पूर्वपक्षः स्वयमेव सूत्रकारेण न निराकृत इत्याशङ्क्याऽऽह—स खल्विति ।

भा०—अन्ये तु मन्यन्ते—

सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥

किमनित्यं नाम । यस्य कदाचिद्भावस्तदनित्यम् । उत्पत्तिधर्मकमनुत्पन्नं नास्ति विनाशधर्मकं चाविनष्टं नास्ति । किं पुनः सर्वम् । भौतिकं च शरीरादि, अभौतिकं च बुद्ध्यादि । तदुभयमुत्पत्तिविनाशधर्मकं विज्ञायते । तस्मात्तत्सर्वमनित्यमिति ॥ २५ ॥

नानित्यतानित्यत्वात् ॥ २६ ॥

भा०—यदि तावत्सर्वस्यानित्यता नित्या तन्नित्यत्वान्न सर्वमनित्यम् । अथानित्या तस्यामविद्यमानायां सर्वं नित्यमिति ॥ २६ ॥

तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥

भा०—तस्या अनित्यताया अप्यनित्यत्वम् । कथम् । यथाऽग्निर्दाह्यं विनाश्यानुविनश्यति एवं सर्वस्यानित्यता सर्वं विनाश्यानुविनश्यतीति ॥ २७ ॥

---

वृ०—सर्वस्यैवानित्यत्वे नाऽऽत्मादेरपि नित्यत्वं स्यादतः सर्वानित्यत्वनिराकरणप्रकरणम् । तत्र प्रमेयत्वमनित्यत्वव्याप्यं न वेति संशये पूर्वपक्षसूत्रम् । अनित्यं विनाशि उत्पत्तिमतो विनाशधर्मकत्वात् । उत्पत्तिमत्त्वं चाऽऽकाशादेरपि मेयत्वात्सिद्धमिति भावः । तेन परमते तत्र नासिद्धिः । यद्वोत्पत्तिविनाशधर्मकत्वादुत्पत्तिविनाशधर्मकाणां मानसिद्धत्वात्तद्भिन्नमप्रमाणकमिति हृदयम् । परे तु अनित्यत्वं कादाचित्कत्वमुत्पत्तिधर्मकत्वाद्विनाशधर्मकत्वादिति हेतुद्वये तात्पर्यमित्याहुः ॥ २५ ॥

वृ०—दूषयति—उत्पत्तिमत्त्वं न विनाशित्वसाधकमनित्यताया ध्वंसस्य नित्यत्वादविनाशित्वात्तत्र व्यभिचारात् ॥ २६ ॥

वृ०—आक्षिपति—तस्या अनित्यताया अप्यनित्यत्वम् । यथाऽग्निर्दाह्यस्येन्धनादेर्विनाशानन्तरं स्वयमपि नश्यति न तु दाह्योन्मज्जनं तथा घटादेरपि नाशो नश्यति न घटाद्युन्मज्जनं ध्वंसध्वंसस्यापि प्रतियोगिध्वंसत्वात् । ध्वंसप्रागभावानाधारकालस्य प्रतियोग्यधिकरणत्वमिति व्याप्तेरप्रयोजकत्वान्नोन्मज्जनमित्यन्ये ॥ २७ ॥

---

१ क. ग. च. °र्मकमवि° ।

नित्यस्याप्रत्याख्यानं यथोप-
लब्धि व्यवस्थानात् ॥ २८ ॥

भा०—अयं खलु वादो नित्यं प्रत्याचष्टे नित्यस्य च प्रत्याख्यान-मनुपपन्नम्। कस्मात्। यथोपलब्धि व्यवस्थानात्। यस्योत्पत्ति-विनाशधर्मकत्वमुपलभ्यते प्रमाणतस्तदनित्यम्। यस्य नोपल-भ्यते तद्विपरीतम्। न च परमसूक्ष्माणां भूतानामाकाशकालदि-गात्ममनसां तद्गुणानां च केषांचित्सामान्यविशेषसमवायानां चोत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते*। तस्मान्नित्यान्ये-वानीति ॥ २८ ॥

इति सर्वानित्यत्वनिराकरणप्रकरणम् ॥ ७ ॥

---

भा०—अथमन्य एकान्तः—

सर्वं नित्यं पञ्चभूत+नित्यत्वात् ॥ २९ ॥

भूतमात्रमिदं सर्वं तानि च नित्यानि भूतोच्छेदानुपपत्ते-रिति ॥ २९ ॥

---

वृ०—समाधत्ते—नित्यस्य नित्यत्वविशिष्टस्य नित्यत्वस्य न प्रत्याख्या-नमिति फलितम्। यथोपलब्धि उपलब्ध्यनतिक्रमेण तथा च धर्मिग्राहकमानेन आपततहुतेनाऽऽकाशादेर्नित्यत्वव्यवस्थापनादिति ॥ २८ ॥

इति सर्वानित्यत्वनिराकरणप्रकरणम् ॥ ७ ॥

---

वृ०—सर्वनित्यत्वे न प्रेत्यभावादिसिद्धिरतस्तन्निराकरणप्रकरणम्। तत्राऽऽ-क्षेपसूत्रम्। सर्वं नित्यं भूतत्वात्प्रमेयत्वाद्वा तत्र दृष्टान्तप्रदर्शनाय पञ्चभूतनि-त्यत्वादित्युक्तम्। तेन परमाण्वाकाशदृष्टान्तता लभ्यते ॥ २९ ॥

---

* सर्वस्य पक्षत्वे हि परमाण्वाकाशादिषु हेत्वभावेन भागासिद्धिः। कस्यचित्पक्षत्वे सिद्धसाधनमिति भावः। + पञ्चभूतात्मकं खल्वेतद् घटादिकार्यमुपलभ्यते। व्यपदिशन्ति हि घटो मृद्, शरीरं मृदिति। भूतानि च नित्यानि तेषामुच्छेदस्य नैयायिकैरनभ्युपगमात्। तेन भूतात्मनां गोघटादीनां नित्यतेति पूर्वपक्षः।

नोत्पत्ति*विनाशकारणोपलब्धेः ॥ ३० ॥

भा०—उत्पत्तिकारणं चोपलभ्यते विनाशकारणं च तत्सर्वनित्यत्वे व्याहन्यत इति ॥ ३० ॥

त+ल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥

भा०—यस्योत्पत्तिविनाशकारणमुपलभ्यत इति मन्यसे न तद्भूतलक्षणहीनमर्थान्तरं गृह्यते भूतलक्षणावरोधाद्भूतमात्रमिदमित्ययुक्तोऽयं प्रतिषेध इति ॥ ३१ ॥

नो×त्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥

भा०—कारणसमानगुणस्योत्पत्तिः कारणं चोपलभ्यते । न चैतदुभयं नित्यविषयम् । न चोत्पत्तितत्कारणोपलब्धिः शक्या प्रत्याख्यातुम् । न चाविषया काचिदुपलब्धिः । उपलब्धिसामर्थ्यात्कारणेन समानगुणं कार्यमुत्पद्यत इत्यनुमीयते स खलूपलब्धेर्विषय इति । एवं च तल्लक्षणावरोधोपपत्तिरिति । ÷उत्प-

---

वृ०—समाधत्ते—सर्वनित्यत्वं न युक्तम् । घटादीनामुत्पत्तिविनाशकारणानां कपालसंयोगमुद्गरपातादीनामुपलब्धेः । तथा चोत्पादविनाशावावश्यकाविति ॥ ३० ॥

वृ०—पुनः सांख्य आह—उक्तप्रतिषेधो न नित्यस्य परमाण्वादेर्यल्लक्षणं भूतत्वादि घटादौ तदवरोधात्तत्सत्त्वात् । तथा चोत्पादादिप्रत्ययो भ्रान्त इति भावः ॥ ३१ ॥

वृ०—दूषयति—अनित्यत्वनिषेधो न युक्तः । उत्पत्तेस्तत्कारणात्तत्प्रमापकादुपलब्धेः । तथा चोत्पादविनाशप्रतीतेः प्रामाणिकत्वान्न तन्निषेधः । इतरथा

---

* अयं भावः—भूतेभ्यो भौतिकानि भिन्नानि । नहि परमसूक्ष्माः परमाणवो गोघटादयः । परमाणुवत्तेषामतीन्द्रियत्वे सर्वाग्रहणप्रसङ्गात् । ग्रहणाग्रहणविरुद्धधर्मयोगादन्ये भौतिका भूतेभ्यः । तथा च तेषामुत्पत्तिविनाशकारणोपलब्धेर्न नित्यत्वं भूतनित्यत्वेऽपीति । + भूतसारूप्येण तादात्म्यं मन्यमानः पुनरपि पूर्वपक्षवाद्याह—तल्लक्षणेति । × भूतसारूप्यं गोघटादीनां भूतकार्यत्वेऽप्युपपद्यमानं न भूतात्मकत्वमवगमयतीत्याशयवानाह—नोत्पत्तीति । ÷ अपि च यद्युत्पत्तिविनाशौ भावानां न वस्तुसन्तौ कथं प्रेक्षावतामभिमतोत्पत्तिकारणेऽनभिमतविनाशकारणे च तदर्थिनां प्रवृत्तिरित्याह—उत्पत्तीति ।

त्तिविनाशकारणप्रयुक्तस्य ज्ञातुः प्रयत्नो दृष्ट इति । प्रसिद्धश्चा-
वयवी तद्धर्मा, उत्पत्तिविनाशधर्मा चावयवी सिद्ध इति ।

शब्दकर्मबुद्ध्यादीनां चाव्याप्तिः । पञ्चभूतनित्यत्वात्तल्लक्षणा-
परोधाच्चेत्यनेन शब्दकर्मबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्च न व्याप्ता-
स्तस्मादनेकान्तः* ।

स्वप्नविषयाभिमानवन्मिथ्योपलब्धिरिति चेद्भूतोपलब्धौ तुल्यम् ।
यथा स्वप्ने विषयाभिमान एवमुत्पत्तिकारणाभिमान इति ।
एवं चेतद्भूतोपलब्धौ तुल्यं पृथिव्याद्युपलब्धिरपि स्वप्नविष-
याभिमानवत्प्रसज्यते ।

पृथिव्याद्यभावे सर्वव्यवहारविलोप इति चेत्तदितरत्र समानम् ।
उत्पत्तिविनाशकारणोपलब्धिविषयस्याप्यभावे सर्वव्यवहारवि-
लोप इति सोऽयं नित्यानामतीन्द्रियत्वादविषयत्वाच्चोत्पत्तिवि-
नाशयोः स्वप्नविषयाभिमानवदित्यहेतुरिति ॥ ३२ ॥

भा०—अ+वस्थितस्योपादानस्य धर्ममात्रं निवर्तते धर्ममात्रमु×प-

---

कादाचित्कत्वप्रतीत्यनुपपत्तेः । न चाऽऽविर्भावात्तदुपपत्तिः । तस्यैवानित्यत्वे सर्व-
नित्यत्वव्याघात् । विवेचयिष्यते चेदं स्पष्टतरमुपरिष्टात् ॥ ३२ ॥

वृ०—उत्पादविनाशप्रत्ययस्य भ्रान्तत्वं स्यादित्याशङ्कयाऽऽह—सार्वलौ-

---

* अव्यापकश्चानेकान्त उक्तः । पक्षो हि सर्वं नित्यमिति । तस्मिन्नस्य सत्त्वासत्त्वा-
भ्यामनेकान्तः । अनेकः सत्त्वासत्त्वलक्षणोऽन्तोऽस्येत्यनेकान्त इति भावः ।
+ तदेवं सांख्यानां मतमपास्य स्वायंभुवानां मतं दूषयति—अवस्थितस्येति ।
× त्रिविधः खल्वयं धर्मिणः परिणामो धर्मलक्षणावस्थारूपः । तद्यथा—सुवर्णं धर्मि
तस्य परिणामो वर्धमानरुचकादिः । धर्मस्य तु लक्षणपरिणामोऽनागतादिः । यदा खल्वयं
सुवर्णकारो वर्धमानकं भङ्क्त्वा रुचकमारचयति तदा वर्धमानको वर्तमानलक्षणं हित्वाऽ-
तीतलक्षणमापद्यते । रुचकस्तु अनागतलक्षणं हित्वा वर्तमानतामापद्यते । वर्तमानतामा-
पन्न एव तु रुचको नवपुराणभावमापद्यमानोऽवस्थापरिणामवान्भवति । नवपुराणावस्थाश्च
वर्तमानलक्षणाश्रया लक्षणपरिणामाः । सोऽयं त्रिविधः परिणामो धर्मिणः । धर्मलक्षणा-
वस्थाश्च धर्मिणो भिन्नाश्चाभिन्नाश्च । तथा च धर्मिभेदात्तन्नित्यत्वेन नित्या भेदाच्चोत्पत्ति-
विनाशविषयत्वमित्युभयमप्रमाणमिति बोध्यम् ।

जायते स खलूत्पत्तिविनाशयोर्विषयः। यच्चोपजायते तत्प्राग-
प्युपजननादस्ति यच्च निवर्तते तन्निवृत्तमप्यस्तीति। एवं च सर्वस्य
नित्यत्वमिति—

न व्यवस्था *नुपपत्तेः ॥ ३३ ॥

अयमुपजन इयं निवृत्तिरिति व्यवस्था नोपपद्यत उपजात-
निवृत्तयोर्विद्यमानत्वात्। अयं धर्म उपजातोऽयं निवृत्त इति सद्भा-
वाविशेषादव्यवस्था। इदानीमुपजननिवृत्ती नेदानीमिति कालव्य-
वस्था नोपपद्यते सर्वदा विद्यमानत्वात्। अस्य धर्मस्योपजनानि-
वृत्ती नास्येति व्यवस्थानुपपत्तिरुभयोरविशेषात्। अनागतोऽतीत
इति कालव्यवस्थानुपपत्तिर्वर्तमानस्य सद्भावलक्षणत्वात्। अवि-
द्यमानस्याऽऽत्मलाभ उपजनो विद्यमानस्याऽऽत्महानं निवृत्तिरि-
त्येतस्मिन्सति नैते दोषाः। तस्माद्यदुक्तं प्रागप्युपजनादस्ति नि-
वृत्तं चास्ति तदयुक्तमिति ॥ ३३ ॥

इति सर्वनित्यत्वनिराकरणप्रकरणम् ॥ ८ ॥

---

किंच प्रमात्वेन सिद्धस्यापि भ्रमत्वे कल्पनया प्रमाभ्रमव्यवहारविलोपः स्यादि-
त्यर्थः ॥ ३३ ॥

इति सर्वनित्यत्वनिराकरणप्रकरणम् ॥ ८ ॥

---

* उपजनापाययोः स्वरूपतः कालतो विशेषतश्च संबन्धितोऽनागतत्वादितश्च व्यव-
स्थानुपपत्तेरित्यर्थः। अयं भावः—न तावद्भेदाभेदौ परस्परपरीहारव्यवस्थितधर्मावेकत्र सम-
वेतः। तस्मादुपजननाशव्यवस्थायै भेदं धर्मलक्षणावस्थानां धर्मिण इच्छता तेषामनित्य-
त्वमभ्युपेयम्। सांख्यवत्सत्कार्याभ्युपगमेन तु नित्यत्वव्यवस्थापने यन्निवर्तते तन्निवृत्तमप्य-
स्तीति ब्रुवाणो भवान्प्रष्टव्यो भवति। किं पूर्वमुपलब्धं पश्चान्नोपलभ्यत आहोस्विदभिव्यक्त्य-
नभिव्यक्ती भवत इति। आद्ये तस्यापूर्वविशेषोत्पादः पूर्वविशेषप्रध्वंसोऽभ्युपेय इति
व्याघातः। अन्त्येऽपि असत्या अभिव्यक्त्यनभिव्यक्ती भवत इति पूर्वोक्तदोषानिवृ-
त्तिरिति।

भा०—अयमन्य एकान्तः—

सर्वं पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥

सर्वं नाना न कश्चिदेको भावो विद्यते । कस्मात् । भावलक्षणपृथक्त्वात् । भावस्य लक्षणमभिधानं येन लक्ष्यते भावः स समाख्याशब्दस्तस्य पृथग्विषयत्वात् । सर्वो भावसमाख्याशब्दः समूहवाची । कुम्भ इति संज्ञाशब्दो गन्धरसरूपस्पर्शसमूहे बुध्नपार्श्वग्रीवादि*समूहे च वर्तते । निदर्शनमात्रं चेदमिति ॥ ३४ ॥

नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

भा०—अनेकविधलक्षणैरिति मध्यमपदलोपी समासः । गन्धादिभिश्च गुणैर्बुध्नादिभिश्चावयवैः संबद्ध एको भावो निष्पद्यते । गुणव्यतिरिक्तं च द्रव्यमवयवातिरिक्तश्चावयवीति विभक्तन्यायं चैतदुभयमिति ॥ ३५ ॥

भा०—अथापि—

लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥

न कश्चिदेको भाव इत्ययुक्तः प्रतिषेधः । कस्मात् । लक्षण-

वृ०—अथ प्रसङ्गात्सर्वपृथक्त्वप्रकरणम् । तत्र पूर्वपक्षसूत्रम् । सर्वं वस्तु पृथङ्नाना लक्ष्यतेऽनेनेति लक्षणं समाख्या तस्याः पृथक्त्वं पृथगर्थकत्वम् । तथा च प्रयोगः—घटादिः समूहरूपो वाच्यत्वात्सेनावनादिवत् । अतीन्द्रिये गगनादौ मानाभावादात्मनः शरीरानतिरेकाद्गुणकर्मणोराश्रयाभेदाद्विशेषसमवाययोर्मानाभावादभावस्य तुच्छत्वाच्च व्यभिचारः । यद्वा घटादिकं स्वस्मादपि पृथग्भावलक्षणानां गन्धरसादीनां तत्तदवयवादीनां च पृथक्त्वाद् घटादेश्च तदभेदादिति भावः ॥ ३४ ॥

वृ०—समाधत्ते—अनेकलक्षणैरनेकस्वरूपै रूपरसादिभिस्तत्तदवयवैश्च विशिष्टस्यैकस्यैव भावस्य निष्पत्तेरुत्पत्तेरित्यर्थः । तथा चैकस्य धर्मिणः प्रत्यक्षादिप्रमाणसिद्धत्वात् । तस्य च चाक्षुषत्वरासनत्वादिविरुद्धधर्माध्यस्तरूपरसाद्यात्मकत्वाभावादवयवानां च कारणत्वात्कार्यकारणयोरभेदासंभवाच्च न तत्तदात्मकत्वं घटादेः संभवतीति भावः ॥ ३५ ॥

सू०—हेतुमाह—लक्षणस्यार्थाज्ञावानां घटपटादीनां व्यवस्थानाद्व्यवस्थित-

* तथा च प्रयोगः—कुम्भशब्दोऽनेकविषय एकपदत्वात्सेनाशब्दवदिति ।

व्यवस्थानादेव । यदिह लक्षणं भावस्य संज्ञाशब्दभूतं तदेकस्मि-न्व्यवस्थितं यं कुम्भमद्राक्षं तं स्पृशामि यं चाऽस्प्राक्षं तं पश्या-मीति, नाणुसमूहो गृह्यत इति । अणुसमूहे चागृह्यमाणे यद्गृह्यते तदेकमेवेति ।

अथाप्येतदनुक्तं नास्त्येको भावो यस्मात्समुदायः । एकानु-पपत्तेर्नास्त्येव समूहः । नास्त्येको भावो यस्मात्समूहे भावशब्द-प्रयोगः । एकस्य चानुपपत्तेः समूहो नोपपद्यते । एकसमुच्चयो हि समूह इति व्याहतत्वादनुपपन्नं नास्त्येको भाव इति । यस्य प्रतिज्ञायते समूहे भावशब्दप्रयोगादिति हेतुं ब्रुवता स एवाऽभ्यनु-ज्ञायते । एकसमुच्चयो हि समूह इति । समूहे भावशब्दप्रयोगा-दिति च समूहमाश्रित्य प्रत्येकं समूहिप्रतिषेधो नास्त्येको भाव इति । सोऽयमुभयतो व्याघाताद्यत्किंचनवाद इति ॥ ३६ ॥

इति सर्वपृथक्त्वनिराकरणप्रकरणम् ॥ ९ ॥

भा०—अयमपर एकान्तः—

सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥

यावद्भावजातं तत्सर्वमभावः । कस्मात् । भावेष्वितरेतराभाव-

त्वादेवाप्रतिषेधः । पृथक्त्वव्यवस्थापनं नेत्यर्थः । कपालसमवेतद्रव्यत्वादिकं हि घटादेर्लक्षणं कपाले घट इत्यादिप्रतीतिसिद्धम् । न चेदं समूहात्मकत्वे संभवति । एवं लक्षणस्य घटादिस्वरूपस्यायमहमद्राक्षं स्पृशामीति प्रत्यक्षेण व्यवस्थितत्वा-त्परमाणोश्चाप्रत्यक्षत्वान्न तत्संभवः । किं च समूहलक्षणव्यवस्थितेरेव नोक्तं युक्तम् । समूहो हि नानाव्यक्तिसमुदायः । स चानेकव्यक्तेरनभ्युपगमे सिध्य-तीति भावः ॥ ३६ ॥

इति सर्वपृथक्त्वनिराकरणप्रकरणम् ॥ ९ ॥

वृ०—सर्वशून्यत्वेन कार्यकारणभावासंभव इति तन्निराकरणप्रकरणमारभ्यते । तत्र ज्ञानविषयत्वमभावत्वव्याप्यं न वेति संशये पूर्वपक्षसूत्रम् । सर्वं विवादप-

१ क० चाऽस्प्राक्षं तं ।

सिद्धेः । असन्गौरश्वात्मनाऽनश्वो गौः, असन्नश्वो गवात्मनाऽगौः, असन्नश्वो गवात्मनाऽगौरश्व इत्यसत्प्रत्ययस्य प्रतिषेधस्य च भावशब्देन सामानाधिकरण्यात्सर्वमभाव* इति ॥ ३७ ॥

भा०—प्रतिज्ञावाक्ये पदयोः प्रतिज्ञाहेत्वोश्च व्याघातादयुक्तम् । अनेकस्याशेषता सर्वशब्दस्यार्थो भावप्रतिषेधश्चाभावशब्दस्यार्थः । पूर्वं सोपाख्यमुत्तरं निरु+पाख्यम् । तत्र समुपाख्यायमानं कथं निरुपाख्यमभावः स्यादिति । न जात्वभावो निरुपाख्योऽनेकतयाऽशेषतया शक्यः प्रतिज्ञातुमिति । सर्वमेतदभाव इति चेद्यदिदं सर्वमिति मन्यसे तदभाव इति एवं चेदनिवृत्तो व्याघातः । अनेकमशेषं चेति नाभावप्रत्ययेन शक्यं भवितुम् । अस्ति चायं प्रत्ययः सर्वमिति । तस्मान्नाभाव इति । प्रतिज्ञाहेत्वोश्च व्याघातः—सर्वभावप्रतिषेधः प्रतिज्ञा, भावेष्वितरेतराभावसिद्धेरिति हेतुः, भावेष्वितरेतराभावमनुज्ञायाऽऽश्रित्य चेतरेतराभावसिद्ध्या सर्व-

दमभावस्तुच्छं तत्र प्रत्यक्षं मानमाह—भावेष्विति । भावत्वाभिमतेषु घटादिषु अभावत्वसिद्धेः, घटः पटो नेत्यादिप्रतीत्या सर्वेषामभावत्वसिद्धेः॥ ३७ ॥

वृ०—सिद्धान्तसूत्रम् । भावानां पृथिव्यादीनां स्वभावस्य गन्धादेः सत्त्वा-

* अयं भावः—प्रमाणादयः खल्वमी परस्परानात्मतयाऽसदिति प्रत्ययस्य नञश्च गोचरा अनुभूयन्ते । अतस्तद्वाचिनां शब्दानां तत्सामानाधिकरण्यम् । तथा च प्रयोगः—प्रमाणादयोऽसन्त उक्तसामानाधिकरण्यादनुत्पन्नप्रध्वस्तपटवत् । अपि चामी भावा नित्या अनित्या वा । आद्ये नित्यस्य सर्वसामर्थ्यरहितस्यासत्त्वमापद्यते । नहि नित्यं वस्तु सर्वसामर्थ्यरहितं क्वचिद्दृष्टम् । अनित्यत्वे तु विनाशस्वभावाश्चेद्द्वितीयादिक्षणेष्विव प्रथमक्षणेऽपि न स्युः । प्रथमक्षणे सत्त्वे वा नामी विनाशस्वभावाः । अतत्स्वभावत्वे वा क्षणान्तरेऽपि न नश्येयुः । न खलु नीलं स्वकारणादुपजातं जातु कारणसहस्रैरपि पीतं कर्तुं पार्यत इति विनाशस्वभावकत्वमकामेनापि अनित्यानामेषितव्यम् । तस्माद्भावानां शून्यतैव पारमार्थिकी । कल्पितया तु वस्तुसत्तया सन्त इव भासन्त इति । + न ह्यत्यन्तासन्निरुपाख्यं सर्वमिति वा भाव इति वाऽभिमानस्य गोचरः । असद्वाऽनिर्वचनीयं वा न ख्यातिगोचरः । अपि तु सदेव सदन्तरात्मना । तथा च कुतोऽत्यन्तासतः कल्पनागोचरत्वमपीति भावः ।

१ क. 'सिद्धो व' ।

मभाव इत्युच्यते। यदि सर्वमभावो भावेष्वितरेतराभावसिद्धेरिति नोपपद्यते । अथ भावेष्वितरेतराभावसिद्धिः सर्वमभाव इति नोपपद्यते । सूत्रेण चाभि*संबन्धः—

न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥

न सर्वमभावः। कस्मात्। स्वेन भावेन सद्भावाद्भावानाम्। स्वेन धर्मेण भावा भवन्तीति प्रतिज्ञायते। कश्च स्वो धर्मो भावानाम् । द्रव्यगुणकर्मणां सदादिसामान्यं द्रव्याणां क्रियावदित्येवमादिर्विशेषस्पर्शपर्यन्ताः पृथिव्या इति च प्रत्येकं चानन्तो भेदः सामान्यविशेषसमवायानां च विशिष्टा धर्मा गृह्यन्ते सोऽयमभावस्य निरुपाख्यत्वात्संप्रत्यायकोऽर्थभेदो न स्यात्। अस्ति त्वयम्। तस्मान्न सर्वमभाव इति । अथवा न स्वभावसिद्धेर्भावानामिति । स्वरूपसिद्धेरिति गौरिति प्रयुज्यमाने शब्दे जातिविशिष्टं द्रव्यं गृह्यते नाभावमात्रम् । यदि च सर्वमभावो गौरित्यभावः प्रतीयेत गोशब्देन चाभाव उच्येत, यस्मात्तु गोशब्दप्रयोगे द्रव्यविशेषः प्रतीयते नाभावस्तस्मादयुक्तमिति। अथवा न स्वभावसिद्धेरिति । असन्गौरश्वात्मनेति गवात्म+ना कस्मान्नोच्यते । अवचनाद्गवात्मना गौरस्तीति स्वभावसिद्धिः । अनश्वोऽश्व इति वाऽगौर्गौरिति वा कस्मान्नोच्यते । अवचनात्स्वेन रूपेण विद्यमानता द्रव्यस्येति विज्ञायते ।

अव्यतिरेकप्रतिषेधे च भावानामसत्प्रत्ययसामानाधि=करण्यं यथा न सन्ति कुण्डे बदराणीति । संयोगादिसंबन्धो व्यतिरेको-

---

* नोपपद्यत इति संबध्यते । उक्तरीत्या पूर्वसूत्रस्यार्थो नोपपद्यत इति स्वयं प्रतिपाद्य सूत्रकारोऽपि पूर्वसूत्रसंबन्धो नोपपद्यत इति प्रतिपादयतीति बोधयन्नाह—सूत्रेण चेति ।

+यथा 'अश्वात्मनाऽसन्गौः' इत्युच्यते तथा 'गवात्मनाऽसन्गौः' इति कस्मान्नोच्यत इत्यर्थः।

= सर्वे हि भिन्नस्वभावा भावाः । भिन्नत्वं च तेषामन्यापेक्षम् । तथाहि—नीलं भिन्नं पीताद्यपेक्षया, न तु स्वभावतः । एवं ह्रस्वत्वदीर्घत्वे परापरत्वे पितापुत्रादयः परापेक्षा द्रष्टव्याः । यच्च परापेक्षं तन्नाविकं न । यथा जपाकुसुमापेक्षः स्फटिकस्यारुणिमस्याश्रयः ।

ऽत्राव्यतिरेकोऽभेदाख्यस्संबन्धः । असन्गौरश्वात्मनाऽनश्वो गौरिति च गवाश्वयोरव्यतिरेकः प्रतिषिध्यते गवाश्वयोरेकत्वं नास्तीति । तस्मिन्प्रतिषिध्यमाने भावेन गवा सामानाधिकरण्यमसत्प्रत्ययस्यासन्गौरश्वात्मनेति यथा न सन्ति कुण्डे बदराणीति । कुण्डे बदरसंयोगे प्रतिषिध्यमाने सद्भिरसत्प्रत्ययस्य सामानाधिकरण्यमिति ॥ ३८ ॥

न स्वभाव*सिद्धिरापेक्षिकत्वात् ॥ ३९ ॥

भा०—अपेक्षाकृतमापेक्षिकं ह्रस्वापेक्षाकृतं दीर्घं दीर्घापेक्षाकृतं ह्रस्वं न स्वेनावस्थितं किंचित् । कस्मात् । अपेक्षासामर्थ्यात् । तस्मान्न स्वभावसिद्धिर्भावानामिति ॥ ३९ ॥

व्याहतत्वादयुक्तम् ॥ ४० ॥

भा०—यदि ह्रस्वापेक्षाकृतं दीर्घं किमिदानीमपेक्ष्य ह्रस्वमिति गृह्यते । अथ दीर्घापेक्षाकृतं ह्रस्वं दीर्घमनापेक्षिकम् । एवमितरेतराश्रययोरेकाभावेऽन्यतराभावादुभयाभाव इति अपेक्षाव्यवस्थाऽनुपपन्ना । स्वभावसिद्धावसत्यां समयोः परिमण्डलयोर्वा द्रव्ययोरापेक्षिके दीर्घत्वह्रस्वत्वे कस्मान्न भवतः । अपेक्षायामनपेक्षायां

---

देश्च सिद्धेः । न हि तुच्छस्य गन्धरूपादिकं सत्त्वेन प्रतीतिर्वा संभवति ॥ ३८ ॥

वृ०—पुनः शङ्कते—नहि सर्वेषां भावानामेकः स्वभावः संभवति । आपेक्षिकत्वाद्भिन्नत्वात् । भिन्नस्य स्वभावत्वे स्वस्मादपि भेदापत्तेः । यद्वेतरसापेक्षत्वादेतदपेक्षयाऽयं नीलतर एतदपेक्षया ह्रस्व इति प्रतीतेः । यच्च सापेक्षं तदवस्तु जपासापेक्षं स्फटिकारुण्यम् ॥ ३९ ॥

वृ०—समाधत्ते—सापेक्षत्वस्य तुच्छत्वव्याप्तेर्व्याहतत्वादसिद्धत्वात् । न वा घटादेः सापेक्षत्वं संभवति । किं च सापेक्षत्वं सापेक्षं न वा । आद्ये तस्य

---

* सर्वे हि भिन्नस्वभावा भावाः । भिन्नत्वं च तेषामन्यापेक्षम् । तथाहि—नीलं भिन्नं पीताद्यपेक्षया, न तु स्वभावतः । एवं ह्रस्वत्वदीर्घत्वे परापरत्वे पितापुत्रादयः परापेक्षा द्रष्टव्याः । यच्च परापेक्षं तद्भाविकं न । यथा जपाकुसुमापेक्षः स्फटिकस्यारुणिमेत्याक्षेपः ।

---

१ ङ. °ति दीर्घापे°

च द्रव्ययोरभेदः। यावती द्रव्ये अपेक्षमाणे तावती एवानपेक्षमाणे नान्यतरत्र भेदः। आपेक्षिकत्वे तु सत्यन्यतरत्र विशेषोपजनः स्यादिति।

किमपेक्षासामर्थ्यमिति चेद्द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः। द्वे द्रव्ये पश्यन्नेकत्र विद्यमानमतिशयं गृह्णाति तद्दीर्घमिति व्यवस्यति। यच्च हीनं गृह्णाति तद्ध्रस्वमिति व्यवस्यतीति। एतच्चापेक्षासामर्थ्यमिति ॥ ४० ॥

इति सर्वशून्यतानिराकरणप्रकरणम् ॥ १० ॥

---

भा०—अथेमे संख्यैकान्ताः—सर्वमेकं सदविशेषात् *। सर्वं द्वेधा नित्यानि+त्यभेदात्। सर्वं त्रेधा ज्ञाता ज्ञानं ज्ञेयमिति। सर्वं चतुर्धा प्रमाता प्रमाणं प्रमेयं प्रमितिरिति। एवं यथासंभवमन्येऽपीति तत्र परीक्षा—

---

तुच्छत्वान्न साधकत्वम्। अन्त्ये तस्यैव सत्यत्वात्कुतः सर्वशून्यत्वमिति भावः ॥ ४० ॥

इति सर्वशून्यतानिराकरणप्रकरणम् ॥ १० ॥

---

वृ०—अथ संख्यैकान्तवादनिराकरणप्रकरणम्। तत्र भाष्यम्—'अथेमे संख्यैकान्ताः सर्वमेकं सदविशेषात्। सर्वं द्वेधा नित्यानित्यभेदात्। सर्वं त्रेधा

---

* अयं भावः—न तावदयं नामरूपप्रपञ्चः प्रकाशाद्भिन्नः सन्प्रकाशितुमर्हति जडस्य स्वयंप्रकाशासंभवात्। न च प्रकाशयोगात्प्रकाशत इति वाच्यम्। आन्तरेण प्रकाशेनास्य प्रपञ्चस्य योगासंभवात्। ननु विषयविषयिभावः संबन्ध इति चेन्न। अकिंचित्करस्य प्रकाशस्य विषयित्वासंभवात्। न चायमर्थे ज्ञानरूपं फलं जनयतीति वाच्यम्। अतीतानागतयोरर्थयोस्तदसंभवात्। तस्माज्ज्ञानाद्भिन्नस्य नामरूपप्रपञ्चस्य न प्रकाशसंभव इति ज्ञानस्यैव विवर्तः प्रपञ्चः। एवं च प्रपञ्चस्य मायिकत्वेन मायायाश्च ब्रह्मज्ञाननिवर्त्यत्वाद्ब्रह्मणश्चैकत्वादद्वैतसिद्धिरिति। + नहि नित्यानित्याभ्यामन्यो राशिरस्ति यमाश्रित्य पदार्थास्त्रित्वादिके व्यवतिष्ठेरन्।

---

१ च. °कान्तवादाः स°।

संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥ ४१ ॥

यदि साध्यसाधनयोर्नानात्वमेकान्तो न सिध्यति व्यतिरेकात् । अथ साध्यसाधनयोरभेदः । एवमप्येकान्तो न सिध्यति साधनाभावात् । नहि तमन्तरेण कस्यचित्सिद्धिः*रिति ॥ ४१ ॥

न कारणावयवभावात् ॥ ४२ ॥

भा०—न संख्यैकान्तानामासिद्धिः । कस्मात् । कारणस्यावयव + भावात् । अवयवः कश्चित्साधनभूत इत्यव्यतिरेकः । एवं द्वैतादीनामपीति ॥ ४२ ॥

निरवयवत्वादहेतुः ॥ ४३ ॥

भा०—कारणस्यावयवभावादित्यहेतुः । कस्मात् । सर्वमेकमित्यनप-

---

ज्ञाता ज्ञेयं ज्ञानमिति । सर्वं चतुर्धा प्रमाता प्रमाणं प्रमेयं प्रमितिरिति । एवं यथासंभवमन्येऽपीति, तत्र यथा नित्यत्वानित्यत्वलक्षणधर्माभ्यां द्वैधं तथा सत्त्वेनैकमिति स्पष्टोऽर्थः । परे त्वेवं व्याचक्षते—एकमित्यद्वैतवादः । तथा च ब्रह्मैवैकं निर्विशेषं सत्यं सर्वमन्यन्मिथ्या । यद्वा सर्वं प्रपञ्चजातमेकं द्वैतशून्यं सदविशेषात्, घटः सन्पटः सन्निति प्रतीतेर्घटाभिन्नसदभिन्नपटस्य घटाभेदसिद्धेः । श्रुतिरपि—एकमेवाद्वयं ब्रह्म, नेह नानाऽस्ति किंचनेत्यादि । अन्येऽपीत्यनेन रूपसंज्ञासंस्कारवेदनानुभवाः पञ्च स्कन्धा इति सौत्रान्तिका इत्यादिसमुच्चयः । एतेष्वाक्षेपेषु सिद्धान्तसूत्रम् । संख्यैकान्ता न सिध्यन्ति कारणस्य प्रमाणस्यानुपपत्तेः । उपपत्तौ वा न संख्यैकान्तः साधनस्य साध्यातिरिक्तस्यापेक्षितत्वात् ॥ ४१ ॥

वृ०—आक्षिपति—न संख्यैकान्तस्यासिद्धिः । कारणस्य प्रमाणस्यावयवभावादुक्तस्यैकदेशत्वादवयवावयविनोश्च भेदाभावः ॥ ४२ ॥

वृ०—दूषयति—उक्तो हेतुर्न युक्तः सर्वस्यैव पक्षत्वेनावशिष्टस्याभावात्पक्षैकदेशस्य हेतुत्वासंभवादिति भावः । श्रुतिस्तु ब्रह्मैक्यपरेत्येतच्च नास्माभ्यं

---

* अयमाशयः—अनवयवेन सर्वं चेदेकं द्वेधा त्रेधा चतुर्धा वेति प्रतिज्ञातार्थस्तर्हि तदतिरिक्तं साधनं वाच्यम् । नहि साध्यमेव साधनं भवति । तथा च साधनस्य व्यतिरेकान्न संख्यैकान्तसिद्धिरिति । + एकस्य द्व्यादीनां वा कश्चिदेकदेशः साधनम् । तथा च न संख्यान्तरं नापि साधनाभाव इति भावः ।

वर्गेण प्रतिज्ञाय कस्यचिदेकत्वमुच्यते तत्र व्यपवृक्तोऽवयवः साधनभूतो * नोपपद्यते । एवं द्वैतादिष्वपीति । ते खल्विमे संख्यैकान्ता विशेष+कारितस्यार्थविस्तारस्य प्रत्याख्यानेन वर्तन्ते । प्रत्यक्षानुमानागमविरोधान्मिथ्यावादा भवन्ति । अथाभ्यनुज्ञानेन वर्तन्ते समानधर्मकारितोऽर्थसंग्रहे विशेषकारितश्चार्थभेद इत्येवमेकान्तत्वं जहतीति । ते खल्वेते तत्त्वज्ञानप्रविवेकार्थमेकान्ताः × परीक्षिता इति ॥ ४३ ॥

इति संख्यैकान्तवादनिराकरणप्रकरणम् ॥ ११ ॥

भा०—प्रेत्यभावानन्तरं फलं तस्मिन्—

**सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥**

पचति दोग्धीति सद्यः फलमोदनपयसी । कृषति वपतीति कालान्तरे फलं सस्याधिगम इति । अस्ति चेयं क्रिया—अग्निहोत्रं

---

रोचते सत्त्वेनैक्यस्य नित्यानित्यभेदाद्द्वैविध्यादेश्चाभ्युपगतत्वादनित्यस्याप्यनुमानस्य नित्यानित्यत्वसाधकत्वे विरोधाभावात् । कथमितरथा षट्पदार्थी सप्तपदार्थी च सिध्येदिति । तस्माददद्वैतवादनिराकरणपरत्व एव प्रकरणं संगच्छत इति संक्षेपः ॥ ४३ ॥

इति संख्यैकान्तवादनिराकरणप्रकरणम् ॥ ११ ॥

वृ०—अथावसरतः फले परीक्षणीये संशयमाह—पाकादिक्रियायाः सद्यःफलकत्वस्य कृष्यादेः कालान्तरफलकत्वस्य दर्शनादग्निहोत्रहवनादेर्हिंसादेर्वा

---

* यदि साध्यस्य कश्चिदवयवो भवेत्तर्हि न संख्यैकान्तः स्यात् । परं तु सर्वमेकमित्येतस्मिन्प्रतिज्ञातेऽर्थे न किंचिद्व्यावर्तते यतस्तत्साधनं स्यादित्यर्थः । + वक्रकोटरपाण्यादिविशेषकारितो योऽर्थविशेषः स्थाणुपुरुषादिस्तत्प्रत्याख्यानेनेत्यर्थः । × अद्वैततत्त्वादिष्वेकान्तेषु प्रेत्यभावो न तात्त्विको भवेत् । अपि तु काल्पनिकः । न केवलः प्रेत्यभावोऽपि तु षोडशापि पदार्थास्तथा । तस्मादेतेषां यत्तत्त्वज्ञानं तत्प्रविवेकेन ज्ञानप्रविवेक इति तदर्थमेते संख्यैकान्ताः परीक्षिता इति भावः ।

जुहुयात्स्वर्गकाम इति । एतस्याः फले संशयः ॥ ४४ ॥

**न + सद्यः कालान्तरोपभोग्यत्वात् ॥ ४५ ॥**

**भा०—स्वर्गः फलं श्रूयते तच्च भिन्नेऽस्मिन्देहे[1] देहभेदादुत्पद्यत इति न सद्यो ग्रामादिकानामारम्भफलमिति ॥ ४५ ॥**

---

**फलं साद्यस्कं कालान्तरीणं वेति संशयः ॥ ४४ ॥**

**वृ०—तत्रैहिककीर्त्यकीर्त्यादीनामेव फलत्वसंभवे नादृष्टादिकल्पनमिति पूर्वपक्षे सिद्धान्तसूत्रम् । कालान्तरोपभोग्यत्वेन प्रतिपादनादित्यर्थः । स्वर्गो हि फलं श्रूयते । स च दुःखासंभिन्नसुखम् । न चैहिकं सुखं तथा । एवं हिंसादेस्तत्तन्नरकोपभोगः फलं श्रूयते । न चेह तत्संभव इति भावः ॥ ४५ ॥**

---

+ ननु कर्मानन्तरं दुःखं लोकगौरवादिकं चोपलभ्यते प्रशंसन्ति हि लौकिका धार्मिकोऽयं साधुतम इति । तत्किमेतदेव 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादेः फलमाहोस्विदामुष्मिकं स्वर्गादीति । तत्र स्वर्गादिफलत्वे कर्मणः स्वरूपेणाकरणत्वाच्चिरानिर्वृत्ते तास्मिंस्तदुत्पत्तेरपूर्वकल्पनायां च प्रधानाङ्गापूर्वाणि भूयांसि कल्पनीयानि । न हि तान्युत्पन्नमात्राणि फलं जनयन्ति । अतस्तत्सहकार्यन्तराणि कल्पनीयानीत्यदृष्टकल्पनागौरवात्तदनन्तरं दृष्टफलबाधनाच्च नास्याऽऽमुष्मिकं फलं स्वर्गादि । किंतु अनन्तरदृश्यमानमेव । तत्रापि दुःखफलत्व उपदेशव्याघाताल्लोके गौरवलाभादिकमेव फलम् । तच्च सुखहेतुतया स्वर्गादिफलहेतुत्वेनोच्यते । दृष्टो हि सुखहेतौ स्वर्गपदप्रयोगः । यथा—चन्दनं स्वर्गः सूक्ष्माणि वासांसि स्वर्ग इतीति चेत् । अत्र ब्रूमः—स्वर्गपदस्य तावत् 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्' । इति अर्थवादतः सुखं प्रति वाचकत्वमवधारितम् । न च तद्वाचकत्वेनैव चन्दनादौ तत्प्रयोगोपपत्तावनेकार्थत्वकल्पना युक्ता । यथाऽऽहुः—अन्यायश्चानेकार्थत्वमिति । तस्मान्मुख्योऽयं स्वर्गशब्द उक्तभेदे सुखे । तथा च स्वर्गकाम इत्यत्र मुख्यार्थसंभवे नोपचारितार्थता युक्ता । न चानेकार्थकल्पनाभयान्मुख्यार्थपरित्यागो न्याय्यः । प्रमाणसिद्धे नियोगपर्यनुयोगानुपपत्तेः । यथाऽऽहुः—श्रुतसिद्ध्यर्थमश्रुतोपलब्धौ यत्नवता भवितव्यम् । न तु श्रुतशैथिल्यमादरणीयम् । तथा—प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि । न चानन्तरदृश्यमानं लोकगौरवादि होमाद्यनुष्ठानफलम् । अपि तु तदुपलम्भफलम् । अदाम्भिकानां प्रच्छन्नमनुतिष्ठतामपि लोके गौरवादेरभावात् । तस्मादुच्यते न सद्य इति ।

---

[1] ख. ग. °हे परदे° ।

कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४६ ॥

भा०—ध्वस्तायां प्रवृत्तौ प्रवृत्तेः फलं न कारणमन्तरेणोत्पत्तुमर्हति । न खलु वै विनष्टात्कारणात्किंचिदुत्पद्यत इति ॥ ४६ ॥

प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् ॥ ४७ ॥

भा०—यथा फलार्थिना वृक्षमूले सेकादि परिकर्म क्रियते तस्मिंश्च प्रध्वस्ते पृथिवीधातुरब्धातुना संगृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्तयति स द्रव्यभूतो रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशेषेण संनिविशमानः पर्णादि फलं निर्वर्तयति एवं परिषेकादि कर्म चार्थवत्, न च विनष्टात्फलनिष्पत्तिस्तथा प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यते स जातो निमित्तान्तरानुगृहीतः कालान्तरे फलं निष्पादयतीति । उक्तं चैतत्पूर्वकृतफलानुबन्धात्तदुत्पत्तिरिति ॥ ४७ ॥

भा०—तदिदं प्राङ्निष्पत्तेर्निष्पद्यमानम्—

नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात् ॥ ४८ ॥

प्राङ्निष्पत्तेर्निष्पत्तिधर्मकं नासत्, उपादाननियमात् । कस्यचिदुत्पत्तये किंचिदुपादेयं न सर्वं सर्वस्येत्यसद्भावे नियमो नोपपद्यत इति । न सत्, प्रागुत्पत्तेर्विद्यमानस्योत्पत्तिरनुपपन्नेति । न सदसत्, सदसतोर्वैधर्म्यात् । सदित्यर्थाभ्यनुज्ञा, असदित्यर्थप्र-

---

वृ०—शङ्कते—कालान्तरेण तत्तत्कर्मणः फलं न संभवति हेतोस्तत्कर्मणो विनाशात् ॥ ४६ ॥

वृ०—समाधत्ते—स्वर्गादिनिष्पत्तेः प्राक्तद्द्वारं स्यात् । दृष्टान्तमाह—वृक्षफलवत् । यथा मूलसेकादिनाशेऽपि तदधीनावयवोपचयादिद्वारबलेन फलोत्पत्तिस्तथा प्रकृतेऽपि यागादिनाशेऽपि तज्जन्यादृष्टरूपद्वारसत्त्वान्न स्वर्गाद्युत्पत्तिविरोधः ॥ ४७ ॥

वृ०— ननु कार्यकारणभाव एव न विचारसह इत्याशङ्कते—प्राङ्निष्पत्तेरित्यनुवर्तते । फलमित्यध्याहर्तव्यम् । तथा चोत्पत्तेः प्राक् फलं नासत् । असत उत्पत्तौ शशशृङ्गादेरुत्पत्तिः स्यात् । स्याच्च सिकतादावपि तैलम् ।

तिषेधः, एतयोर्व्याघातो वैधर्म्यं व्याघातादव्यतिरेकानुपपत्ति-रिति ॥ ४८ ॥

प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा
कस्मादुत्पाद*व्ययदर्शनात् ॥ ४९ ॥

॥ ४९ ॥

भा०—यत्पुनरुक्तं प्रागुत्पत्तेः कार्यं नासदुपादाननियमादिति—

बुद्धिसिद्धं तु + तदसत् ॥ ५० ॥

इदमस्योत्पत्तये समर्थं न सर्वमिति प्रागुत्पत्तेर्नियतकारणं कार्यं बुद्ध्या सिद्धमुत्पत्तिनियमदर्शनात् । तस्मादुपादाननियमस्योपपत्तिः । सति तु कार्ये प्रागुत्पत्तेरुत्पत्तिरेव नास्तीति ॥५०॥

---

न वा सत् । सत उत्पत्तिविरोधात् । अत एव न सदसत् । सदसतोः सत्त्वासत्त्वलक्षणवैधर्म्यात् ॥ ४८ ॥

वृ०—समाधत्ते-उत्पत्तिधर्मकमुत्पत्तिधर्मकत्वेनोपलभ्यमानं पटादिकमुत्पत्तेः प्रागसादिति अद्धातत्त्वम् । उत्पादनाशयोः प्रमितत्वात् । इदानीं घट उत्पन्न इदानीं घटो विनष्ट इति प्रत्ययात् । सतस्तु नोत्पत्तिसंभव उत्पन्नपुनरुत्पादप्रसङ्गात् । यद्यपि नाशस्य तत्र हेतुत्वं तथाऽप्यनुत्पन्नभावस्य नाशायोगादुत्पादसाधकत्वेन नाश उक्तः ॥ ४९ ॥

वृ०—असत उत्पत्तौ नियमो न स्यादित्यत्राऽऽह—तत्कार्यमसत्प्रागभावप्रतियोगिबुद्धिसिद्धं बुद्ध्या विषयीकृतम् । तथाहि—इह तन्तुषु पटो भविष्यतीति ज्ञात्वा कुविन्दः प्रवर्तते न तु पटोऽस्तीति ज्ञात्वा । तथा सति सिद्धत्वेन ज्ञात इच्छाभावात्प्रवृत्त्यनुपपत्तेः । सिकतादौ पटो भविष्यतीति न ज्ञायते, किंतु न भविष्यतीति ज्ञायत एव । कुत इति चेदनुभवमपृच्छः । किं च त्वन्मतेऽपि कुतो न ज्ञायते । तत्र पटाभावादिति चेत्कथमिदं निरणायि । पटात्पूर्वं तन्तुसिकतयोस्तुल्यत्वात् । तन्तुत्वेनाऽऽश्रयतेति चेत्तन्तुत्वेन कारणतेत्येवं स्यात्प्रवृत्त्यनुरोधात् ॥ ५० ॥

---

* यथा नित्यस्वरूपायाश्चितिशक्तेर्नोत्पादो नापि व्यय एवं फलस्यापि नित्यस्य तौ स्यातामिति भावः । + तदसद्भाविकार्यमनेनैव कारणेन जन्यते नान्येनेत्यनुमानबुद्धिसिद्धमेवेत्यर्थः ।

आ*श्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः ॥ ५१ ॥

भा०—मूलसेकादि परिकर्म फलं चोभयं वृक्षाश्रयम्, कर्म चेह शरीरे फलं चामुत्रेत्याश्रयव्यतिरेकादहेतुरिति ॥ ५१ ॥

+प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥

भा०—प्रीतिरात्मप्रत्यक्षत्वादात्माश्रया तदाश्रयमेव कर्म धर्मसंज्ञितं धर्मस्याऽऽत्मगुणत्वात् । तस्मादाश्रयव्यतिरेकानुपपत्तिरिति ॥५२॥

न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥ ५३ ॥

भा०—पुत्रादिफलं निर्दिश्यते न प्रीतिः, ग्रामकामो यजेत, पुत्रकामो यजेतेति । तत्र यदुक्तं प्रीतिः फलमित्येतदयुक्तमिति ॥ ५३ ॥

तत्संबन्धात्फलनिष्पत्तेस्तेषु × फलवदुपचारः ॥ ५४ ॥

भा०—पुत्रादिसंबन्धात्फलं प्रीतिलक्षणमुत्पद्यत इति पुत्रादिषु फल-

---

वृ०—नन्वस्तु हेतुफलाभावस्तथाऽपि वृक्षफलवदिति दृष्टान्तवैषम्यान्नादृष्टसिद्धिरित्याशयेन शङ्कते—प्राङ्निष्पत्तेर्वृक्षफलवदित्यहेतुः । कुतः । आश्रयव्यतिरेकात् । येन कायेन कर्म कृतं तस्य नाशात् । वृक्षस्थले तु तस्य वृक्षस्य सत्त्वात्सलिलसेकादिकं परिकर्मोपयुज्यत इत्यभिमानः ॥ ५१ ॥

वृ०—समाधत्ते—आश्रयव्यतिरेकादिति हेतुर्न युक्तः । प्रीतेः सुखस्य स्वर्गिशरीरावच्छेदेन जायमानस्याऽऽत्मवृत्तित्वाद्यागादिसामानाधिकरण्यादित्यर्थः ॥ ५२ ॥

वृ०—क्वचित्सामानाधिकरण्यसंभवेऽपि सर्वत्र न तथेति शङ्कते—पुत्रादीनां फलनिर्देशात्सामानाधिकरण्यं न संभवतीति भावः ॥ ५३ ॥

वृ०—यद्यपि पुत्रादीनामैहिकफलत्वात्तत्राऽऽश्रयव्यतिरेकाभावाच्छङ्कैव न तथाऽपि यत्र जन्मान्तरीयधनादिकमपि फलं स्यात्तत्रापि नानुपपत्तिरित्याशयेनाऽऽह—तत्संबन्धात्पुत्रादिसंबन्धात्फलनिष्पत्तेः प्रीत्युत्पत्तेस्तेषु पुत्रादिषु फल-

---

* देहाद्यतिरिक्तमात्मानं नित्यं परलोकिनमविद्यमानं मन्यमान आह—आश्रयेति ।

\+ अस्त्यात्मा स्वर्गोपभोगसमर्थः शरीरव्यतिरिक्तः कर्तेत्युपपादितमित्याशयवानाह—प्रीतेरिति ।

× स्वर्गोऽपि तावत्स्वर्गतया न काम्यते किंतु भोग्यतया । एवं सति कैव कथा पुत्रादिष्वपि । तेऽपि भोग्यतयैव काम्यन्ते न तु स्वरूपं भोग्यमिति तत्साध्यं सुखं भोग्यम् । तस्मात्पुत्रादिसंबन्धात्सुखोत्पत्तेस्तेषु फलप्रयोग इति भावः ।

वदुपचारः । यथाऽन्ने प्राणशब्दोऽन्नं वै प्राणा इति ॥ ५४ ॥

इति फलपरीक्षाप्रकरणम् ॥ १२ ॥

---

भा०—फलानन्तरं दुःखमुद्दिष्टम् । उक्तं च 'बाधनालक्षणं दुःखमिति' ( १।१।२१ ) तत्किमिदं * प्रत्यात्मवेदनीयस्य सर्वजन्तुप्रत्यक्षस्य सुखस्य प्रत्याख्यानमाहोस्विदन्यः कल्प इति । अन्य इत्याह । कथम् । न वै सर्वलोकसाक्षिकं सुखं शक्यं प्रत्याख्यातुम् । अयं तु जन्ममरणप्रबन्धानुभवनिमित्ताद्दुःखान्निर्विण्णस्य दुःखं जिहासतो दुःखसंज्ञाभावनोपदेशो दुःखहानार्थ इति । कया युक्त्या । सर्वे खलु सत्त्वनिकायाः सर्वाण्युत्पत्तिस्थानानि + सर्वः पुनर्भवो बाधनानुषक्तो दुःखसाहचर्याद्बाधनालक्षणं दुःखमित्युक्तम् । ऋषिभिर्दुःखसंज्ञाभावनमुपदिश्यते । अत्र च हेतुरुपादीयते—

---

वदुपचारः फलत्वेन व्यपदेशः । यथाऽन्नं वै प्राणिनां प्राणा इति ॥ ५४ ॥

इति फलपरीक्षाप्रकरणम् ॥ १२ ॥

---

वृ०—अथ क्रमप्राप्तं दुःखं परीक्षणीयं तत्र च 'बाधनालक्षणं दुःखमिति' ( १ । १ । २१ ) इत्युक्तम् । तदर्थस्तु दुःखत्वजातिमत्त्वमित्युक्तम् । तच्च शरीरादौ दुःखेऽव्याप्तमित्याशङ्कयाऽऽह—जननयोगाज्जन्म शरीरादिकं तदुत्प·

---

* भवतु बाधनालक्षणं दुःखमनुभूयमानं यत्त्विदं प्रत्यात्ममनुकूलवेदनीयं सुखं तत्कथं दुःखमनुभवविरोधात् । शरीरेन्द्रियबुद्धयश्च यदि दुःखहेतुतया दुःखं तर्हि सुखहेतुतया सुखमेव कस्मान्न भवन्ति । सेयमतिभीरुता सकललोकयात्राविरोधिनी । तस्मान्मांसार्थी यथा कण्ठतालूद्धृत्य मांसमश्नन्नानर्थं कण्टकजन्यमाप्नोति एवं प्रेक्षावान्दुःखमुद्धृत्येन्द्रियादिसाधनं सुखं भोक्ष्यते । सन्ति चान्वयव्यतिरेकाभ्यां परिदृष्टसामर्थ्या त्रिविधदुःखपरिवर्जनहेतव इत्यभिप्रायवान्पूर्वपक्षी गुडजिह्विकया संशयान इव पृच्छति किमिदमिति ।

+ उत्पत्तिर्नाम सुखदुःखहेतुभूता विषयसंप्राप्तिः । तस्याः स्थानानि भुवनानि आ सत्यलोकादा चावीचेः । एवं च यदि दुःखपरिवर्जनेन सुखमुपादातुं शक्येत तर्हि तादृशमनुकूलवेदनीयं कः प्रेक्षावान्प्रजह्यात् । न च तादृशमस्ति सुखम् । सर्वस्य दुःखाविनाभाविनः केवलस्योपादातुमशक्यत्वात् । तस्मान्नेदं सुखस्य प्रत्याख्यानमपि तु सुख एव दुःखभावनमुपदिश्यत ऋषिणा ।

विविधबाधनायोगाद्दुःखमेव जन्मोत्पत्तिः ॥ ५५ ॥

जन्म जायत इति शरीरेन्द्रियबुद्धयः, शरीरादीनां च संस्थानविशिष्टानां प्रादुर्भाव उत्पत्तिः। विविधा च बाधना हीना मध्यमोत्कृष्टा चेति। उत्कृष्टा नारकिणां तिरश्चां तु मध्यमा मनुष्याणां तु हीना देवानां हीनतरा वीतरागाणां च। एवं सर्वमुत्पत्तिस्थानं विविधबाधनानुषक्तं पश्यतः सुखे तत्साधनेषु च शरीरेन्द्रियबुद्धिषु च दुःखसंज्ञा व्यवतिष्ठते। दुःखसंज्ञाव्यवस्थानात्सर्वलोकेष्वनभिरतिसंज्ञा भवति। अनभिरतिसंज्ञामुपासीनस्य सर्वलोकविषया तृष्णा विच्छिद्यते। तृष्णाप्रहाणात्सर्वदुःखाद्विमुच्यत इति। यथा विषयोगात्पयो विषमिति बुध्यमानो नोपादत्ते। अनुपाददानो मरणदुःखं नाऽऽप्नोति ॥ ५५ ॥

भा०—दुःखोद्देशस्तु न सुखस्य प्रत्याख्यानम्। कस्मात्—

न सुखस्यान्तरालनिष्पत्तेः[1] ॥ ५६ ॥

निष्पद्यते खलु बाधनान्तरालेषु सुखं प्रत्यात्मवेदनीयं शरीरिणां तदशक्यं प्रत्याख्यातुमिति ॥ ५६ ॥

भा०—अथापि—

बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः[2] ॥ ५७ ॥

सुखस्य दुःखोद्देशेनेति प्रकरणात्पर्येषणं प्रार्थनाविषयार्जनतृष्णा। पर्येषणस्य दोषो यदयं वेदयमानः प्रार्थयते तस्य प्रार्थितं

---

त्तिस्तत्संबन्धो विविधबाधनायोगाद्दुःखमिति व्यपदिश्यते न तु वास्तवमेव तद्दुःखम्। तथा च विविधदुःखानुषक्ततया हेयत्वार्थं दुःखमिति भावनीयमुपदिश्यते ॥ ५५ ॥

वृ०—ननु दुःखभावनेन किं सुखं प्रत्याख्यायते न चैतच्छक्यमत आह—दुःखानां मध्ये सुखस्याप्युत्पत्तेस्तत्प्रत्याख्यानस्याशक्यत्वात् ॥ ५६ ॥

वृ०—ननु सुखदुःखसंबन्धाविशेषात्सुखभावनमेव किं नेष्यत इत्यत्राऽऽह—दुःखभावनस्य न प्रतिषेधः वेदयतः सुखसाधनत्वं जानतः। पर्येषणदोषात्पर्ये-

---

१ क. ङ. च °तेः ॥ ५६ ॥ न खल्वयं दुःखोद्देशः सुखस्य प्रत्याख्यानम्। कस्मात्। सुखस्यान्तरालनिष्पत्तेः। नि°। २ ख. ग. °षणाद्दो°।

न संपद्यते संपद्य वा विपद्यते न्यूनं वा संपद्यते बहु प्रत्यनीकं वा संपद्यत इत्येतस्मात्पर्येषणदोषान्नानाविधो मानसः संतापो भवति । एवं वेदयतः पर्येषणदोषाद्बाधनाया अनिवृत्तिः । बाधनानिवृत्तेर्दुःखसंज्ञाभावनमुपदिश्यते । अनेन कारणेन दुःखं जन्म न तु सुखस्याभावादिति । अथाप्येतदनूक्तं कामं कामयमानस्य यदा कामः समृध्यति अथैनमपरः कामः क्षिप्रमेव प्रबाधते । * अपि चेदुदनेमिं समन्ताद्भूमिमिमां लभते सगवाश्वां न स तेन धनेन धनैषी तृप्यति किंतु सुखं धनकाम इति ॥ ५७ ॥

दुःखविकल्पे सुखाभिमानाच्च ॥ ५८ ॥

भा०—दुःखसंज्ञाभावनोपदेशः क्रियते । अयं खलु सुखसंवेदने व्यवस्थितः सुखं परमपुरुषार्थं मन्यते न सुखादन्यन्निःश्रेयसमस्ति । सुखे प्राप्ते चरितार्थः कृतकरणीयो भवति । मिथ्यासंकल्पात्सुखे तत्साधनेषु च विषयेषु संरज्यते । संरक्तः सुखाय घटते । घटमानस्यास्य जन्मजराव्याधिप्रायणानिष्टसंयोगेष्टवियोगप्रार्थितानुपपत्तिनिमित्तमनेकविधं यावद्दुःखमुत्पद्यते । तं दुःखविकल्पं सुखमित्यभिमन्यते । सुखाङ्गभूतं दुःखम् । न दुःखमनापाद्य शक्यं सुखमवाप्तुम् । तादर्थ्यात्सुखमेवेदमिति सुखसंज्ञोपहतप्रज्ञो जायस्व म्रियस्व संधावेति संसारं नातिवर्तते । तदस्याः सुखसंज्ञायाः प्रतिपक्षो दुःखसंज्ञाभावनमुपदिश्यते । दुःखानुषङ्गाद्दुःखं जन्मेति न सुखस्याभावात् । यद्येवं कस्माद्दुःखं जन्मेति नोच्यते । सोऽयमेवं वाच्ये यदेवमाह दुःखमेव जन्मेति

---

षणे सुखार्थप्रवर्तने दोषात् । सुखार्थप्रवर्तमानो हि अर्जनपालनादौ विविधाभिर्बाधनाभिरुपतप्यतेऽतो दुःखभावनं वैराग्यहेतुतयोपदिश्यते ॥ ५७ ॥

वृ०—ननु दुःखमनुभवतः स्वत एव निवृत्तिसंभवाद्दुःखभावनोपदेशो

---

* समन्तादुदनेमि यथा भवति तथा भूमिं लभत इति योजना ।

---

१ ग. °णेऽङ्ग वेधशो° । २ ग. °धावतीति° ।

तेन सुखाभावं ज्ञापयतीति । जन्मविनि*ग्रहार्थीयो वै खल्वयमे-वशब्दः । कथम् । न दुःखं जन्म स्वरूपतः किंतु दुःखोपचारात् । एवं सुखमपीति । एतदनेनैव निर्वर्त्यते न तु दुःखमेव जन्मेति ॥ ५८ ॥

इति दुःखपरीक्षाप्रकरणम् ॥ १३ ॥

भा०—दुःखोद्देशानन्तरमपवर्गः स प्रत्याख्यायते—

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥

ऋणानुबन्धान्नास्त्यपवर्गः । जायमानो ह वै ब्राह्मणस्त्रिभि-र्ऋणैर्ऋणवाञ्जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति ऋणानि । तेषामनुबन्धः स्वकर्मभिः संबन्धः । कर्मसंबन्धवचनाज्जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चेति जरया ह एष तस्मात्सत्राद्विमुच्यते मृत्युना ह चेति ।

---

र्व्यर्थ इत्यत आह—दुःखस्य विविधः कल्पो यत्र तादृशे प्रतिषिद्धहिंसाभोजन-मैथुनादौ प्रवृत्तिर्मा भूदित्ययमुपदेश इति भावः ॥ ५८ ॥

इति दुःखपरीक्षाप्रकरणम् ॥ १३ ॥

वृ०—अथ क्रमप्राप्ततयाऽपवर्गः परीक्षणीयः । तत्र च तदर्थकप्रवृत्तिकाला-भावात्तदभाव इति पूर्वपक्षयति—ऋणाद्यनुबन्धादपवर्गानुष्ठानकालाभावादप-वर्गाभावः स्यात् । तथा च श्रूयते—'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋण-वाञ्जायते । ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः' इति । ऋषिभ्य ऋण्यृणेभ्यो ब्रह्मचर्येण मुच्यते । देवेभ्यो देवर्णेभ्यो यज्ञेन मुच्यते । प्रजयाऽपत्येन पितृऋणेभ्यो मुच्यते । ऋणापाकरणेनैव च जीवनापगमः ।

---

* जन्मविनिग्रहो जन्मविनिवृत्तिः स एवार्थोऽत्र वर्तत इति जन्मविनिग्रहार्थीयः, यथा मत्वर्थीय इति । एवं च जन्म दुःखमेवेति भावयितव्यं न मनागपि सुखबुद्धिः कर्तव्या, अनेकानर्थपरम्परापातेनापवर्गप्रत्यूहप्रसङ्गादिति भावः ।

---

१ ङ. °ल्पोपदेशा° ।

ऋणानुबन्धादपवर्गानुष्ठानकालो नास्तीत्यपवर्गाभावः । क्लेशानुबन्धान्नास्त्यपवर्गः । क्लेशानुबद्ध एवायं म्रियते । क्लेशानुबद्धश्च जायते । नास्य क्लेशानुबन्धविच्छेदो गृह्यते । प्रवृत्त्यनुबन्धान्नास्त्यपवर्गः । जन्मप्रभृत्ययं यावत्प्रायणं वाग्बुद्धिशरीरारम्भेणाविमुक्तो गृह्यते । तत्र यदुक्तम् 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः' ( १ । १ । २ ) इति * तदनुपपन्नमिति ॥ ५९ ॥

भा०—अत्राभिधीयते । यत्तावदृणानुबन्धादिति ऋणैरिव ऋणैरिति—

प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो
निन्दाप्रशंसोपपत्तेः ॥ ६० ॥

ऋणैरिति नायं प्रधानशब्दः । यत्र खल्वेकः प्रत्यादेयं ददाति द्वितीयश्च प्रतिदेयं गृह्णाति तत्रास्य दृष्टत्वात्प्रधानमृणशब्दः । न चैतदिहोपपद्यते । प्रधानशब्दानुपपत्तेर्गुणशब्देनायमनुवाद ऋणैरिव ऋणैरिति ।

प्रयुक्तोपमं चैतत्, यथाऽग्निर्माणवक इति । अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते यथाऽग्निशब्दो माणवके । कथं गुणशब्देनानुवादः । निन्दाप्रशंसोपपत्तेः कर्मलोप ऋणीव ऋणादानान्निन्द्यते कर्मानुष्ठाने च ऋणीव ऋणदानात्प्रशस्यते ।

---

तथा च श्रूयते—'तत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च जरया ह वा एष तस्माद्विमुच्यते मृत्युना च' इति । ऋणापाकरणमन्तरेण च न तत्र प्रवृत्तिः । तथा च स्मर्यते—'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः' । एवं क्लेशानुबन्धादपि । पुरुषो हि रागादिभिस्तत्कर्माण्यारभमाणः क्लेशानुविद्ध एव दृश्यते तत्कथमपवर्गः । एवं प्रवृत्त्यनुबन्धादपि । पुरुषो हि वाग्बुद्धिशरीरैस्तत्तत्कर्माण्यारभमाणो धर्माधर्मौ यावज्जीवमुपार्जयन्कथमपवृज्यतामिति ॥ ५९ ॥

वृ०—समाधत्ते—जायमान इत्याद्यनुवादो हि प्रधानशब्दः । न हि जायमानः कर्मण्यधिक्रियते । तथा च भाष्यम्—यदा तु मातृतो जायते कुमा-

---

* तत्र ऋणत्रयापाकरणेनैव वयःसमाप्तेर्मोक्षनिवेशक्षणो नास्तीत्यपवर्गाभाव इत्यर्थः । नानुच्छिन्ननिदानः संसारः शक्य उच्छेत्तुमिति भावः ।

जायमान इति गुणशब्दो विपर्ययेऽनधिकारात्। जायमानो ह वै ब्राह्मण इति च शब्दो गृहस्थः संपद्यमानो जायमान इति। यदाऽयं गृहस्थो जायते तदा कर्मभिरधिक्रियते। मातृतो जायमानस्यानधिकारात्। यदा तु मातृतो जायते कुमारो न तदा कर्मभिरधिक्रियते। अर्थिनः शक्तस्य चाधिकारात्। अर्थिनः कर्मभिरधिकारः कर्मविधौ कामसंयोगस्मृतेः। अग्निहोत्रं जुहुयात्स्वर्गकाम इत्येवमादि। शक्तस्य च प्रवृत्तिसंभवात्। शक्तस्य कर्मभिरधिकारः प्रवृत्तिसंभवात्। शक्तः खलु विहिते कर्मणि प्रवर्तते नेतर इति।

उभयाभावस्तु प्रधानशब्दार्थे। मातृतो जायमाने कुमार उभयमर्थिता शक्तिश्च न भवतीति। न भिद्यते च लौकिकाद्वाक्याद्वैदिकं वाक्यं प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन। तत्र लौकिकस्तावदपरीक्षकोऽपि न जातमात्रं कुमारकमेवं ब्रूयादधीष्व यजस्व ब्रह्मचर्यं चरेति। कुत एव ऋषिरुपपन्नानवद्यवाग्नुपदेशार्थेन प्रयुक्त उपदिशति। न खलु वै नर्तकोऽन्धेषु प्रवर्तते, न गायनो बधिरेष्विति। उपदिष्टार्थविज्ञानं चोपदेशविषयः। यश्चोपदिष्टमर्थं विजानाति तं प्रत्युपदेशः क्रियते। न चैतदस्ति जायमानकुमारक इति गार्हस्थ्यलिङ्गं च मन्त्रब्राह्मणं कर्माभिवदति। यच्च मन्त्रब्राह्मणं कर्माभिवदति तत्पत्नीसंबन्धादिना गार्ह*स्थ्यलिङ्गेनोपपन्नम्। तस्माद्गृहस्थोऽयं जायमानोऽभिधीयत इति।

---

रको न तदा कर्मभिरधिक्रियतेऽर्थिनः शक्तस्य चाधिकारादिति। जायमान इत्यनेन को वा व्यावर्तनीयः। न ह्यजातस्य प्रसक्तिरस्ति येनासौ व्यावर्तनीयः। तत्र भाष्यम्—जायमान इति गुणशब्दो विपर्ययेऽनधिकारादिति। तथा च जायमान इत्यनेनोपनीत उच्यते। तस्य ब्रह्मचर्यादावाधिकारात्। अग्निहोत्रादौ गृहस्थस्याधिकारः। क्षौमे वसानो वाऽधीयतामिति श्रुतेः। एवमृणशब्दोऽपि न मुख्यः। न ह्यत्र प्रत्यादेयं कश्चन ददाति परंतु ऋणापाकरणवदाव-

---

* गार्हस्थ्यस्य लिङ्गं पत्नी यस्मिन्कर्मणि तत्तथोक्तम्।

---

१ क. ख. एवमृवि° । ङ. एव ऋ°।

अर्थित्वस्य चापरिणामे जरामर्यवादोपपत्तिः *। यावच्चास्य फलेनार्थित्वं न विपरिणमते न निवर्तते तावदनेन कर्मानुष्ठेयमित्युपपद्यते जरामर्यवादस्तं प्रतीति। जरया ह वेत्यायुषस्तुरीयस्य चतुर्थस्य प्रव्रज्यायुक्तस्य वचनं जरया ह वा एष एतस्माद्विमुच्यत इति। आयुषस्तुरीयं चतुर्थं प्रव्रज्यायुक्तं जरेत्युच्यते। तत्र हि प्रव्रज्या विधीयते। अत्यन्तसंयोगे जरया ह वेत्यनर्थकम्। अशक्तो विमुच्यत इत्येतदपि नोपपद्यते। स्वयमशक्तस्य बाह्यां शक्तिमाह—अन्तेवासी वा जुहुयाद्ब्रह्मणा स परिक्रीतः क्षीरहोता वा जुहुयाद्धनेन स परिक्रीत इति। अथापि विहितं वाऽनूद्येत कामाद्वाऽर्थः परिकल्प्येत विहिता+नुवचनं न्याय्यमिति। ऋणवानिवास्वतन्त्रो गृहस्थः कर्मसु प्रवर्तत इत्युपपन्नं वाक्यस्य सामर्थ्यम्। फलस्य हि साधनानि प्रयत्नविषयो न × फलम्।

---

श्यकत्वख्यापनाय तथोक्तम्। लाक्षणिकशब्दप्रयोगे बीजमाह—निन्दाप्रशंसोपपत्तेः। ऋणानपाकरणतदपाकरणाभ्यामिवाग्निहोत्राद्यकरणतत्करणाभ्यां

---

* तेन यदुक्तमृणापाकरणेन वयःपर्यवसानान्नास्ति मोक्षावसर इति तदपाकृतं भवति

+ न तावज्जायमानो ह वा इत्यादिवाक्ये विधिविभक्तिरस्ति तेन सिद्धानुवादः स्वरसतः प्रतीयते। यदि तु तस्यार्थस्य सिद्धिर्वाक्यात्प्रमाणान्तराद्वा न कल्पेत ततो वचनानि त्वपूर्वत्वादिति न्यायेन विधित्वमस्य कल्पेत। सन्ति तु बहूनि तदर्थविधायकानि वाक्यानि विधिविभक्तिमन्तीति को जात्वस्येच्छामात्रेण विध्यर्थतां कल्पयेत्। तस्माद्विहितानुवचनमेव न्याय्यमिति जायमानशब्दो जघन्यवृत्तिरिति भावः।

× अयमभिप्रायः—विधिर्हि स्वव्यापारे पुरुषं कर्तृतया नियुङ्क्ते। प्रयत्नश्चास्य व्यापारः। स च निर्विषयो न शक्यो निर्वर्तयितुमिति स्वविषयमपेक्षते। न चास्य साक्षात्फलं प्रयत्नविषयो भवितुमर्हति। तदुद्देशतामात्रेण तु भवेत्। न चैतावता प्रयत्नोऽस्य निर्वृणोति। यावदयं साक्षादभिनिर्वर्तनीयं न प्राप्नोति तदुपायश्चास्य साक्षादभिनिर्वर्तनीय इति फलोद्देशप्रवृत्तस्य पुरुषप्रयत्नस्य तदैवोपायो विषयः। न च बालस्यापि तदुपायमविदुषस्तत्र सामर्थ्यमस्ति। असमर्थश्चाकर्ता कथमेनं प्रयत्नेन व्याप्नुयात्। अव्याप्नुवंश्च कथमधिकारीति जायमानशब्दो जघन्यवृत्तिरेव न्याय्य इति सिद्धम्।

---

१ क. ग. ङ. च. 'बाविप'।

तानि संपन्नानि फलाय कल्पन्ते । विहितं जायमानं विधीयते च जायमानं तेन यः संबध्यते सोऽयं जायमान इति ।

प्रत्यक्षविधानाभावादिति चेन्न प्रतिषेधस्यापि प्रत्यक्षविधानाभावादिति । प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन, यदि चाऽऽश्रमान्तरमभविष्यत्तदपि व्यधास्यत्प्रत्यक्षतः । प्रत्यक्षविधानाभावान्नास्त्याश्रमान्तरमिति । न प्रतिषेधस्य प्रत्यक्षविधानाभावात् । न प्रतिषेधोऽपि वै ब्राह्मणेन प्रत्यक्षतो विधीयते न सन्त्याश्रमान्तराणि एक एव गृहस्थाश्रम इति प्रतिषेधस्य प्रत्यक्षतोऽश्रवणादयुक्तमेतदिति ।

अधिकाराच्च * विधानं विद्यान्तरवत् । यथा शास्त्रान्तराणि स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकानि नार्थान्तराभावादेवमिदं ब्राह्मणं गृहस्थशास्त्रं स्वेऽधिकारे प्रत्यक्षतो विधायकं नाऽऽश्रमान्तराणामभावादिति ।

ऋग्ब्राह्मणं चापवर्गाभिधाय्यभिधीयते । ऋचश्च ब्राह्मणानि चापवर्गाभिवादीनि भवन्ति । ऋचश्च तावत्—कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः । अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति । वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय । अथ ब्राह्मणानि—त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एवैते पुण्यलोका भवन्ति ।

---

निन्दाप्रशंसे उपपद्येते । नचानुष्ठानकालाभावः । जरया विमुच्यत इत्युक्तेः । न च जरयाऽशक्तिरुपलक्ष्यते । अन्तेवासी वा जुहुयाद्ब्रह्मणा हि स परिक्रीत

---

* अस्य सूत्रत्वेनोल्लेखः क्वचिद्दृश्यते ।

---

१ क. ङ. च. कल्प्यन्ते । २ क. च. ॰स्यत प्र॰ ।

ब्रह्मसंस्थोऽमृतत्वमेति एतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्तीति । अथो खल्वाहुः—काममय एवायं पुरुष इति स यथाकामो भवति तथा * क्रतुर्भवति यथा क्रतुर्भवति तथा तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यत इति कर्मभिः संसरण-मुक्त्वा प्रकृतमन्यदुपदिशन्ति[1]—इति[2] नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति, इहैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येतीति । तत्र यदुक्तमृणानुबन्धादपवर्गाभाव इत्येतदयुक्तमिति । ये चत्वारः पथयो देवयाना इति च चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः ॥६०॥

भा०—फलार्थिनश्चेदं ब्राह्मणं जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्श-पूर्णमासौ चेति कथम्—

समारोपणादात्मन्य+प्रतिषेधः ॥ ६१ ॥

प्राजापत्यामिष्टिं निरुप्य तस्यां सार्ववेदसं हुत्वाऽऽत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेदिति श्रूयते । तेन विजानीयुः प्रजावित्तलोकैषणाभ्यो व्युत्थितस्य निवृत्ते फलार्थित्वे समारोपणं विधीयत इति । एवं च ब्राह्मणानि सोऽन्यद्व्रतमुपाकरिष्यमाणो याज्ञवल्क्यो मैत्रेयीति होवाच प्रव्र×जिष्यन्वा अरेऽहमस्मात्स्थाना-

---

इत्यादिनाऽशक्तस्यापि विधानात् । तस्मादायुषश्चतुर्थो भागो जरेत्युच्यते । किं च जरामर्यवादः कामनाभिप्रायेण । तथा च भाष्यम्—अर्थित्वस्य चापरिणामे जरामर्यवादोपपत्तेरिति । अर्थित्वं कामना तदपरिणामे तदनाशे कर्मकरणाभिप्रायेण जरामर्यवाद उपपद्यते ॥ ६० ॥

वृ०—ननु काम्यानां कामनाविरहेण त्यागसंभवेऽपि नित्यानां कथं त्यागः। श्रूयते हि यावज्जीवमग्निहोत्रं जुहुयादिति तत्राऽऽह—अपवर्गप्रतिषेधो न युक्तः। अग्नीनामात्मनि समारोपविधानात् । श्रूयते—प्राजापत्यामिष्टिं निरुप्य तस्यां

---

* क्रतुः संकल्पः । + आत्मन्यग्नीनां समारोपणादृणानुबन्धेनापवर्गस्याप्रतिषेधः । तदनेन च्छलेन प्रत्यक्षविधानं प्रव्रज्याया अपि दर्शितम् । × बृहदारण्यके तु-मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ( २ । ४ । १ ) इत्युपलभ्यते ।

---

१ ख. घ. °न्ति का° । २ क. च. °ति तु का° । ३ ख. ग. घ. ङ. °वलीय° ।

दस्मि हन्त तेऽनया कात्यायन्या सहान्तं करवाणीति। अथाप्युक्तानुशासनाऽसि मैत्रेयि एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेति ॥ ६१ ॥

पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६२ ॥

भा०—जरामर्ये च कर्मण्यविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि कर्माणीति प्रसज्यते। तत्रैषणाव्युत्थानं च श्रूयते—एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीति। एषणाभ्यश्च व्युत्थितस्य पात्रचयान्तानि कर्माणि नोपपद्यन्त इति। नाविशेषेण कर्तुः प्रयोजकफलं भवतीति। चातुराश्रम्यविधानाच्चेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः।

तदप्रमाणमिति चेन्न प्रमाणेन प्रामाण्याभ्यनुज्ञानात्। प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते। ते वा खल्वेतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यवदन्नितिहासपुराणं पञ्चमं वेदानां वेद इति। तस्मादयुक्तमेतदप्रामाण्यमिति। अप्रामाण्ये च धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसङ्गः। द्रष्टृ

---

सार्ववेदसं हुत्वाऽऽत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेदिति। अत एव चत्वारः पथयो देवयाना इति चातुराश्रम्यश्रुतिरपि संगच्छते ॥ ६१ ॥

वृ०—नन्वग्निहोत्रस्याप्रतिबन्धकत्वेऽपि तत्फलस्वर्ग एवापवर्गप्रतिबन्धकः स्यादत्राऽऽह—ज्ञानिनः फलस्य स्वर्गस्याभावः। अग्निहोत्रं हि पात्रचयान्तम्। पात्राण्यग्निहोत्रपात्राणि तेषां चयः प्रमीतस्य यजमानस्याङ्गेषु विन्यासो मुखे घृतपूर्णा स्रुचमिति क्रमेण भिक्षोस्तदनुपपत्तेस्तेन तत्परित्यागादग्निहोत्रफलाभावेऽपि ज्योतिष्टोमगङ्गास्नानादिहिंसादिफलानां प्रतिबन्धकत्वं स्यादतो हेत्वन्तरसमुच्चयाय चकार उपन्यस्तः। तथा च प्रारब्धातिरिक्तकर्मणां ज्ञानादेव क्षय इत्याशयः। श्रूयते हि तथा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति। एवं क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे। स्मर्यते—ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति। इत्थं च कामनाशून्यस्य प्रजानुत्पादोऽपि नाप-

---

१ च. °संदृश्या°।

प्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः । य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति ।

विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यमन्यो मन्त्रब्राह्मणस्य विषयोऽन्यच्चेतिहासपुराणधर्मशास्त्राणामिति । यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थानं धर्मशास्त्रस्य विषयः । तत्रैकेन सर्वं व्यवस्थाप्यत इति यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति ॥ ६२ ॥

भा० —यत्पुनरेतत्क्लेशानुबन्धस्याविच्छेदादिति—

**सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६३ ॥**

यथा सुषुप्तस्य खलु स्वप्नादर्शने रागानुबन्धः सुखदुःखानुबन्धश्च विच्छिद्यते * तथाऽपवर्गेऽपीति । एतच्च ब्रह्मविदो मुक्तस्याऽऽत्मनो रूपमुदाहरन्तीति ॥ ६३ ॥

भा०—यदपि प्रवृत्त्यनुबन्धादिति—

**न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्य ॥ ६४ ॥**

प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्तिर्न प्रतिसंधानाय । प्रतिसंधिस्तु

---

वर्गविरोधी । तथा च श्रूयते—एतद्ध ह स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्तीति । अन्ये तु फलाभावः फलस्य मुमुक्षून्प्रति अग्निहोत्रादौ प्रयोजकत्वाभावस्तथा सति भिक्षूणामपि पात्रचयान्तं स्यादित्यर्थ इत्याहुः ॥ ६२ ॥

वृ०—क्लेशानुबन्धं दूषयति—स्वप्नादर्शनकाले सुषुप्तस्य यथा हेत्वभावेन दुःखाभावस्तथाऽपवर्गेऽपि रागाद्यभावेन दुःखाभावः स्यात् ॥ ६३ ॥

वृ०—प्रवृत्त्यनुबन्धादपवर्गाभावं दूषयति—क्लिश्यन्तेऽनेनेति क्लेशो

---

* एतावांस्तु मुक्तावस्थायां विशेषः—यदस्यां क्लेशवासनाऽपि नास्ति । सुषुप्तावस्थायां प्रलयावस्थायां च क्लेशविच्छेदेऽपि तद्वासनाऽस्तीति ।

---

१ क. ग. च. °य । पूर्वसं° ।

पूर्वजन्मनिवृत्तौ पुनर्जन्म। तच्चादृष्टकारितम्। तस्यां प्रहीणायां पूर्वजन्माभावे जन्मान्तराभावोऽप्रतिसंधानमपवर्गः।

कर्मवैफल्यप्रसङ्ग इतिचेन्न कर्मविपाकप्रतिसंवेदनस्याप्रत्याख्यानात्। पूर्वजन्मनिवृत्तौ पुनर्जन्म न भवतीत्युच्यते न तु कर्मविपाकप्रतिसंवेदनं प्रत्याख्यायते सर्वाणि पूर्वकर्माणि ह्यन्ते जन्मनि विपच्यन्त इति॥ ६४॥

न क्लेशसंततेः स्वाभाविकत्वात्॥ ६५॥

भा०—नोपपद्यते क्लेशानुबन्धविच्छेदः। कस्मात्। क्लेशसंततेः स्वाभाविकत्वात्। अनादिरियं क्लेशसंततिः। न चानादिः शक्य उच्छेत्तुमिति॥ ६५॥

भा०—अत्र कश्चित्परीहारमाह—

प्रागुत्पत्तेरभावानित्यत्वस्वाभाविकेऽप्यनित्यत्वम्॥ ६६॥

यथाऽनादिः प्रागुत्पत्तेरभाव उत्पन्नेन भावेन निवर्त्यत एवं स्वाभाविकी क्लेशसंततिरनित्येति॥ ६६॥

अणुश्यामतानित्यत्ववद्वा॥ ६७॥

भा०—अपर आह—यथाऽनादिरणुश्यामताऽथ चाग्निसंयोगादनित्या तथा क्लेशसंततिरपीति। सतः खलु धर्मो नित्यत्वमनित्यत्वं च तत्त्वं भावे, अभावे भाक्तमिति। अनादिरणुश्यामतेति हेत्वभावादयुक्तम्। अनुत्पत्तिधर्मकमनित्यमिति नात्र हेतुरस्तीति॥ ६७॥

भा०—अयं तु समाधिः—

न संकल्पनिमित्तत्वाच्च रागादीनाम्॥ ६८॥

कर्मनिमित्तत्वादितरेतरनिमित्वाच्चेति समुच्चयः। मिथ्यासंक-

---

रागादिः। तद्विरहिणो या प्रवृत्तिः सा प्रतिसंधानाय प्रतिबन्धाय न भवति धर्माधर्मौ न जनयतीत्यर्थः॥ ६४॥

वृ०—क्लेशाभावमसहमानः शङ्कते—क्लेशसंततेरुच्छेदो न युक्तः स्वाभाविकत्वात्॥ ६५॥

वृ०—एकदेशी समाधत्ते—प्रागुत्पत्तेरभावानित्यत्ववत्प्रागभावानित्यत्ववदनादेः परमाणुश्यामताया विनाशवद्वा विनाशः॥ ६६॥ ६७॥

वृ०—अनित्यत्वं विनाशिभावत्वम्। न च तत्प्रागभावे। न वाऽणुश्याम-

रूपेभ्यो रञ्जनीयकोपनीयमोहनीयेभ्यो रागद्वेषमोहा उत्पद्यन्ते । कर्म च सत्त्वनिकायनिर्वर्तकं नैयमिकान्रागद्वेषमोहानभिर्वर्तयति, नियमदर्शनात् । दृश्यते हि कश्चित्सत्त्वनिकायो रागबहुलः कश्चिन्मोहबहुल इति । इतरेतरनिमित्ताच्च रागादीनामुत्पत्तिः । मूढो रज्यति मूढः कुप्यति रक्तो मुह्यति कुपितो मुह्यति । सर्वमिथ्यासंकल्पानां तत्त्वज्ञानादनुत्पत्तिः । कारणानुत्पत्तौ च कार्यानुत्पत्तेरिति रागादीनामत्यन्तमनुत्पत्तिरिति । अनादिश्च क्लेशसंततिरित्यप्युक्तम् । सर्वे इमे खल्वाध्यात्मिका भावा अनादिना प्रबन्धेन प्रवर्तन्ते शरीरादयः । न जात्वत्र कश्चिदनुत्पन्नपूर्वः प्रथमत उत्पद्यतेऽन्यत्र तत्त्वज्ञानात् । न चैवं सत्यनुत्पत्तिधर्मकं किंचिद्व्ययधर्मकं प्रतिज्ञायत इति । कर्म च सत्त्वनिकायनिर्वर्तकं तत्त्वज्ञानकृतान्मिथ्यासंकल्पविघातान्न रागाद्युत्पत्तिनिमित्तं भवति सुखदुःखसंवित्तिफलं तु भवतीति ॥ ६८ ॥

इत्यपवर्गपरीक्षाप्रकरणम् ॥ १४ ॥

---

इति वात्स्यायनीयन्यायभाष्ये चतुर्थाध्यायस्याऽऽद्यमाह्निकम् ॥ १ ॥

---

---

तादिरनादिः । तथा च भाष्यम्—अनादिरणुश्यामतेति हेत्वभावादयुक्तमिति । अतो मतद्वयमुपेक्ष्य सिद्धान्तमाह—नोक्तं युक्तम् । कुतः । रागादीनां संकल्पनिमित्तत्वात् । संकल्पो मिथ्याज्ञानं निमित्तं येषां तथा च तत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तौ रागादिनिवृत्तिर्युज्यत एवेति भावः ॥ ६८ ॥

इत्यपवर्गपरीक्षा प्रकरणम् ॥ १४ ॥

---

इति श्रीविश्वनाथभट्टाचार्यकृतन्यायसूत्रवृत्तौ चतुर्थाध्यायस्यप्रथमाह्निकम् ॥ १ ॥

---

भा०—किं*नु खलु भो यावन्तो विषयास्तावत्सु प्रत्येकं[1] तत्त्वज्ञानमुत्पद्यतेऽथ क्वचिदुत्पद्यत इति । कश्चात्र विशेषः । न तावदेकैकत्र यावद्विषयमुत्पद्यते । ज्ञेयानामानन्त्यात् । नापि क्वचिदुत्पद्यते यत्र नोत्पद्यते तत्रानिवृत्तो मोह इति मोहशेषप्रसङ्गः । न चान्यविषयेण तत्त्वज्ञानेनान्यविषयो मोहः शक्यः प्रतिषेद्धुमिति । मिथ्याज्ञानं + वै खलु मोहो न तत्त्वज्ञानस्यानुत्पत्तिमात्रं तच्च मिथ्याज्ञानं यत्र विषये प्रवर्तमानं संसारबीजं भवति स विषयस्तत्त्वतो ज्ञेय इति । किं पुनस्तन्मिथ्याज्ञानम् । अनात्मन्यात्मग्रहोऽहमस्मीति मोहोऽहंकार इति । अनात्मानं खल्वहमस्मीति पश्यतो दृष्टिरहंकार इति । किं पुनस्तदर्थजातं यद्विषयोऽहंकारः । शरीरेन्द्रियमनोवेदनाबुद्धयः । कथं तद्विषयोऽहंकारः संसारबीजं भवति । अयं खलु शरीराद्यर्थजातमहमस्मीति व्यवसितस्तदुच्छेदेनाऽऽत्मोच्छेदं मन्यमानोऽनुच्छेदतृष्णापरिप्लुतः पुनः पुनस्तदुपा-

---

वृ०—अथ शास्त्रस्य परमं प्रयोजनमपवर्गः स चोद्दिष्टो लक्षितः परीक्षितोऽप्यकिंचित्करः कारणानिरूपणात् । नन्वभिहितमेव दुःखादिसूत्रे कारणनाशक्रमेण दुःखाभावोऽपवर्ग इतीति चेत् । सत्यम् । मिथ्याज्ञानापगमहेतुर्नाभिहितः । तत्त्वज्ञानं तत्र हेतुरिति चेत्कस्य तत्त्वं ज्ञातव्यमित्यभिधानीयमित्याशयेन तत्त्वज्ञानपरीक्षा सैव चाऽऽह्निकार्थः । तत्र च षट् प्रकरणानि । आदौ तत्त्वज्ञानोत्पत्तिप्रकरणम् । अन्यानि च यथायथं वक्ष्यन्ते । तत्र सिद्धान्तसूत्रम् । अहंकारोऽहमित्यभिमानः । स च शरीरादिविषयको मिथ्याज्ञानमुच्यते ।

---

* तदेवं प्रमाणप्रमेयसंशयाः परीक्षिताः । प्रयोजनादयोऽपि 'यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः' इत्यतिदेशेन परीक्षिता इति षोडशापि प्रमाणादयः परीक्षिताः । तेषां तत्त्वज्ञानं निःश्रेयसाधिगमहेतुरित्युक्तम् । इदमिदानीं परीक्ष्यते किं प्रत्येकमात्मादीनां तत्त्वज्ञानं निःश्रेयसाधिगमहेतुरुत कस्यचिदेषामेकदेशस्येति । + वैशब्दः पूर्वपक्षाक्षमायाम् । खलुशब्दो हेत्वर्थे । अयुक्तः पूर्वपक्षो यस्मान्मिथ्याज्ञानं मोह इति । तत्त्वज्ञानं नाज्ञाननिवृत्तिमात्रेण निःश्रेयसोपयोगि, अपि तु दृष्टेन संसारोच्छेदद्वारेण । न च तत्त्वज्ञानं संसारहेतुः, अपि तु विरोधितया मिथ्याज्ञानमुच्छिन्दत्तत्त्वज्ञानमपवर्गहेतुरिति भावः ।

---

१ क. ग. च. °कं ज्ञा° ।

दत्ते तदुपाददानो जन्ममरणाय यतते तेनावियोगान्नात्यन्तदुःखा-द्विमुच्यत इति। यस्तु दुःखं दुःखायतनं दुःखानुषक्तं सुखं च सर्वमिदं दुःखमिति पश्यति स दुःखं परिजानाति परिज्ञातं च दुःखं प्रहीणं भवत्यनुपादानात्सविषान्नवत्। एवं दोषान्कर्म च दुःखहेतुरिति पश्यति। न वा प्रहीणेषु दोषेषु दुःखप्रबन्धोच्छेदेन शक्यं भवितुमिति दोषाञ्जहाति। प्रहीणेषु च दोषेषु न प्रवृत्तिः प्रतिसंधानायेत्युक्तम्। प्रेत्यभावफलदुःखानि च ज्ञेयानि व्यव-स्थापयति कर्म च दोषांश्च प्रहेयान्। अपवर्गोऽधिगन्तव्यस्त-स्याधिगमोपायस्तत्त्वज्ञानम्। एवं च तिसृभिर्विधाभिः प्रमेयं विभक्तमासेवमानस्याभ्यस्यतो भावयतः सम्यग्दर्शनं यथाभूतोऽ-वबोधस्तत्त्वज्ञानमुत्पद्यते। एवं च—

दोष*निमित्तानां तत्त्वज्ञानादहंकारनिवृत्तिः ॥ १ ॥

शरीरादि दुखान्तं प्रमेयं दोषनिमित्तं तद्विषयत्वान्मिथ्याज्ञा-नस्य। तदिदं तत्त्वज्ञानं तद्विषयमुत्पन्नमहंकारं निवर्तयति समान-विषये तयोर्विरोधात्। एवं तत्त्वज्ञानात्—दुःखजन्मप्रवृत्तिदोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः (१।१।२) इति। स चायं शास्त्रार्थसंग्रहोऽनूद्यते + नापूर्वो विधीयत इति ॥ १ ॥

भा०—प्रसं×ख्यानानुपूर्व्या तु खलु—

दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः ॥ २ ॥

कामविषया इन्द्रियार्था इति रूपादय उच्यन्ते। मिथ्यासंक-

---

तत्र दोषनिमित्तानां शरीरादीनां तत्त्वस्यानात्मतत्त्वस्य ज्ञानान्निवर्तते। आत्म-त्वेन हि शरीरादौ मुह्यन्रञ्जनीयत्वाद्रज्यति कोपनीयेषु कुप्यति। केचित्तु दोषनिमित्तानां रागादीनां तत्त्वज्ञानाद्बलवदनिष्टानुबन्धित्वज्ञानादहंकारस्या-भिलाषस्य निवृत्तिरित्यर्थ इत्याहुः ॥ १ ॥

वृ०—ननु के तावदनुरञ्जनीया विषया येषु रज्यन्संसरतीत्यतो विवेकाय तानुपदिशति—संकल्पः समीचीनत्वेन भावनं तद्विषयीकृता रूपादयः।

---

* अर्थगतिं परिशोध्यात्रार्थे सूत्रं पठति—दोषेति। + शास्त्रतात्पर्यसंग्रहो द्वितीयसूत्रे-णानूद्यत इत्यर्थः। × प्रसंख्यानं समाधिजं तत्त्वज्ञानं तच्च विषये सुकरमिति तत्रैव प्राथ-मिकस्य प्रथमं यत्नो युक्त इति भावः।

ल्प्यमाना रागद्वेषमोहान्प्रवर्तयन्ति तान्पूर्वं प्रसंचक्षीत । तांश्च प्रसंचक्षाणस्य रूपादिविषयो मिथ्या*संकल्पो निवर्तते । तन्निवृत्तावध्यात्मं शरीरादि प्रसंचक्षीत । तत्प्रसंख्यानादध्यात्मविषयोऽहंकारो निवर्तते । सोऽयमध्यात्मं बहिश्च विविक्तचित्तो विहरन्मुक्त इत्युच्यते ॥ २ ॥

भा०— +अतः परं काचित्संज्ञा हेया काचिद्भावयितव्येत्युपदिश्यते नार्थनिराकरणमर्थोपादानं वा कथमिति—

## तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥

तेषां दोषाणां निमित्तं त्ववयव्यभिमानः । सा च खलु स्त्रीसंज्ञा सपरिष्कारा पुरुषस्य, पुरुषसंज्ञा च स्त्रियाः। परिष्कारश्च निमित्तसंज्ञाऽनुव्यञ्जनसंज्ञा च । निमित्तसंज्ञा—दन्तोष्ठं चक्षुर्नासिकम् । अनुव्यञ्जनसंज्ञा—इत्थं दन्तौ, इत्थमोष्ठाविति । सेयं संज्ञा कामं वर्धयति तदनुषक्तांश्च दोषान्विवर्जनीयान् । वर्जनं त्वस्या भेदेनावयवसंज्ञा केशलोममांसशोणितास्थिस्नायुशिराकफ-

---

दोषस्य रागादेर्निमित्तं सुन्दरीयमिति जानन्रज्यति शत्रुरयमिति द्वेष्टि । ते रूपादयो हेयत्वेन भावनीयाः प्रथमं ततः शरीरात्मविवेकः ॥ २ ॥

वृ०—ननु सौन्दर्यादिकं पश्यतो रागादिर्ब्रह्मणोऽपि दुष्परिहरः । तदुक्तम्—चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढमिति । ततो रागादिनिवृत्त्युपायं दर्शयिष्यन्नाह—अवयविनि तरुण्यादिशरीरेऽभिमानः सपरिष्कारबुद्धिस्तन्निमित्तं रागादिनिमित्तम् । तथा च सा बुद्धिर्हेया । अत एव भाष्यादौ परिष्कारबुद्धिरनुव्यञ्जनसंज्ञा सा हेया दोषदर्शनमशुभसंज्ञा सा भावनीयेति । अनुव्यञ्जनसंज्ञा यथा—खेलत्खञ्जननयना परिणतबिम्बाधरा पृथुश्रोणी । कमलमुकुलस्तनीयं पूर्णेन्दुमुखी सुखाय मे भवितेति । अशुभसंज्ञा यथा—

---

* कः पुनरेषां मिथ्यासंकल्पः । असाधारणप्रत्ययोत्पत्तिनिमित्तत्वेन ममैवैत इति व्यवसायः । तान्साधारणतया प्रसंचक्षीत नैते ममैव किंतु चौराग्निदायादसाधारणा एवेति । + अन्ये खलु अवयविसंज्ञां निवर्तयन्तोऽवयविनमेव प्रत्याचक्षते तान्प्रत्याचक्षाण आह—अतः परमिति ।

---

१ छ. °नुरञ्ज° । २ छ. °नुरञ्ज° ।

पित्तोच्चारादिसंज्ञा तामशुभसंज्ञेत्याचक्षते । तामस्य भावयतः कामरागः प्रहीयते। सत्येव च * द्विविधे विषये काचित्संज्ञा भावनीया काचित्परिवर्जनीयेत्युपदिश्यते । यथा विषसंपृक्तेऽन्नेऽन्नसंज्ञोपादानाय विषसंज्ञा प्रहाणायेति ॥ ३ ॥

इति तत्त्वज्ञानोत्पत्तिप्रकरणम् ॥ १ ॥

---

भा०—अथेदानीमर्थं निराकरिष्यताऽवयव्युपपाद्यते—

विद्याविद्याद्वैविध्यात्संशयः ॥ ४ ॥

सदसतोरुपलम्भाद्विद्या द्विविधा सदसतोरनुपलम्भादविद्याऽपि + द्विविधा। उपलभ्यमानेऽवयविनि विद्याद्वैविध्यात्संशयः ।

---

चर्मनिर्मितपात्रीयं मांसासृक्पूयपूरिता। अस्यां रज्यति यो मूढः पिशाचः कस्ततोऽधिकः। स्वशरीरादावप्यशुभसंज्ञैव भावनीया । एवं कोपनीयेऽपि शुभसंज्ञा—मां द्वेष्ट्यसौ दुराचार इष्टादिषु यथेष्टः । कण्ठपीठं कुठारेण च्छित्त्वाऽस्य स्यां सुखी कदा । अशुभसंज्ञा तु—मांसासृक्कीकसमयो देहः किं मेऽपराध्यति । एतस्मादपरः कर्ता कर्तनीयः कथं मयेति ॥ ३ ॥

इति तत्त्वज्ञानोत्पत्तिप्रकरणम् ॥ १ ॥

---

वृ०—अथ प्रसङ्गादवयवावयविप्रकरणम्। वस्तुतस्तु शरीरे धर्मद्वयस्य संबन्धेऽप्येकं ध्येयमपरं हेयमिति निर्युक्तिकमतोऽवयवी नास्ति किंतु परमाणुपुञ्ज

---

* यद्यपि द्विविध एवासौ कामिनीलक्षणो विषयस्तथाऽपि रागादिप्रहाणार्थमवयवादिसंज्ञागोचरत्वं परित्यज्याशुभसंज्ञागोचरत्वमस्योपादीयते वैराग्योत्पादनायेत्यर्थः । × अयं भावः—विज्ञानवादिनाऽवयविनिराकरणमुपपाद्यते । अर्थविशेषे खल्ववयवानुव्यञ्जनसंज्ञे । तत्रार्थमात्रस्याभावात्कुतोऽवयवानुव्यञ्जनसंज्ञे, तन्निराकरणाय प्रथममवयवी निराक्रियते, पश्चात्परमाणुः । ततश्च ज्ञानमात्रमर्थरहितं सिद्धं भवतीति । + अयमाशयः—उपलब्धिर्विद्याऽनुपलब्धिश्चाविद्या। सच्चोपलभ्यते यथा तडागगतं तोयम्। असच्चोपलभ्यते यथा मरुमरीचिकायामुदकम्। सच्च नोपलभ्यते यथा चिरनिखातं भूमौ निध्यादि । असच्च नोपलभ्यते यथा भूतले दृश्यमाने तत्तुल्योपलम्भयोग्यो घटादिः । तदेवं विद्याविद्याद्वैविध्यादवयविनि संशय इति ।

४२

अनुपलभ्यमाने चाविद्याद्वैविध्यात्संशयः । सोऽयमवयवी यद्युपलभ्यतेऽथापि नोपलभ्यते न कथंचन संशयान्मुच्यत इति ॥ ४ ॥

तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥

भा०—तस्मिन्ननुपपन्नः संशयः । कस्मात् । पूर्वोक्तहेतूनामप्रतिषेधादस्ति द्रव्यान्तरारम्भ इति ॥ ५ ॥

वृत्त्यनुपपत्तेरपि तर्हि न संशयः ॥ ६ ॥

भा०—वृत्त्यनुपपत्तेरपि तर्हि संशयानुपपत्तिर्नास्त्यवयवीति । तद्विभजते—

कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः । * एकैकोऽवयवो न तावत्कृत्स्नेऽवयविनि वर्तते । तयोः परिमाणभेदादवयवान्तरसंबन्धाभावप्रसङ्गाच्च । नाप्यवयव्येकदेशेन, न ह्यस्यान्येऽवयवा एकदेशभूताः सन्तीति ।

अथावयवेष्वेवावयवी वर्तते —

तेषु चावृत्तेरवयव्यभावः । न तावत्प्रत्यवयवं वर्तते । तयोः

---

इति तत्त्वम् । तदेवं तन्मुमुक्षुभिर्भावनीयम् । परमाणुपुञ्ज इत्यापाततः । परमाणोरप्यग्रे निराकरिष्यमाणत्वादिति सौगतशङ्कामपाकर्तुमयमारम्भः । यद्यपि द्वितीयेऽध्याये व्यवस्थापित एवावयवी तथाऽपि स्वयुक्तिदार्ढ्येन सौत्रान्तिकस्य वैभाषिकस्य चात्र प्रत्यवस्थानमिति तत्र संशयप्रदर्शनाय सूत्रम् । संशय इत्यस्यावयविनीत्यादिः । अवयविनः प्रत्यक्षसिद्धत्वात् । तदपलापो दुःशक इत्यत उक्तम्—विद्येति । प्रमाभ्रमभेदेन ज्ञानद्वैविध्याज्ज्ञानत्वलक्षणसाधारणधर्मदर्शनाज्ज्ञाने प्रामाण्यसंशयादवयविनि संशय इत्यर्थः ॥ ४ ॥

वृ०—समाधत्ते—तत्रावयविनि न संशयः पूर्वहेतुप्रसिद्धत्वात् । द्वितीयाध्यायोक्तयुक्तिभिरवयविनः प्रकर्षेण सिद्धत्वात् ॥ ५ ॥

वृ०—अवयविनि बाधकं शङ्कते—अपिरवधारणे । तर्हि संशयानुपपत्तिर्वृत्त्यनुपपत्तितोऽवयव्यभावादेव स्यादित्यर्थः । वृत्त्यनुपपत्तिं विवृणोति भाष्यकारः—कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः । अवयवी ह्येकैकावयवे कार्त्स्न्येनैकदेशेन वा । नाऽऽद्यः । विषमपरिमाणत्वात् । अन्त्येऽपि तेनैवावयवेनान्त्येन

---

* वृक्षस्तिष्ठति शाखादिषु शाखादया वा वृक्ष इति लौकिकीं प्रतिपत्तिमनुध्येदं बोध्यम् ।

परिमाणभेदाद्द्रव्यस्य चैक*द्रव्यत्वप्रसङ्गात् । नाप्येकदेशे[१] सर्वेषु अन्यावयवाभावात् । तदेवं न युक्तः संशयो नास्त्यवयवीति ॥६॥

पृथक्चावयवेभ्योऽवृत्तेः ॥ ७ ॥

भा०—पृथक्चावयवेभ्यो धर्मिभ्यो धर्मस्याग्रहणादिति समानम् ॥७॥

न चावयव्यवयवाः+ ॥ ८ ॥

॥ ८ ॥

वा । नाऽऽद्यः । स्वस्मिन्वृत्तिविरोधात् । नान्त्यः । अवयवान्तरस्यावयवान्तरावृत्तेः । तथाऽपि कथमवयव्यभाव इत्यत्र भाष्यम्—तेषु चावृत्तेरवयव्यभावः । तेष्ववयवेषु पूर्वोक्तयुक्त्याऽभावादवयवी नास्ति । न ह्यसाववृत्तिस्त्वयाऽभ्युपेयत इति भावः । सूत्रमेवेदमित्यपि वदन्ति ॥ ६ ॥

वृ०—नन्वास्तामवृत्तिरेवावयवीति शङ्कायां पूर्वपक्षिसूत्रम् । अवयवेभ्यः पृथगवयवी नास्तीति शेषः । तेषु चावृत्तेरित्यस्य सूत्रत्वेऽवयव्यभाव इत्यनुवर्तते । कुतः । अवृत्तेः, वृत्त्यभावेऽवयविनो नित्यत्वप्रसङ्गः । न च नित्योऽवयव्युपलभ्यते, ततो नास्त्येवावयवीति भावः । यद्वा कृत्स्नैकदेशाभ्यामवयवी न वर्तते किंतु स्वरूपेणैवेति शङ्कायां पूर्वपक्षिण सूत्रं पृथगिति । अवयवेभ्यः पृथगवयवी नास्ति । कुतः । अवृत्तेरवृत्तित्वप्रसङ्गात् । तथा सति नित्यं स्यादिति भावः । कश्चित्तु अवयवातिरिक्तोऽवयवी वर्ततामित्यत्र पूर्वपक्षिणः सूत्रं पृथगिति । पूर्वोक्तयुक्त्याऽवयवेभ्यः पृथगप्यवृत्तेः ॥ ७ ॥

वृ०—नन्ववयवावयविनोस्तादात्म्यमेव संबन्धः स्यादत्राऽऽह—नहि तन्तुः पटः स्तम्भो गृहमिति कश्चित्प्रत्येति । न वाऽभेदेनाऽऽधाराधेयभाव उपपद्यते ॥ ८ ॥

* एकावयववृत्तित्वादेकद्रव्योऽवयवी प्राप्नोति । एकद्रव्यश्चावयवी—एकेन द्रव्येणाऽऽरभ्यत इति, अतः सततोत्पत्तिप्रसङ्गः । किंचैकद्रव्यवृत्तित्वादेकद्रव्यं द्व्यणुकमेकस्मिन्परमाणौ वर्तत इति कारणविभागनाशाभावान्नित्यं प्राप्नोति । उत्पत्तिमच्च यत्तन्नित्यमित्येतादृशो दृष्टान्तो नास्ति । + यत्तु मन्येतावयवानां धर्ममात्रमवयवी न त्ववयवेभ्योऽत्यन्तं भिन्नोऽभिन्नो वा । भिन्नत्वे गवाश्ववद्धर्मधर्मिभावानुपपत्तेः । अभिन्नत्वेऽपि धर्मिस्वरूपवत्तदनुपपत्तेः । तस्मात्कथंचिद्भिन्नोऽभिन्नः कथंचिद्धर्ममात्रमवयवानामवयवीति तं प्रत्याह—न चावयव्यवयवाः । न तावद्भेदाभेदौ परस्पराभावात्मानावेकत्र समवेत. । नाप्यात्यन्तिकेऽभेदे धर्मधर्मिभावः । तस्माद्यथाऽऽत्यन्तिकभेदेऽपि केषांचिदेव कार्यकारणभावस्तथा केषांचिदेव धर्मधर्मिभाव इत्येषितव्यम् । तथा च दूषणमित्यर्थः ।

१ ख. घ. देशेन स° । क ग. च. देशेन स । २ क. ख. ग. घ. च. वयु° ।

एकस्मिन्भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ९ ॥

भा०—किं प्रत्यवयवं कृत्स्नोऽवयवी वर्ततेऽथैकदेशेनेति नोपपद्यते प्रश्नः । कस्मात् । एकस्मिन्भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेः । कृत्स्नमित्यनेकस्याशेषाभिधानम् । एकदेश इति नानात्वे कस्यचिदभिधानम् । ताविमौ कृत्स्नैकदेशशब्दौ भेदविषयौ नैकस्मिन्नवयविन्युपपद्येते भेदाभावादिति ॥ ९ ॥

भा०—अन्यावयवाभावान्नैकदेशेन वर्तत इत्यहेतुः—

अवयवान्तरभावेऽप्यवृत्तेरहेतुर-
वयवान्तराभावादिति ॥ १० ॥

यद्यप्येकदेशोऽवयवान्तरभूतः स्यात्तथाऽप्यवयवेऽवयवान्तरं वर्तेत नावयवीति । अन्यावयवभावेऽप्यवृत्तेरवयविनो नैकदेशेन वृत्तिरन्यावयवाभावादित्यहेतुः । वृत्तिः कथमिति चेदेकस्यानेकत्राऽऽश्रयाश्रितसंबन्धलक्षणा प्राप्तिः । आश्रयाश्रितभावः कथमिति चेत्, यस्य यतोऽन्यत्राऽऽत्मलाभानुपपत्तिः स आश्रयः । न कारणद्रव्येभ्योऽन्यत्र कार्यद्रव्यमात्मानं लभते विपर्ययस्तु कारणद्रव्येष्विति ।

---

वृ०—सिद्धान्तसूत्रं । अवयवी कात्स्न्येनैकदेशेन वा वर्तत इति प्रश्नो न युक्तः । एकस्मिन्नवयविनि भेदाभावात् । भेदशब्दप्रयोगस्यायुक्तत्वात् । अनेकस्याशेषता हि कात्स्न्यम् । समुदायिनां किंचित्त्वमेकदेशत्वम् । न चैकस्य तत्संभव इति भावः ॥ ९ ॥

वृ०—इतश्च वृत्तिविकल्पो न युक्त इत्याह—अवयवी स्वावयवेषु नैकदेशेन वर्ततेऽवयवान्तराभावादिति यः परेषां हेतुः स न युक्तः । कुतः । अवयवान्तरभावेऽप्यवृत्तेः । अवयवान्तरसत्त्वेऽपि तस्यैव परं वृत्तिरायाति न त्ववयविनोऽपीति । यद्वाऽवृत्तेर्वर्तनाभावस्य कृत्स्नैकदेशविकल्पो न हेतुः । कुतः । अवयवान्तरस्यावयविभिन्नस्यावयवस्य भावेऽपि सत्त्वेऽपि संभवात् । घटत्वा-

---

१ क. ग. ङ. च. °न्तरा भा° । २ ङ. °भूतस्य तथा° ।

नित्येषु कथमिति चेदनित्येषु दर्शनात्सिद्धम् । नित्येषु द्रव्येषु कथमाश्रयाश्रयिभाव इतीति चेदनित्येषु द्रव्यगुणेषु दर्शनादाश्रयाश्रितभावस्य नित्येषु सिद्धिरिति । तस्मादवयव्यभिमानः प्रतिषिध्यते निःश्रेयसकामस्य नावयवी । यथा रूपादिषु मिथ्यासंकल्पो न रूपादय इति ॥ १० ॥

भा०—सर्वाग्रहणमवयव्यसिद्धेरिति प्रत्यवस्थितोऽप्येतदाह—

**केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ ११ ॥**

यथैकैकः केशस्तैमिरिकेण नोपलभ्यते केशसमूहस्तूपलभ्यते तथैकैकोऽणुर्नोपलभ्यतेऽणुसंचयस्तूपलभ्यते । तदिदमणुसमूहविषयं ग्रहणमिति ॥ ११ ॥

**स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १२ ॥**

भा०—यथाविषयमिन्द्रियाणां पटुमन्दभावाद्विषयग्रहणानां पटुमन्दभावो भवति । चक्षुः खलु प्रकृष्यमाणं नाविषयं गन्धं गृह्णाति निकृष्यमाणं च न स्वविषयात्प्रच्यवते । सोऽयं तैमिरिकः कश्चिच्चक्षुर्विषयं केशं न गृह्णाति कश्चिद्गृह्णाति केशसमूहम् । उभयं ह्यतैमिरिकेण चक्षुषा गृह्यते । परमाणवस्त्वतीन्द्रिया इन्द्रियाविषयभूता न केनचिदिन्द्रियेण गृह्यन्ते समुदितास्तु गृह्यन्त इत्यविषये प्रवृत्तिरिन्द्रियस्य प्रसज्येत । न जात्वर्थान्तरमणुभ्यो गृह्यत इति । ते खल्विमे परमाणवः संचिता गृह्यमाणा अतीन्द्रि-

---

दिवत्स्वरूपेणैवावयविनो वृत्तेः संभवात् । वृत्तेः कृत्स्नैकदेशान्यतरनियमो घटत्वादौ व्यभिचार्यप्रयोजकश्चेति भावः ॥ १० ॥

वृ०—तदसंशयः पूर्वहेतुप्रसिद्धत्वादित्यनेन सर्वाग्रहणमवयव्यसिद्धेरिति पूर्वोक्तयुक्तिः स्मारिता । पूर्वपक्षी तां दूषयितुमुपक्रमते—यथा तैमिरिकस्य तिमिरग्रस्तचक्षुषो नैकः केशः प्रत्यक्षः किंतु तत्समूह एवमेकः परमाणुरप्रत्यक्षस्तत्समूहरूपो घटादिः प्रत्यक्षः स्यात् ॥ ११ ॥

वृ०—उत्तरयति—इन्द्रियाणां पाटवे विषयग्रहणस्य पाटवं प्रकर्षः । इन्द्रियाणां मान्द्ये तद्ग्रहणस्य मान्द्यमपकर्षः । न हु पटुतरं चक्षुः शब्दं गृह्णाति,

यत्वं जहति वियुक्ताश्चागृह्यमाणा[1] इन्द्रियविषयत्वं न लभन्त इति। सोऽयं द्रव्यान्तरानुत्पत्तावतिमहान्व्याघात इत्युपपद्यते द्रव्यान्तरं यद्ग्रहणस्य विषय इति।

संचयमात्रं विषय इति चेन्न संचयस्य संयोगभावात्तस्य चातीन्द्रियस्याग्रहणादयुक्तम् । संचयः खल्वनेकस्य संयोगः। स च गृह्यमाणाश्रयो गृह्यते नातीन्द्रियाश्रयः। भवति हीदमनेन संयुक्तमिति। तस्मादयुक्तमेतदिति। गृह्यमाणस्य चेन्द्रियेण विषयस्याऽऽवरणाद्यनुपलब्धिकारणमुपलभ्यते । तस्मान्नेन्द्रियदौर्बल्यादनुपलब्धिरणूनाम् । नेन्द्रियदौर्बल्याच्चक्षुषाऽनुपलब्धिर्गन्धानामिति ॥ १२ ॥

**अवयवावयविप्रसङ्गश्चैवमा * प्रलयात् ॥ १३ ॥**

भा०—यः खल्ववयविनोऽवयवेषु वृत्तिप्रतिषेधादभावः सोऽयमवयवस्यावयवेषु प्रसज्यमानः सर्वप्रलयाय वा कल्पेत निरवयवाद्वा परमाणोर्निवर्तेत। उभयथा चोपलब्धिविषयस्याभावः। तदभावादुपलब्ध्यभावः। उपलब्ध्याश्रयश्चायं वृत्तिप्रतिषेधः। स आश्रयं व्याघ्नन्नात्मघाताय कल्पत इति ॥ १३ ॥

---

तदिदमुक्तम्—स्वविषयानतिक्रमेणेति । फलितार्थमाह—नाविषये प्रवृत्तिरिति। तथा च स्वाविषयं परमाणुं समूहत्वापन्नमपि कथं चक्षुर्गृह्णीयादिति भावः ॥१२॥

वृ०—दोषान्तराभिधानाय सूत्रम्। एवमुक्तप्रकारेण वृत्तिविकल्पदोषोऽवयविन्यवयवे च प्रसक्त आ प्रलयात्। प्रलयोऽभावस्तथा च सर्वाभाव एव स्यान्न कस्यापि ग्रहणमिति साधूक्तं सर्वाग्रहणमवयव्यसिद्धेरिति ॥ १३ ॥

---

* अत्र त्रयः पक्षाः संभवन्ति । तथाहि—योऽयमवयवेष्ववयविवृत्तिविकल्पानुपपत्त्याऽवयविनोऽभावप्रसङ्ग आपाद्यते स किं प्रलयान्निवर्ततेऽथवा परमाणोर्निवर्तेत आहोस्विन्न क्वचिदपि निवर्तेत इति। तत्र प्रथमद्वितीयविकल्पावाश्रित्येदं सूत्रम्। यथैष वृत्तिविकल्पः स्थूले घटादावेवं तदवयवेषु तदवयवेष्विति तदभावात्प्रलये व्यवतिष्ठेत । न च प्रलयः सर्वोपाख्यारहितो दर्शनविषयः संभवतीति दर्शनविषयाभावादनाश्रयो विकल्प आत्मानमेव न लभते। उपलक्षणं चेदमा प्रलयादिति । आ परमाणोरित्यपि द्रष्टव्यम्। परमाणूनामतीन्द्रियत्वेन दर्शनविषयत्वाभावादनाश्रयता विकल्पस्य तदवस्थैवेति बोध्यम्।

---

[1] च. °णा अतीन्द्रियत्वं न जहतीति।

भा०—अथापि—

न प्रलयोऽणुसद्भावात् ॥ १४ ॥

अवयवविभागमाश्रित्य वृत्तिप्रतिषेधादभावः प्रसज्यमानो निरवयवात्परमाणोर्निवर्तते न सर्वप्रलयाय कल्पते । निरवयवत्वं तु खलु परमाणोर्विभागैरल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात् । लोष्टस्य खलु प्रविभज्यमानावयवस्याल्पतरमल्पतममुत्तरमुत्तरं भवति । स चायमल्पतरप्रसङ्गो यस्मान्नाल्पतरमस्ति यः परमोऽल्पस्तत्र निवर्तते । यतश्च नाल्पो योऽस्ति तं परमाणुं प्रचक्ष्महे इति ॥ १४ ॥

* परं वा त्रुटेः ॥ १५ ॥

भा०—अवयवविभागस्यानवस्थानाद्द्रव्याणामसंख्येयत्वात्त्रुटिनिवृत्तिरिति ॥ १५ ॥

इत्यवयवावयविप्रकरणम् ॥ २ ॥

---

वृ०—अस्तु सर्वाभाव इत्यत्राऽऽह–आश्रयनाशाद्यभावेन परमाणोर्नाशाभावेन तत्संभवात् । यद्वा नन्ववयवावयविप्रवाहस्त्वया प्रलयपर्यन्तं स्वीकार्यः । प्रलये च निखिलपृथिव्यादिनाशात्पुनः सर्गो न स्यादित्याशयेन शङ्कते—अवयवेति । समाधत्ते—नेति । न सकलपृथिव्यादिनाशः परमाणुसद्भावादित्यर्थः ॥ १४ ॥

वृ०—परमाणुरेव क इत्यत्राऽऽह—त्रुटेः परं यदतिसूक्ष्मं तत्परमाणुः । वाशब्दोऽवधारणे । अथवा त्रुटेरवयवस्तदवयवो वा परमाणुरिति विकल्पार्थो वाशब्दः । यद्वा त्रुटेः परं सूक्ष्मं परमाणुः । त्रुटावेव वा विश्राम इति विकल्पोऽभिमतः ॥ १५ ॥

इत्यवयवावयविप्रकरणम् ॥ २ ॥

---

* अथानन्त एवायमवयवविभागः कस्मान्न भवतीत्यत आह—परं वा त्रुटेः । अयमर्थः—यदि त्रुटेः परं द्वित्रिपदकेऽवयवविभागो नावतिष्ठते तर्हि अवयवविभागस्यानवस्थानाद्द्रव्याणामसंख्येयत्वात्त्रुटित्वनिवृत्तिः स्यात् । त्रुटिरपि हि सुमेरुणा तुल्यपरिमाणः स्यात् । न खल्वनन्तावयवत्वे कश्चिद्विशेष इति ।

---

१ ङ. °माणुनो निव°

भा०—अथेदानीमानुपलम्भिकः सर्वं नास्तीति मन्यमान आह—

आकाशव्यतिभेदात्तदनुपपत्तिः ॥ १६ ॥

तस्याणोर्निरवयवस्यानुपपत्तिः । कस्मात् । आकाशव्यतिभेदात् । अन्तर्बहिश्चाणुराकाशेन समाविष्टो व्यतिभिन्नो व्यतिभेदात्सावयवः सावयवत्वादनित्य इति ॥ १६ ॥

आकाशासर्वगतत्वं वा ॥ १७ ॥

भा०—अथैतन्नेष्यते परमाणोरन्तर्नास्त्याकाशमित्यसर्वगतत्वं प्रसज्यत इति ॥ १७ ॥

अन्तर्बहिश्च कार्यद्रव्यस्य कार*णान्तरवचनादकार्ये तदभावः ॥ १८ ॥

भा०—अन्तरिति पिहितं कारणान्तरैः कारणमुच्यते बहिरिति च व्यवधायकमव्यवहितं कारणमेवोच्यते । तदेतत्कार्यद्रव्यस्य संभवति नाणोरकार्यत्वात् । अकार्ये हि परमाणावन्तर्बहिरित्यस्याभावः । यत्र चास्य भावोऽणुकार्यं तत्र परमाणुः । यतो हि नाल्पतरमस्ति स परमाणुरिति ॥ १८ ॥

शब्दसंयोगविभवाच्च सर्वगतम्[1] ॥ १९ ॥

भा०—यत्र क्वचिदुत्पन्नाः शब्दा विभवन्त्याकाशे तदाश्रया भवन्ति ।

---

वृ०—अथ विश्वस्य शून्यत्वात्क परमाणुसंभावनेति मतनिराकरणाय निरवयवप्रकरणम् । तत्र पूर्वपक्षसूत्रम् । तस्य निरवयवस्याणोरनुपपत्तिः । कुतः । आकाशव्यतिभेदात् । अन्तर्बहिश्चाऽऽकाशसमावेशात् । तथा च सावयवस्ततश्चानित्य इति ॥ १६ ॥

वृ०—अथ नाऽऽकाशव्यतिभेदस्तर्ह्याकाशमसर्वगतं स्यादित्याह । स्यादिति शेषः ॥ १७ ॥

वृ०—समाधत्ते—अन्तःशब्दो बहिःशब्दश्च कार्यद्रव्यस्यावयवविशेषवाची । न चाकार्येऽवयवसंभव इत्यर्थः । बहिरिति दृष्टान्तार्थम् ॥ १८ ॥

वृ०—आकाशस्यासर्वगतत्वं स्यादित्यत्राऽऽह—शब्दस्य संयोगस्य च यो विभवः । अथवा शब्दजनकसंयोगस्य यो विभवः स सार्वत्रिकत्वं तस्मात्पुनः

---

* कारणान्तरं कारणविशेषस्तस्य वचनमित्यर्थः ।

---

१ क. ख. ग. ब. च. °ति । सर्वसंयोगशब्दवि° ।

मनोभिः परमाणुभिस्तत्कार्यैश्च संयोगा विभवन्त्याकाशे ना-संयुक्तमाकाशेन किंचिन्मूर्तद्रव्यमुपलभ्यते । तस्मान्नासर्वगत-मिति ॥ १९ ॥

*अव्यूहाविष्टम्भविभुत्वानि चाऽऽकाशधर्माः ॥ २० ॥

भा०—संसर्पता प्रतिघातिना द्रव्येण न व्यूहते यथा काष्ठेनोदकम् । कस्मात् । निरवयवत्वात् । सर्पच्च प्रतिघाति द्रव्यं न विष्टभ्नाति नास्य क्रियाहेतुं गुणं प्रतिबध्नाति । कस्मात् । अस्पर्शत्वात् । विपर्यये हि विष्टम्भो दृष्ट इति स भवान्सावयवे स्पर्शवति द्रव्ये दृष्टं धर्मं विपरीते नाऽऽशङ्कितुमर्हति ।

अण्ववयवस्याणुतरत्वप्रसङ्गादणुकार्यप्रतिषेधः । सावयवत्वे चाणोरण्ववयवोऽणुतर इति प्रसज्यते । कस्मात् । कार्यकारणद्र-व्ययोः परिमाणभेददर्शनात् । तस्मादण्ववयवस्याणुतरत्वं यस्तु सावयवोऽणुकार्यं तदिति । तस्मादणुकार्यमिदं प्रतिषिध्यत इति । कारणविभागाच्चाकार्यस्यानित्यत्वं नाऽऽकाशव्यतिभेदात् । लोष्ठ-स्यावयवविभागादनित्यत्वं नाऽऽकाशसमावेशादिति ॥ २० ॥

मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥ २१ ॥

भा०—परिच्छिन्नानां हि स्पर्शवतां संस्थानं त्रिकोणं चतुरस्रं समं

---

सर्वगतमाकाशमिति शेषः । सर्वदेशे शब्दोत्पत्त्या तज्जनकसंयोगानुमानात्सर्वमूर्त-संयोगित्वरूपसर्वगतत्वं तस्य सिद्धम् ॥ १९ ॥

वृ०—आकाशस्य सर्वसंयोगित्वे व्यूहनविष्टम्भौ स्यातामत आह—व्यूहः प्रतिहतस्य परावर्तनम् । विष्टम्भ उत्तरदेशगतिप्रतिबन्धः । आकाशे तयोरभावो निःस्पर्शत्वात् । विभुत्वं सर्वगतत्वम् । यद्येते सूत्रे शून्यतावादिमते न संगच्छेते आकाशादेस्तैरनभ्युपगमात्तथाऽपि त्वन्मत इति पूरयित्वा व्याख्येये ॥ २० ॥

वृ०—पूर्वपक्षी युक्त्यन्तरमाशङ्कते—परमाणोरिति शेषः । हेतुमाह–संस्था-नोत्पत्तेः संस्थानवत्त्वात् । परमाणुर्हि परिमण्डलाकारः । संस्थानवत्त्वे मानं

---

* आकाशं चेत्सर्वगतं ततो मूर्तिमतां द्रव्याणां व्यूहान्तरापादनं च जलौघस्येव नावादिना भवेत् । न चास्ति । तस्मान्न सर्वगतत्वमित्यत आह—अव्यूहेति ।

परिमण्डलमित्युपपद्यते । यत्तत्संस्थानं सोऽवयवसंनिवेशः । परिमण्डलाश्चाणवस्तस्मात्सावयवा इति ॥ २१ ॥

संयोगोपपत्तेश्च* ॥ २२ ॥

भा०—मध्ये सन्नणुः पूर्वापराभ्यामणुभ्यां संयुक्तस्तयोर्व्यवधानं कुरुते । व्यवधानेनानुमीयते पूर्वभागेण पूर्वेणाणुना संयुज्यते परभागेणापरेणाणुना संयुज्यते यौ तौ पूर्वापरौ भागौ तावस्यावयवौ । एवं सर्वतः संयुज्यमानस्य सर्वतो भागा अवयवा इति । यत्तावन्मूर्तिमतां संस्थानोपपत्तेरवयवसद्भाव इति । अत्रोक्तम् । किमुक्तम् । विभागाल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्र निवृत्तेरणववयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति । यत्पुनरेतत्संयोगोपपत्तेश्चेति स्पर्शवत्त्वाद्व्यवधानमाश्रयस्य चाव्याप्त्या भागभक्तिः । उक्तं चात्र स्पर्शवानणुः स्पर्शवतोरण्वोः प्रतिघाताद्व्यवधायको न सावयवत्वात् । स्पर्शवत्त्वाच्च व्यवधाने सत्यणुसंयोगो नाऽऽश्रयं व्याप्नोतीति भागभक्तिर्भवति भागवानिवायमिति । उक्तं चात्र विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्तदवयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति ॥२२॥

---

भङ्ग्या वदति—मूर्तिमतामिति । मूर्तत्वात्संस्थानवत्त्वमित्यर्थः । चः पूर्वोक्तहेतुं समुच्चिनोति । मूर्तत्वस्य हेतुत्वसमुच्चयार्थो वा चकारः ॥ २१ ॥

वृ०—युक्त्यन्तरमाह—अवयवसद्भाव इत्यनुवर्तते । संयोगवत्त्वादिति हेत्वर्थः । संयोगवत्त्वात्कथं सावयवत्वमिति चेदित्थम् । संयोगस्याव्याप्यवृत्तित्वादव्याप्यवृत्तित्वं चावच्छेदकभेदं विना नोपपद्यतेऽवच्छेदकश्चावयव इति । ननु परमाण्ववयवेऽप्ययं दोषः स्यात्तथा चानवस्थितपरम्पराप्रसङ्ग इति चेत्त्यज तर्हि परमाणुव्यसनं स्वीकुरु शून्यतावादम्, निरवयवमाकाशादिकमपि नास्तीति भावः ॥ २२ ॥

---

* ननु संस्थानसंयोगशब्दयोः पर्यायवचनत्वात्पूर्वसूत्रे संस्थानोपपत्तेरित्युक्त्यैव संयोगोपपत्तेर्गतार्थत्वादेतत्सूत्रं व्यर्थमिति चेत् । अत्रोच्यते—संस्थानं नाम प्रचयाख्यः संयोगो घटादिवृत्तिर्घटत्वादिजातिव्यञ्जको हेतुरित्याशयेनाऽऽह—संयोगोपपत्तेश्चेति । अत्र संयोगस्तु अप्राप्तिपूर्वकप्राप्तिरूप एव । अतो न पौनरुक्त्यमिति बोध्यम् ।

भा०—मूर्तिमतां च संस्थानोपपत्तेः संयोगोपपत्तेश्च परमाणूनां सावयवत्वमिति हेत्वोः—

अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ २३ ॥

यावन्मूर्तिमद्यावच्च संयुज्यते तत्सर्वं सावयवमित्यनवस्थाकारिणाविमौ हेतू सा चानवस्था नोपपद्यते । सत्यामनवस्थायां सत्यौ हेतू स्याताम् । तस्मादप्रतिषेधोऽयं निरवयवत्वस्येति । विभागस्य च विभज्यमानहानेर्नोपपद्यते । तस्मात्प्रलयान्तता नोपपद्यत इति । अनवस्थायां च प्रत्यधिकरणद्रव्यावयवानामानन्त्यात्परिमाणभेदानां गुरुत्वस्य चाग्रहणं समानपरिमाणत्वं चावयवावयविनोः परिमाणवयवविभागादूर्ध्वमिति ॥ २३ ॥

इति निरवयवप्रकरणम् ॥ ३ ॥

---

भा०—यदिदं भवान्बुद्धीराश्रित्य बुद्धिविषयाः सन्तीति मन्यते मिथ्याबुद्धय एताः । यदि हि तत्त्वबुद्धयः स्युर्बुद्ध्या विवेचने क्रियमाणे याथात्म्यं बुद्धिविषयाणामुपलभ्येत—

बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत्तदनुपलब्धिः ॥ २४ ॥

यथाऽयं तन्तुरयं तन्तुरिति प्रत्येकं तन्तुषु विविच्यमानेषु

---

वृ०—समाधत्ते—पूर्वोक्तयुक्त्या परमाणोर्निरवयवत्वप्रतिषेधो न युक्तः । कुतः । अनवस्थाकारित्वात् । प्रामाणिकीयमनवस्था स्यादत आह—अनवस्थानुपपत्तेश्चेति । सर्वेषामनवस्थितावयवत्वे मेरुसर्षपयोस्तुल्यपरिमाणत्वापत्तिः । इत्थं च तत्संयोगावच्छेदका दिग्विभागा न वा शून्यतायुक्ता निष्प्रमाणत्वात् । प्रमाणसत्त्वे शून्यत्वविरोधात् । निष्प्रमाणकशून्यताभ्युपगमे किमपराद्धं पूर्णतयेति दिक् ॥ २३ ॥

इति निरवयवप्रकरणम् ॥ ३ ॥

---

वृ०—ननु बाह्यार्थाभावात्कुतोऽवयवावयविव्यवस्थेति मतमपाकर्तुं बाह्यार्थभ-

नार्थान्तरं किंचिदुपलभ्यते यत्पटबुद्धेर्विषयः स्यात् । याथात्म्यानुपलब्धेरसति विषये पटबुद्धिर्भवन्ती मिथ्याबुद्धिर्भवति एवं सर्वत्रेति ॥ २४ ॥

**व्याहतत्वादहेतुः ॥ २५ ॥**

भा०—यदि बुद्ध्या विवेचनं भावानाम्, सर्वभावानां याथात्म्यानुपलब्धिः । अथ सर्वभावानां याथात्म्यानुपलब्धिः, न बुद्ध्या विवेचनं भावानाम् । याथात्म्यानुपलब्धिश्चेति व्याहन्यते । तदुक्तम्—'अवयवावयविप्रसङ्गश्चैवमा प्रलयात्' ( ४ । २ । १३ ) इति ॥ २५ ॥

*** तदाश्रयत्वादपृथग्ग्रहणम् ॥ २६ ॥**

भा०—कार्यद्रव्यं कारणद्रव्याश्रितं तत्कारणेभ्यः पृथङ्नोपलभ्यते

---

ङ्गनिराकरणमारभते । प्रमेयत्वं ज्ञानत्वव्याप्यं न वेति संशयस्तत्र पूर्वपक्षसूत्रम् । तुः प्रकरणविच्छेदार्थः । भावानां बुद्ध्या विवेचनादभेदोल्लेखाद्याथात्म्यस्य ज्ञानभेदलक्षणस्यानुपलब्धिरनुपपत्तिः घट इति ज्ञानं मम जातमिति ह्यनुभूयते । तत्र घट इति ज्ञानमित्यनेन ज्ञानघटयोरभेद उल्लिख्यते । ततो न ज्ञानातिरिक्तो विषयः । यथा पटे विविच्यमाने तन्तूनामेवापकर्षणादतिरिक्तं न वस्तु एवं तन्तुरपि नांशुभ्योऽतिरिक्त इति । घटत्वादिस्तु ज्ञानस्यैवाऽऽकारविशेष इति भावः॥२४॥

वृ०—समाधत्ते उक्तो हेतुर्न युक्तो व्याहतत्वात् । नहि बुद्ध्या विवेचने पटस्य तन्तुरूपता सिध्यति । तन्तुतः पट इति हि प्रतीयते न तु तन्तुः पट इति । एवं पटेन प्रावरणं न तु तन्तुभिः । किं च तन्तुपटविवेचनादेव बाह्यार्थसिद्धिः । ज्ञानेन तु स्वस्मिन्पटाभेदो नोल्लिख्यते स्वाविषयकत्वात् । अनुव्यवसायेन तु पटविषयकत्वं व्यवसाये समुल्लिख्यते ॥ २५ ॥

वृ०—ननु तन्तुपटयोर्भेदे पार्थक्येन ग्रहणं स्यादित्यत्राऽऽह—पृथग्ग्रहणं

---

* तन्तूनामनेकत्वेन ज्ञानं पटस्य तु एकत्वेनेति पृथग्ग्रहणमस्त्येव । पटस्य तन्तवस्तन्तूनां चांशव इत्याधारभेदोऽपि । पटस्यान्यत्रादर्शने तु तदाश्रितत्वं तन्त्रमिति न तदभेदगमकमित्यर्थः ।

---

१ क. ग. घ 'वतीति मि' ।

विपर्यये पृथग्ग्रहणात् । यत्राऽऽश्रयाश्रितभावो नास्ति तत्र पृथ-ग्ग्रहणमिति बुद्ध्या विवेचनात्तु भावानां पृथग्ग्रहणमतीन्द्रियेष्वणुषु । यदिन्द्रियेण गृह्यते तदेतया बुद्ध्या विविच्यमानमन्यदिति ॥ २६ ॥

प्रमाणतश्चार्थप्रतिपत्तेः ॥ २७ ॥

भा०—बुद्ध्या विवेचनाद्भावानां याथात्म्योपलब्धिः । यदस्ति यथा च यन्नास्ति यथा च तत्सर्वं प्रमाणत उपलब्ध्या सिध्यति या च प्रमाणत उपलब्धिस्तद्बुद्ध्या विवेचनं भावानां तेन सर्वशास्त्राणि सर्वकर्माणि सर्वे च शरीरिणां व्यवहारा व्याप्ताः । परीक्षमाणो हि बुद्ध्याऽध्यवस्यति—इदमस्तीदं नास्तीति तत्र न सर्वभावानुपपत्तिः ॥ २७ ॥

प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ २८ ॥

भा०—एवं च सति सर्वं नास्तीति नोपपद्यते । कस्मात् । प्रमाणानुपपत्त्युपपत्तिभ्याम् । यदि सर्वं नास्तीति प्रमाणमुपपद्यते सर्वं नास्तीत्येतद्व्याहन्यते । अथ प्रमाणं नोपपद्यते सर्वं नास्ती-

---

यदि तन्तुविषयकप्रत्यक्षविषयत्वं पटस्याऽऽपाद्यते तत्रोत्तरं तदाश्रयादिति । पटो हि तन्त्वाश्रितस्तेन सामग्रीसत्त्वात्पटप्रत्यक्षस्य तन्तुविषयकत्वम् । यदि च भेदप्रत्यय आपाद्यते तदा भवत्येवेति भावः ॥ २६ ॥

वृ०—ननु ज्ञानस्योभयवादिसिद्धत्वात्तन्मात्रपदार्थकल्पने लाघवात्तदतिरिक्तपदार्थाभावसिद्धिः स्यादित्यत आह—पूर्वोक्तहेतुं समुच्चिनोति चकारः । अर्थस्य घटादेःप्रतिपत्तेः प्रमाणाधीनत्वात् । तथा च प्रामाणिकेऽर्थे गौरवं न बाधकमिति भावः । अन्यथा ज्ञानमपि न सिध्येद्गौरवादिति शून्यतापत्तिः ॥ २७ ॥

वृ०—न वा बाह्यार्थाभावसाधनं संभवतीत्याह—व्याघाताच्च बाह्याभाव इति शेषः । बाह्यं नास्तीत्यत्र यदि प्रमाणमस्ति तदा प्रमाणस्य बाह्यस्य सत्त्वाच्च बाह्याभावः । अथ नास्ति तदा निष्प्रमाणकत्वाच्च तत्सिद्धिरित्यर्थः ।

---

१ ग °पत्तिः । तु° ।

स्वस्य कथं सिद्धिः । अथ प्रमाणमन्तरेण सिद्धिः सर्वमस्ती-त्यस्य कथं न सिद्धिः ॥ २८ ॥

स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ २९ ॥

भा०—यथा स्वप्ने न विषयाः सन्त्यथ चाभिमानो भवति एवं न प्रमाणानि प्रमेयाणि च सन्ति अथ च प्रमाणप्रमेयाभिमानो भवति ॥ २९ ॥

मायागन्धर्वनगरमृगतृष्णिकावद्वा ॥ ३० ॥

॥ ३० ॥

हेत्वभावादसिद्धिः ॥ ३१ ॥

भा०—स्वप्नान्ते विषयाभिमानवत्प्रमाणप्रमेयाभिमानो न पुनर्जागरि-तान्ते विषयोपलब्धिवदित्यत्र हेतुर्नास्ति हेत्वभावा*दसिद्धिः । स्वप्नान्ते चासन्तो विषया उपलभ्यन्त इत्यत्रापि हेत्वभावः ।

प्रतिबोधेऽनुपलम्भादिति चेत्प्रतिबोधविषयोपलम्भादप्रतिषेधः ।

यदि प्रतिबोधेऽनुपलम्भात्स्वप्ने विषया न सन्तीति तर्हि य इमे प्रति-बुद्धेन विषया उपलभ्यन्त उपलम्भात्सन्तीति विपर्यये हि हेतुसाम-

---

किं च घटादौ यदि प्रमाणमस्ति तदा तत एव बाह्यार्थसिद्धिः । अथाप्रमाण्यं तदा कथं घट इति ज्ञानस्य घटाकारत्वं मन्यसे ज्ञानस्यैवानुपपत्तेरिति ॥ २८ ॥

वृ०—ननु प्रमाणप्रमेयव्यवहारो न पारमार्थिकः परं तु विज्ञानानि तत्तदा-काराणि वासनापरिपाकवशादेव स्वप्नप्रत्ययवदैन्द्रजालिकप्रतीतिवच्चाऽऽविर्भ-वन्तीत्याशयेन शङ्कते सूत्राभ्याम् । स्पष्टम् ॥ २९ ॥ ३० ॥

वृ०—समाधत्ते—बाह्याभावस्यासिद्धिर्हेत्वभावात्प्रमाणाभावात् । अथ वा हेतोश्चक्षुरादेरनभ्युपगमे घटोऽयमित्यादिज्ञानानामसिद्धिरित्यर्थः । न च वासना-

---

* यद्यप्यन्तशब्दोऽवयववचनः प्रसिद्धस्तथाऽप्यत्राऽऽश्रितत्वमात्रेणावस्थायां प्रयुक्त-त्वेन स्वप्नावस्थायां जागरितावस्थायामित्यर्थः । एतदुक्तं भवति—स्वप्नविज्ञानस्यायाथार्थ्य-मिच्छता बाधकमन्तरेण तदनुपपत्तेर्जाग्रत्प्रत्ययोऽस्य बाधको वक्तव्यः । न चासावसमी-चीनस्तं बाधितुमुत्सहत इति समीचीनत्वं जाग्रत्प्रत्ययानामभ्युपगन्तव्यम् । तथा च जाग-रितान्ते विषयोपलब्धिवदित्युपपन्नमिति ।

---

१ ग. °धतत्त्वज्ञाने सति वि° ।

र्थ्यम् । उपलम्भाभावे सत्यनुपलम्भादभावः सिध्यति । उभय-था+स्वभावे नानुपलम्भस्य सामर्थ्यमस्ति यथा प्रदीपस्याभावाद्रू-पस्यादर्शनमिति । तत्र भावेनाभावः समर्थ्यत इति ।

स्वप्नान्तविकल्पे च हेतुवचनम् । स्वप्नविषयाभिमानवदिति ब्रुवता स्वप्नान्तविकल्पे हेतुर्वाच्यः । कश्चित्स्वप्नो भयोपसंहितः । कश्चित्प्रमोदोपसंहितः । कश्चिदुभयविपरीतः । कदाचित्स्वप्नमेव न पश्यतीति ॥ ३१ ॥

---

प्रत्यासत्त्यादिति वाच्यम् । वासनाया अतिरिक्तत्वे वाह्योपगमप्रसङ्गात् । वास-नायाः संतन्यमानतया चाक्षुषादेरपि संतानापत्तिरिति दिक् ॥ ३१ ॥

---

* अनुपलब्धिप्रमाणादभावो ज्ञायत इत्यर्थः । तथाहि—ज्ञानकरणाजन्याभावानु-भवासाधारणकारणमनुपलब्धिरूपं प्रमाणम् । अस्यार्थः—ज्ञानरूपं यत्करणं तदजन्यो योऽभावानुभवस्तदसाधारणं यत्कारणं तदनुपलब्धिरूपं प्रमाणमिति । एवं च घटादि-ज्ञानाभावो घटाद्यभावज्ञाने कारणमिति फलति । अभावज्ञानमनुमानादिनाऽपि भवति । तथा चानुमानादिजन्योऽत एवातीन्द्रियो योऽभावानुभवस्तद्धेतावनुमानादावतिव्याप्तिवा-रणायाजन्यान्तं विशेषणम् । अदृष्टादौ साधारणकारणेऽतिव्याप्तिवारणायासाधारणेति । अभावस्मृत्यसाधारणहेतौ संस्कारेऽतिव्याप्तिवारणायानुभवेति । न च यत्राभावानुमिति-स्तत्राप्यनुपलब्ध्यैवाभावो गृह्यतां विशेषाभावादिति वाच्यम् । धर्माधर्माद्यनुपलब्धिस-त्त्वेऽपि तदभावानिश्चयेन योग्यानुपलब्धेरेवाभावग्राहकत्वात् । ननु केयं योग्यानुपलब्धिः किं योग्यस्य प्रतियोगिनोऽनुपलब्धिरुत योग्याधिकरणे प्रतियोग्यनुपलब्धिः । नाऽऽद्यः । स्तम्भे पिशाचादिभेदस्याप्रत्यक्षतापत्तेः । दृश्यते तु स्तम्भः पिशाचो नेति प्रत्यक्षम् । नान्त्यः । आत्मनि धर्माधर्माद्यभावस्यापि प्रत्यक्षतापत्तेरिति चेन्न । योग्या चासावनुपल-ब्धिश्चेति कर्मधारयाश्रयणात् । अनुपलब्धेर्योग्यता च तर्कितप्रतियोगिसत्त्वप्रसञ्जि-तप्रतियोगिकत्वम् । अस्यार्थः—तर्कितं यत्प्रतियोगिसत्त्वं तेन प्रसञ्जितो नामाऽऽपादितः प्रतियोगी यस्या अनुपलब्धेस्तत्त्वमिति । अयं भावः—स्फीतालो-कवति भूतले यदि घटः स्यात्तदा घटोपलम्भः स्यादित्यापादनसंभवात्तादृशभूतले घटाभावोऽनुपलब्धिगम्यः । अन्धकारे तु तादृशापादनासंभवान्नानुपलब्धिगम्यता । अत एव स्तम्भे तादात्म्येन पिशाचसत्त्वे स्तम्भवत्प्रत्यक्षतापत्त्या तदभावोऽनुपलब्धिगम्यः । आत्मनि धर्माधर्मादिसत्त्वेऽपि तस्यातीन्द्रियतया निरुक्तोपलम्भापादनासंभवान्न धर्माधर्मा-द्यभावस्यानुपलब्धिगम्यत्वमिति । + स्वप्नजागरितावस्थयोरुभयोरपि विषयाभावाभ्युपगमेऽ-नुपलब्धेरभावग्राहकत्वमपि न सिध्येद्योग्यताया अभावादिति भावः ।

भा०—निमित्तवतस्तु स्वप्नविषयाभिमानस्य निमित्तविकल्पाद्विक*-ल्पोपपत्तिः—

स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः ॥ ३२ ॥

पूर्वोपलब्धविषयः। यथा स्मृतिश्च संकल्पश्च पूर्वोपलब्धविषयौ न तस्य प्रत्याख्यानाय कल्प्येते तथा स्वप्ने विषयग्रहणं पूर्वोपलब्धविषयं न तस्य प्रत्याख्यानाय+ कल्पत इति। एवं दृष्टविषयश्च स्वप्नान्तो जागरितान्तेन, यः सुप्तः स्वप्नं पश्यति स एव जाग्रत्स्वप्नप्रदर्शनानि प्रतिसंधत्त इदमद्राक्षमिति।

तत्र जाग्रद्बुद्धिवृत्तिवशात्स्वप्नविषयाभिमानो मिथ्येति व्यवसायः। सति च प्रतिसंधाने या जाग्रतो बुद्धिवृत्तिस्तद्वशादयं व्यवसायः स्वप्नविषयाभिमानो मिथ्येति।

उभयाविशेषे तु साधनानर्थक्यम्। यस्य स्वप्नान्तजागरितान्तयोरविशेषस्तस्य स्वप्नविषयाभिमानवदिति साधनमनर्थकं तदाश्रयप्रत्याख्यानात्।

अतस्मिंस्तदिति च व्यवसायः प्रधानाश्रयः। अपुरुषे स्थाणौ पुरुष इति व्यवसायः स प्रधानाश्रयः। न खलु पुरुषेऽनुपलब्धे पुरुष इत्यपुरुषे व्यवसायो भवति। एवं स्वप्नविषयस्य व्यवसायो हस्तिनमद्राक्षं पर्वतमद्राक्षमिति प्रधानाश्रयो भवितुमर्हति ॥ ३२ ॥

---

वृ०—नन्वसद्विषया अहेतुका अपि स्वाप्नप्रत्यया इव भावनाप्रत्यया इव परेऽपि प्रत्यया भवेयुरित्यत आह। पूर्वोपलब्धविषय इति शेषः। संकल्प उपनीतभानम्। यथा स्मृत्यादिः पूर्वोपलब्धविषयकस्तथा स्वाप्नप्रत्ययोऽपीति न निर्विषयकः। न च स्वप्ने स्वमपि खादति निजशिरःखण्डनमपि पश्यति न त्विदं पूर्वोपलब्धमिति वाच्यम्। स्वस्य खादनस्य च निजशिरसः खण्डनस्य च पूर्वोपलब्धत्वात्संसर्गभानस्य च भ्रान्तत्वात्। न वाऽहेतुकत्वम्। स्मृत्यादिदृष्टान्तेन संस्कारस्य स्मृतेश्च स्मृतौ विशिष्टबुद्धौ च हेतुत्वस्याभिमतत्वात्। तत्र भ्रमे दोषः कालविशेषोऽदृष्टविशेषो धातुक्षोभो वेत्यन्यदेतत् ॥ ३२ ॥

---

* स्वप्नवैचित्र्यस्य कादाचित्कत्वेन सहेतुकत्वान्निमित्तवैचित्र्यस्यावश्याभ्युपगन्तव्यत्वेन तेनैव विषयसत्तासिद्धेः सर्वशून्यता बाधितेति भावः। + पूर्वोपलब्धेरुपजीव्यत्वेन तद्बाधकत्वानुपपत्तेरिति भावः।

भा०—एवं च सति—

मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात्स्वप्नवि-
षयाभिमानप्रणाशवत्प्र*तिबोधे ॥ ३३ ॥

स्थाणौ पुरुषोऽयमिति व्यवसायो मिथ्योपलब्धिरतस्मिंस्तदिति ज्ञानम् । स्थाणौ स्थाणुरिति व्यवसायस्तत्त्वज्ञानम् । तत्त्वज्ञानेन च मिथ्योपलब्धिर्निवर्त्यते नार्थः स्थाणुपुरुषसामान्यलक्षणः । यथा प्रतिबोधे या ज्ञानवृत्तिस्तया स्वप्नविषयाभिमानो निवर्त्यते नार्थो विषयसामान्यलक्षणस्तथा मायागन्धर्वनगरमृगतृष्णिकाणामपि या बुद्धयोऽतस्मिंस्तदिति व्यवसायास्तत्राप्यनेनैव कल्पेन मिथ्योपलब्धिविनाशस्तत्त्वज्ञानान्नार्थप्रतिषेध इति । उपादानवच्च मायादिषु मिथ्याज्ञानम् । प्रज्ञापनीयसरूपं च द्रव्यमुपादाय साधनवान्परस्य मिथ्याध्यवसायं करोति सा माया । नीहारप्रभृतीनां नगरसरूपसंनिवेशे दूरान्नगरबुद्धिरुत्पद्यते विपर्यये तदभावात् । सूर्यमरीचिषु भौमेनोष्मणा संसृष्टेषु स्पन्दमानेषूदकबुद्धिर्भवति सामान्यग्रहणादन्तिकस्थस्य, विपर्यये तदभावात् । क्वचित्कदाचित्कस्यचिच्च भावान्नानिमित्तं मिथ्याज्ञानम् । दृष्टं च बुद्धिद्वैतं मायाप्रयोक्तुः परस्य च । दूरान्तिकस्थयोर्गन्धर्वनगरमृगतृष्णिकासु । सुप्तप्रतिबुद्धयोश्च स्वप्नविषये । तदेतत्सर्वस्याभावे निरुपाख्यतायां निरात्मकत्वे नोपपद्यत इति ॥ ३३ ॥

बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३४ ॥

भा०—मिथ्याबुद्धेश्चार्थवदप्रतिषेधः । कस्मात् । निमित्तोपलम्भात्स-

---

वृ०—ननु भ्रमस्यापि सद्विषयकत्वे तत्प्रतिरोधः कथं स्यादित्याशङ्क्याऽऽह—मिथ्योपलब्धेर्मायागन्धर्वनगरादिज्ञानस्य तत्त्वज्ञानादनारोपितवस्तुप्रत्ययाद्विनाशः प्रतिरोधो भ्रमत्वज्ञानं वा । एवं स्वप्नप्रत्ययस्यापि दर्पणमुखविभ्रमस्य तत्त्वज्ञानेनाप्रतिरोधेऽपि भ्रमत्वज्ञानं भवत्येवेति भावः ॥ ३३ ॥

वृ०—माध्यमिकस्तु बाह्यासत्त्वं प्रसाध्य तद्दृष्टान्तेन बुद्धेरप्यसत्त्वं साध-

---

* मिथ्याज्ञानस्य प्रधानाश्रयत्वे सति मिथ्योपलब्धेर्विनाशो बाधकात्तत्त्वज्ञानाद्भवति । यथा प्रतिबोधे सति स्वप्नविषयाभिमानप्रणाशस्तद्वत् । न त्वर्थस्य सामान्यस्यापीत्यर्थः ।

द्भावोपलम्भाच्च । उपलभ्यते मिथ्याबुद्धिनिमित्तम् । मिथ्याबुद्धिश्च प्रत्यात्ममुत्पन्ना गृह्यते संवेद्यत्वात् । तस्मान्मिथ्याबुद्धिरप्यस्तीति ॥ ३४ ॥

तत्त्वप्रधानभेदाच्च मिथ्याबुद्धे-
र्द्वैविध्योपपत्तिः ॥ ३५ ॥

भा०—तत्त्वं स्थाणुरिति प्रधानं पुरुष इति । तत्त्वप्रधानयोरलोपाद्भेदात्स्थाणौ पुरुष इति मिथ्याबुद्धिरुत्पद्यते सामान्यग्रहणात् । एवं पताकायां बलाकेति लोष्टे कपोत इति, न तु समाने विषये मिथ्याबुद्धीनां समावेशः सामान्यग्रहणव्यवस्थानात् । यस्य तु निरात्मकं निरुपाख्यं सर्वं तस्य समावेशः प्रसज्यते । गन्धादौ च प्रमेये गन्धादिबुद्धयो मिथ्याभिमतास्तत्त्वप्रधानयोः सामान्यग्रहणस्य चाभावात्तत्त्वबुद्धय एव भवन्ति । तस्मादयुक्तमेतत्प्रमाणप्रमेयबुद्धयो मिथ्येति ॥ ३५ ॥

इति बाह्यार्थभङ्गनिराकरणप्रकरणम् ॥ ४ ॥

---

यति तं प्रत्याह—एवं बाह्यवद्बुद्धेरपि न प्रतिषेधः, निमित्तसद्भावोपलम्भात् । सहेतुकस्य प्रमितत्वात् । न ह्यलीकं सहेतुकं संभवति । अहेतुकत्वे च कादाचित्कत्वव्याकोपः । केचित्तु भ्रमस्य सद्विषयकत्वे प्रमात्वं स्यादित्यत्राऽऽह-बुद्धेरिति । एवं प्रमात्वं निमित्तस्य प्रकारस्य सद्भावः सत्त्वं यत्र । तथा च शुक्तिरजतयोः सत्यत्वेऽपि शुक्तौ रजतत्ववैशिष्ट्याभावान्न तद्बुद्धेः प्रमात्वमिति भाव इत्याहुः । अत्र चोपलम्भपदमनतिप्रयोजनकम् ॥ ३४ ॥

वृ०—न वा मिथ्याबुद्धिदृष्टान्तेन ज्ञानमात्रस्यासन्मात्रविषयकत्वं सद्विषयकत्वाभावो वा संभवतीत्याह—तत्त्वं धर्मिस्वरूपप्रधानमारोप्यम् । तथा च भ्रमे धर्म्यंशे प्रमात्वमारोप्य रजताद्यंशे च भ्रमत्वमिति दृष्टान्तासिद्धिरिति भावः । केचित्तु प्रमात्वाप्रमात्वयोर्विरोधान्नैकत्र समावेश इत्यत आह—तत्त्वेति । तथा च विषयभेदान्न विरोध इति भाव इत्याहुः ॥ ३५ ॥

इति बाह्यार्थभङ्गनिराकरणप्रकरणम् ॥ ४ ॥

भा०—दोषनिमित्तानां तत्त्वज्ञानादहंकारनिवृत्तिरित्युक्तम् । अथ कथं तत्त्वज्ञानमुत्पद्यत इति—

समाधिविशेषाभ्यासात् ॥ ३६ ॥

स तु प्रत्याहृतस्येन्द्रियेभ्यो मनसो धारकेण प्रयत्नेन धार्यमाणस्याऽऽत्मना संयोगस्तत्त्वबुभुत्साविशिष्टः । सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते तदभ्यासवशात्तत्त्वबुद्धिरुत्पद्यते ॥ ३६ ॥

भा०—यदुक्तं सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्त इत्येतत्—

नार्थ*विशेषप्राबल्यात् ॥ ३७ ॥

भा०—अनिच्छतोऽपि बुद्ध्युत्पत्तेर्नैतद्युक्तम् । कस्मात् । अर्थविशेषप्राबल्यात् । अबुभुत्समानस्यापि बुद्ध्युत्पत्तिर्दृष्टा । यथा स्तनयित्नुशब्दप्रभृतिषु । तत्र समाधिविशेषो नोपपद्यते ॥ ३७ ॥

क्षुदादिभिः प्रवर्तनाच्च ॥ ३८ ॥

भा०—क्षुत्पिपासाभ्यां शीतोष्णाभ्यां व्याधिभिश्चानिच्छतोऽपि बुद्धयः प्रवर्तन्ते । तस्मादैकाग्र्यानुपपत्तिरिति ॥ ३८ ॥

---

वृ०—ननु शास्त्राधीनं तत्त्वज्ञानं क्षणिकमतस्तन्नाशे मिथ्याज्ञानं स्यादेव । नहि तादृशं किंचिदेव ज्ञानं दृढभूमिसवासनमिथ्याज्ञानसमुन्मूलनक्षममतस्तत्त्वज्ञानविवृद्धिप्रकरणमारभते । तत्त्वज्ञानविवृद्धिस्तत्त्वज्ञानवासना । ततश्चाऽऽत्यन्तिको मिथ्याज्ञाननाशः । तत्र तत्त्वज्ञानविवृद्धौ हेतुमाह—समाधिश्चित्तस्याभिमतविषयनिष्ठत्वम् । तस्य प्रकर्षो विषयान्तरानभिषङ्गलक्षणस्तस्याभ्यासात्पौनःपुन्यात्तत्त्वज्ञानविवृद्धिः । तदेव च निदिध्यासनमामनन्ति । तत्त्वज्ञानविवृद्ध्या च मिथ्याज्ञानवासनातिरोभावः । तथा च योगसूत्रम्—'तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी' ( १।५० ) । प्रतिबन्धः कार्याक्षमतासंपादनं विनाशो वा ॥ ३६ ॥

वृ०—ननु रागादिभिः प्रतिबन्धात्समाधिरेव नोदेतीत्याक्षिपति सूत्राभ्याम्—अर्थविशेषस्य तनयवनितादिरागस्य प्राबल्याच्चिरकालानुबन्धात्तदनुसंधानमवर्जनीयमिति तदभावः । स्याच्च घनगर्जितादिज्ञानेन प्रतिबन्धः । एवं क्षुत्पिपासादिभिः प्रतिबद्धस्तदुपशमाय प्रयतेत ॥ ३७ ॥ ३८ ॥

---

* इन्द्रियविषयैरुपहतमनसो न धारणा । तथा च तदभ्यासाभावान्न तत्त्वसाक्षात्कार इति सूत्रार्थः ।

भा०—अस्त्वेतत्समाधिव्युत्थाननिमित्तं समाधिप्रत्यनीकं च सति त्वेतस्मिन्—

**पूर्वकृतफला*नुबन्धात्तदुत्पत्तिः ॥ ३९ ॥**

पूर्वकृतो जन्मान्तरोपचितस्तत्त्वज्ञानहेतुर्धर्म+प्रविवेकः फलानुबन्धो योगाभ्याससामर्थ्यम् । निष्फले हि अभ्यासे नाभ्यासमाद्रियेरन् । दृष्टं हि लौकिकेषु कर्मस्वभ्याससामर्थ्यम् ॥ ३९ ॥

भा०—प्रत्यनीकपरिहारार्थं च—

**अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ४० ॥**

योगाभ्यासजनितो धर्मो जन्मान्तरेऽप्यनुवर्तते । प्रचयकाष्ठागते तत्त्वज्ञानहेतौ धर्मे प्रकृष्टायां समाधिभावनायां तत्त्वज्ञानमुत्पद्यत इति । दृष्टश्च समाधिनाऽर्थविशेषप्राबल्याभिभवो नाहमेतदश्रौषं नाहमेतदज्ञासिषमन्यत्र मे मनोऽभूदित्याह लौकिक इति ॥ ४० ॥

भा०—यद्यर्थविशेषप्राबल्यादनिच्छतोऽपि बुद्ध्युत्पत्तिरनुज्ञायते—

**अपवर्गेऽप्येवं प्रसङ्गः ॥ ४१ ॥**

मुक्तस्यापि बाह्यार्थसामर्थ्याद्बुद्धय उत्पद्येरन्निति ॥ ४१ ॥

---

वृ०—परिहरति—जन्मान्तरकृतसमाधिजन्यसंस्कारवशात्समाधिसिद्धिरित्यर्थः । अत एवानेकजन्मसंसिद्ध इत्यादि संगच्छते । वयं तु पूर्वकृतस्य प्रथमतः कृतस्येश्वराराधनस्य फलं धर्मविशेषस्तत्संबन्धादित्यर्थः । तथा च योगसूत्रम्—'समाधिसिद्धिरीश्वरप्रणिधानात्' (२।४५) सूत्रान्तरं च तत्रैव 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' ( १ । २९ ) तत ईश्वरप्रणिधानाद्विषयप्रातिकूल्येन चित्तावस्थानं प्रत्यूहाभावश्चेत्यर्थः ॥ ३९ ॥

वृ०—योगाभ्यासस्थानमुपदिशति—तत्र स्थिरचित्तता स्यादिति भावः । इदं न सूत्रं भाष्यमिति केचित् ॥ ४० ॥

वृ०—तटस्थः शङ्कते—एवं प्रसङ्गोऽर्थविशेषप्राबल्याद्विषयावभासप्रसङ्गः ॥ ४१ ॥

---

* पूर्वकृतः समाधिस्तस्य फलं संस्कारस्तस्यानुबन्धः स्थेमा तस्मादिति सूत्रार्थः ।
\+ प्रविविच्यते विशिष्यत इति प्रविवेकः । धर्मश्चासौ प्रविवेकश्चेति धर्मप्रविवेकः ।

न निष्पन्नावश्यंभावित्वात् ॥ ४२ ॥

भा०—कर्मवशान्निष्पन्ने शरीरे चेष्टेन्द्रियार्थाश्रये निमित्तभावादवश्यंभावी बुद्धीनामुत्पादः । न च प्रबलोऽपि सन्बाह्योऽर्थ आत्मनो बुद्ध्युत्पादे समर्थो भवति । तस्येन्द्रियेण संयोगाद्बुद्ध्युत्पादे सामर्थ्यं दृष्टमिति ॥ ४२ ॥

तदभावश्चापवर्गे ॥ ४३ ॥

भा०—तस्य बुद्धिनिमित्ताश्रयस्य शरीरेन्द्रियस्य धर्माधर्माभावादभावोऽपवर्गे । तत्र यदुक्तमपवर्गेऽप्येवं प्रसङ्ग इति तदयुक्तम् । तस्मात्सर्वदुःखविमोक्षोऽपवर्गः । यस्मात्सर्वदुःखबीजं सर्वदुःखायतनं चापवर्गे विच्छिद्यते तस्मात्सर्वेण दुःखेन विमुक्तिरपवर्गो न निर्बीजं निरायतनं च दुःखमुत्पद्यत इति ॥ ४३ ॥

तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ४४ ॥

भा०—तस्यापवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः । यमः समानमाश्रमिणां धर्मसाधनम् । नियमस्तु विशिष्टम् । आत्मसं-

---

वृ०—समाधत्ते—निष्पन्नस्य शरीरादेरवश्यंभावित्वात्कारणत्वाज्ज्ञानादिष्विति शेषः ॥ ४२ ॥

वृ०—ननु किमेतावतेत्यत आह—तस्य शरीरादेरभावस्तदारम्भकधर्माधर्मविरहादिति भावः ॥ ४३ ॥

वृ०—ननु समाधिमात्रादेव निष्पत्यूहोऽपवर्गः स्यात्साधनान्तरं वाऽपेक्षणीयमत आह यद्वा समाधिसाधनान्याह—तदर्थमपवर्गार्थमिति । भाष्यादौ तदर्थं समाध्यर्थमिति वा । यमानाह योगसूत्रम्—'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' ( २ । ३० ) । नियमानाह—'शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' ( २।३२ ) । स्वाध्यायः स्वाभिमतमन्त्रजपः । निषिद्धानाचरणतत्तदाश्रमविहिताचरणे यमनियमा इत्यन्ये । आत्मसंस्कार आत्मनोऽपवर्गाधिगमक्षमता । ननु यमनियमावेव साधने उताहो अन्यदस्तीत्यत आह—योगादिति । आत्मविधिरात्मसाक्षात्कारविधायकवाक्यम् 'आत्मा वा अरे द्रष्टव्यः' 'आत्मानं चेद्विजानीयात्' इत्यादि । योगादिति प्रतिपाद्यत्वं पञ्चम्यर्थः । तथा च योगशास्त्रोक्तात्मतत्त्वाधिगमसाधनैश्चाऽऽत्मसंस्कारः कर्तव्य इत्यर्थः ।

स्कारः पुनरधर्महानं धर्मोपचयश्च । योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः । स पुनस्तपः प्राणायामः प्रत्याहारो ध्यानं धारणेति । इन्द्रियविषयेषु प्रसंख्यानाभ्यासो रागद्वेषप्रहाणार्थः । उपायस्तु योगाचार*विधानमिति ॥ ४४ ॥

**ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ ४५ ॥**

भा०—तदर्थमिति प्रकृतम् । ज्ञायतेऽनेनेति ज्ञानमात्मविद्याशास्त्रम् । तस्य ग्रहणमध्ययनधारणे । अभ्यासः सततक्रियाध्ययनश्रवण-

---

तथा च योगसूत्रम्– ' योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः ' ( २ । २८ ) । तदर्थश्च योगाङ्गानां यमनियमादीनामनुष्ठानाच्चित्तस्याशुद्धेरविद्यादिरूपस्य क्षये सति ज्ञानस्य दीप्तिः प्रकर्षः स च विवेकख्यातिपर्यन्तो जायते । सा च सत्त्वपुरुषान्यतासाक्षात्कारः । अस्मन्मते तु देहादिभिन्नात्मसाक्षात्कारः । स च नेदानीमविद्याप्रतिबन्धाद्देहात्मनोर्मनश्चक्षुराद्ययोग्यत्वाच्च । भवति चासौ योगजधर्मात् । योगाङ्गानि तत्रोक्तानि— ' यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ' ( २ । २९ ) । आसनं पद्मासनादि कुशासनादि च । चैलाजिनकुशोत्तरमिति भगवद्वचनात् । प्राणायाममाह योगसूत्रम्— ' तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ' ( २ । ४९ ) । तस्मिन्नासनस्थैर्ये प्राणवायोरेव निर्गमप्रवेशरूपक्रियाविशेषाच्छ्वासप्रश्वासव्यपदेशः । बहिरिन्द्रियाणां स्वस्वविषयवैमुख्येनावस्थानं प्रत्याहारः । धारणामाह योगसूत्रम्—' देशबन्धश्चित्तस्य धारणा ' ( ३ । १ ) । देशे नाभिचक्रादौ चित्तस्य बन्धविषयान्तरवैमुख्येनावस्थानम् । ध्यानमाह— ' तत्र प्रत्ययैकतानता ध्यानम् ' ( ३ । २ ) । धारणैव धारावाहिनी ध्यानमित्यर्थः । समाधिमाह—' तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ' ( ३ । ३ ) । अर्थस्य धर्मो ज्ञानस्वरूपं च यदि ध्याने न भासते तदा समाधिरित्यर्थः । सूत्रान्तरम्—' त्रयमन्तरङ्गं पूर्वेभ्यः ' ( ३ । ७ ) । चरमत्रयं साक्षादुपकारकमित्यर्थः ॥ ४४ ॥

वृ०–नन्वेवं किमान्वीक्षिक्येत्यत आह–तदर्थमित्यनुवर्तते । ज्ञायतेऽनेनेति ज्ञानं शास्त्रं प्रकृतम् , तस्य ग्रहणमध्ययनधारणे, तत्राभ्यासो दृढतरसंस्कारः, तद्वि-

---

* योगाचारः—एकान्तकारिता, आहारविशेषः, एकत्रानवस्थानम्, इत्यादिर्यतिधर्मोक्तः ।

विम्यनानि । तद्विद्यैश्च संवाद इति प्रज्ञापरिपाकार्थम् । परिपा-
कस्तु संशयच्छेदनमविज्ञातार्थावबोधोऽध्यवसिताभ्यनुज्ञानमिति ।
समयवादः संवादः ॥ ४५ ॥

भा०—तद्विद्यैश्च सह संवाद इत्यविभक्तार्थं वचनं विभज्यते—

तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थि-
भिरनसूयिभिरभ्युपेयात् ॥ ४६ ॥

एतन्निगदेनैव नीतार्थमिति ॥ ४६ ॥

भा०—यदिदं मन्येत पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्येति—

प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४७ ॥

तमभ्युपेयादिति वर्तते । परतः प्रज्ञामुपादित्समानस्तत्त्वबु-
भुत्साप्रकाशनेन स्वपक्षमनवस्थापयन्स्वदर्शनं परिशोधये-
दिति ॥ ४७ ॥

इति तत्त्वज्ञानविवृद्धिप्रकरणम् ॥ ५ ॥

---

द्यैस्तदभियुक्तैः संवादः स्वानुभवदाढर्याय । न हि योगाङ्गज्ञानाय तत्सापे-
क्षत्वेन न प्रकृतशास्त्रवैफल्यम् । ध्येयस्वरूपवैलक्षण्यात् ॥ ४५ ॥

वृ०—संवादप्रकारं वा दर्शयितुमाह—तं तद्विद्यं सब्रह्मचारी सहाध्यायी
विशिष्टः प्रकृष्टज्ञानवान् । श्रेयोर्थी मुमुक्षुः । विशिष्टः पूर्वोक्तभिन्न इत्यर्थ इति
कश्चित् । विजिगीषुव्यावृत्त्यर्थमनसूयिभिरिति ॥ ४६ ॥

वृ०—संवादप्रकारमाह—वाशब्दो निश्चयार्थः । अर्थित्वे तत्त्वबुभुत्सायां
सत्यां प्रयोजनार्थं तत्त्वनिर्णयार्थं प्रतिपक्षहीनं प्रतिकूलपक्षहीनं यथा स्यात्तथाऽ-
भ्युपेयात् । तथा च भाष्यम्—स्वपक्षमनवस्थापयन्स्वदर्शनं परिशोधयेदिति ।
तत्त्वनिर्णिनीषुतया न पक्षपात इति भावः ॥ ४७ ॥

इति तत्त्वज्ञानविवृद्धिप्रकरणम् ॥ ५ ॥

---

१ ङ. 'सूयुभि' । २ ब 'स्थाप्य स्वद' ।

भा०—अन्योन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि* स्वपक्षरागेण चैके न्यायमतिवर्तन्ते। तत्र—

तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ४८ ॥

अनुत्पन्नतत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामेतदिति ॥ ४८ ॥

विद्यानिर्वेदादिभिश्च परेणाविज्ञायमानस्य—

ताभ्यां विगृह्य कथनम् ॥ ४९ ॥

भा०—विगृह्येति विजिगीषया न तत्त्वबुभुत्सयेति। तदेतद्विद्यापालनार्थं न लाभपूजाख्यात्यर्थमिति ॥ ४९ ॥

इति तत्त्वज्ञानपरिपालनप्रकरणम् ॥ ६ ॥

समाप्तं चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

इति वात्स्यायनीये न्यायभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

---

वृ०—तद्विद्यैः सह संवाद इत्यत्र त्रयीबाह्यैः सह संवादः कर्तव्य इति भ्रमो मा भूदिति तत्त्वज्ञानपरिपालनप्रकरणमारभते। तत्त्वाध्यवसायस्य तत्त्वनिर्णयस्य संरक्षणं परोक्तदूषणास्कन्दनेनाप्रामाण्यशङ्काविघटनं तदर्थं जल्पवितण्डे पूर्वमुक्ते इति शेषः ॥ ४८ ॥

वृ०—ननु ताभ्यां किं कार्यमित्यत आह। अयमर्थः—त्रयीबाह्यैस्तद्दर्शनाभ्यासाहितकुज्ञानैरपरैर्वा वादि स्वपक्ष आक्षिप्यते तदा ताभ्यां जल्पवितण्डाभ्याम्। सावधारणं चैतत्। त्रय्यन्तःपातिनामाक्षेपे तु वादजल्पवितण्डाभिर्यथेच्छं कथयेदिति भावः। वस्तुतस्तु मुमुक्षोर्न तादृशैः सह संवादो वीतरागत्वात्। न हि शास्त्रपरिपालनमपि तदुद्देश्यम्। न वा तदुपेक्षयैव शास्त्रं गच्छति किं तु शास्त्रमभ्यस्यतेति तत्त्वमिति ॥ ४९ ॥

इति तत्त्वज्ञानपरिपालनप्रकरणम् ॥ ६ ॥

समाप्तं चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

इति महामहोपाध्यायश्रीमद्विद्यानिवासभट्टाचार्यात्मजश्रीविश्वनाथसिद्धान्तपञ्चाननभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ चतुर्थोऽध्यायः ॥ ४ ॥

---

* अयुक्तपरित्यागेन युक्तपरिग्रहेण च परिशोधयेदिति भावः।

भा०—साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति संक्षेपणोक्तं तद्विस्तरेण विभज्यते । ताः खल्विमा *जातयः स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः—

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ॥ १ ॥

---

वृ०—नत्वा शंकरचरणं शरणं दीनस्य दुर्गमे तरणम् । संप्रति निरूपयामः पञ्चममध्यायमतिगहनम् ॥ अथ जातिनिग्रहस्थानयोरुद्दिष्टयोर्लक्षितयोर्बहुत्वं तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वमित्यनेन सूचितं बलवच्छिष्यजिज्ञासानुसारिप्रमाणादिपरीक्षयाऽन्तरितं संप्रत्यवसरतः प्रपञ्चनीयम् । तत्र जातिपरीक्षासहितजातिनिग्रहस्थानविशेषलक्षणमध्यायार्थः । जातिपरीक्षासहितजातिविशेषलक्षणं प्रथमाह्निकार्थः । सप्तदश चात्र प्रकरणानि । तत्राऽऽदौ सत्प्रतिपक्षदेशनाभासाप्रकरणम् । अन्यानि च यथास्थानं वक्ष्यन्ते । तत्र च विशेषलक्षणार्थं जातिं विभजते—अत्र च साधर्म्यादीनां कार्यान्तानां द्वंद्वे तैः समा इत्यर्थात्साधर्म्यसमादयश्चतुर्विंशतिजातय इत्यर्थः । अत्र च जातेर्विशेष्यत्वात्समाशब्दं मन्यन्ते । भाष्यवार्तिकादौ समाशब्दः । अग्रिमसूत्रेषु तु समशब्दो निर्विवाद एव । तत्र जातिशब्दस्य स्त्रीलिङ्गतया यद्यपि नान्वयस्तथाऽपि प्रतिषेधो विशेष्य इति भाष्यादयः । वयं तु तद्विकल्पादिति सूत्रस्थविकल्पस्यैव विशेष्यत्वम् ।

---

* जातिर्नाम स्थापनाहेतौ प्रयुक्ते परेण यः प्रतिषेधबुद्ध्या प्रयुक्तः परंतु वस्तुतः प्रतिषेधासमर्थो हेतुः सः । ननु जातिप्रयोगस्य सिद्धान्तासाधकत्वेन तत्प्रयोगोऽनुचित इति चेत् । अत्रोच्यते–यदा वादी परस्य साधनं साध्विति मन्यते किं च लाभपूजाख्यातिकामो भवति तदा जातिं प्रयुङ्क्ते । कदाचिदयं जात्युत्तरेणाऽऽकुलीकृतो नोत्तरं प्रतिपद्यते । उत्तराप्रतिपत्त्या च निगृह्यते । वादिना जातेरनभिधाने चास्यैकान्तजयः । एवं चैकान्तिकात्स्वपराजयाद्वरं संदेह इति बुद्ध्या युक्तो जातेः प्रयोग इति ।

साधर्म्येण प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः। अविशेषं तत्र तत्रोदाहरिष्यामः। एवं वैधर्म्यसमप्रभृतयोऽपि निर्वक्तव्याः॥ १॥

भा०—लक्षणं तु—

साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ॥ २॥

साधर्म्येणोपसंहारे साध्यधर्मविपर्ययोपपत्तेः साधर्म्येणैव प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः प्रतिषेधः। निदर्शनम्—क्रियावानात्मा। द्रव्यस्य क्रियाहेतुगुणयोगात्। द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान्। तथा चाऽऽत्मा। तस्मात्क्रियावानिति। एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते—निष्क्रिय आत्मा। विभुनो द्रव्यस्य निष्क्रियत्वात्। विभु चाऽऽकाशं निष्क्रियं च। तथा चाऽऽत्मा तस्मान्निष्क्रिय इति। न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात्क्रियावता भवितव्यं न पुनरक्रियसाधर्म्यान्निष्क्रियेणेति। विशेषहेत्वभावात्साधर्म्यसमः प्रतिषेधो भवति। अथ वैधर्म्यसमः—क्रियाहेतुगुणयुक्तो लोष्टः परिच्छिन्नो दृष्टः। न च तथाऽऽत्मा। तस्मान्न लोष्टवत्क्रियावानिति। न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात्क्रियावता भवितव्यं न पुनः क्रियावद्वैधर्म्यादक्रियेणेति। विशेषहेत्वभावा-

---

विविधः कल्पः प्रकारो विकल्पः। तथा चैते साधर्म्यसमादयो जातिविकल्पाः। एवमग्रिमसूत्रेष्वपि। इत्थं जातेर्विशेष्यत्वे साधर्म्यसमेत्यपीति ब्रूमः। समीकरणार्थं प्रयोगः सम इति वार्तिकं यद्यपि नैतावता समीकरणं तथाऽपि समीकरणोद्देश्यकत्वमस्त्येव। अथ वा साधर्म्यमेव समं यत्र स साधर्म्यसमः। एकत्र व्याप्तेराधिक्येऽपि साधर्म्यं सममेवेति भावः॥ १॥

वृ०—साधर्म्यवैधर्म्यसमौ लक्षयति—उपसंहारे साध्यस्योपसंहरणे वादिना कृते तद्धर्मस्य साध्यरूपधर्मस्य यो विपर्ययो व्यतिरेकस्तस्य साधर्म्यवैधर्म्याभ्यां केवलाभ्यां व्याप्त्यनपेक्षाभ्यां यदुपपादनं ततो हेतोः साधर्म्यवैधर्म्यसमावुच्येते। तदयमर्थः—वादिनाऽन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनं साधर्म्यसमा,

द्वैधर्म्यसमः । वैधर्म्येण चोपसंहारे निष्क्रिय आत्मा विभुत्वात् । क्रियावद्द्रव्यमविभु दृष्टं यथा लोष्टः । न च तथाऽऽत्मा तस्मान्निष्क्रिय इति । न चास्ति विशेषहेतुः क्रियावद्वैधर्म्यान्निष्क्रियेण भवितव्यं न पुनरक्रियवैधर्म्यात्क्रियावतेति । विशेषहेत्वभावाद्वैधर्म्यसमः । क्रियावाँल्लोष्टः क्रियाहेतुगुणयुक्तो दृष्टः । तथा चाऽऽत्मा । तस्मात्क्रियावानिति । न चास्ति विशेषहेतुः क्रियावद्वैधर्म्यान्निष्क्रियो न पुनः क्रियावत्साधर्म्यात्क्रियावानिति । विशेषहेत्वभावात्साधर्म्यसमः ॥ २ ॥

भा०—अनयोरुत्तरम्—

गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥

साधर्म्यमात्रेण वैधर्म्यमात्रेण च साध्यसाधने प्रतिज्ञायमाने स्यादव्यवस्था । सा तु धर्मविशेषे नोपपद्यते गोसाधर्म्याद्गोत्वाज्जातिविशेषाद्गौः सिध्यति न तु सास्नादिसंबन्धात् । अश्वादिवैधर्म्याद्गोत्वादेव च गौः सिध्यति न गुणादिभेदात् । तच्चैतत्कृते-

---

वैधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनं वैधर्म्यसमा । तत्र साधर्म्यसमा यथा—शब्दोऽनित्यः कृतकत्वाद्घटवत्, व्यतिरेकेण वा व्योमवदित्युपसंहृते नैतदेवं यद्यनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याद्वाऽनित्यः स्यान्नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः स्याद्विशेषो वा वक्तव्यः । वैधर्म्यसमा यथा—शब्दोऽनित्यः कृतकत्वाद्घटवदाकाशवद्वेति स्थापनायामनित्यघटवैधर्म्यादमूर्तत्वान्नित्यः स्याद्विशेषो वा वक्तव्य इति । अत्र साधर्म्यत्वमात्रं वैधर्म्यत्वमात्रं वा गमकतौपयिकमित्यभिमानात्सत्प्रतिपक्षदेशनाभासे चेमे । अनैकान्तिकदेशनाभासेति वार्तिके त्वनैकान्तिकपदं योगात्सत्प्रतिपक्षपरम् । एकान्ततः साध्यसाधकत्वाभावात् ॥२॥

वृ०—अनयोरसदुत्तरत्वे बीजमाह—गोत्वाद्गोसिद्धिर्गोव्यवहार इति संप्रदायः । वयं तु गोत्वाद्गवितरासमवेतत्वे सति गोसमवेतात्सास्नादितः । एतेन व्याप्तिपक्षधर्मत्वे दर्शिते । गोर्गोत्वस्य तादात्म्येन गोरेव वा सिद्धिर्यथा तथैव कृतकत्वादपि व्याप्तिपक्षधर्मतासहितादनित्यत्वसिद्धिर्न तु व्याप्तिपक्षधर्मतारहि-

---

१ क. ख. ग. घ. च. °त यवस्था° ।

व्याख्यानमवयवप्रकरणे प्रमाणानामभिसंबन्धाच्चैकार्थकारित्वं समानं वाक्य इति। हेत्वाभासाश्रया खल्वियमव्यवस्थेति ॥ ३ ॥

इति सत्प्रतिपक्षदेशनाभासाप्रकरणम् ॥ १ ॥

---

साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्य*समाः ॥ ४ ॥

भा०—दृष्टान्तधर्मं साध्येन समासंजन्नुत्कर्षसमः। यदि क्रियाहेतुगुणयोगाल्लोष्टवत्क्रियावानात्मा लोष्टवदेव स्पर्शवानपि प्राप्नोति। अथ न स्पर्शवाल्लोँष्टवत्क्रियावानपि न प्राप्नोति विपर्यये वा विशेषो वक्तव्य इति। साध्ये धर्माभावं दृष्टान्तात्प्रसंजतोऽपकर्ष-

---

तात्साधर्म्यमात्रात्। तथा सति अदूषकसाधर्म्यात्प्रमेयत्वादितस्त्वद्वचनमप्यदूषकं स्यादित्ययं विशेषः ॥ ३ ॥

इति सत्प्रतिपक्षदेशनाभासाप्रकरणम् ॥ १ ॥

---

वृ०—क्रमप्राप्तं जातिषट्कं निरूपयति—उत्कर्षेण सम उत्कर्षसम एवमपकर्षसमोऽपि। वर्ण्यावर्ण्यसाध्येति भावप्रधानो निर्देशः। वर्ण्यत्वादिना समो वर्ण्यसमादिः। अविद्यमानधर्मारोप उत्कर्षः। विद्यमानधर्मापचयोऽपकर्षः। वर्ण्यत्वं वर्णनीयत्वम्। तच्च संदिग्धसाध्यकत्वादि। तदभावोऽवर्ण्यत्वम्। विकल्पो द्वैविध्यम्। साध्यत्वं पञ्चावयवसाधनीयत्वम्। साध्यदृष्टान्तयोर्धर्मविकल्पादिति पञ्चानामुत्थानबीजम्। उभयसाध्यत्वादिति षष्ठस्य। तदयमर्थः—

---

* अत्रायं निष्कर्षः—दृष्टान्ते दृष्टस्य पक्षेऽनिष्टस्य धर्मस्य साध्येन सहाऽऽपादनमुत्कर्षसमः। दृष्टान्ते विद्यमानस्य धर्माभावस्य पक्ष आपादनमपकर्षसमः। दृष्टान्तसादृश्यमात्रेण साध्यापादनं वर्ण्यसमः। पक्षसादृश्यमात्रेण दृष्टान्ते साध्याभावापादनमवर्ण्यसमः। पक्षदृष्टान्तयोर्धर्मान्तरेण वैसादृश्यात्साध्यसाधनमसाध्यसाधनं वा विकल्पसमः। दृष्टान्ते दृष्टस्यापि साध्यत्वापादनं साध्यसम इति।

---

१ क. ग. ङ. च. °सजन्नु°। २ क. ग. च. °वानेवाऽऽत्मा। ३ ङ. °सजतो°।

समः । लोष्टः खलु क्रियावानविभुर्दृष्टः काममात्माऽपि क्रियावानविभुरस्तु विपर्यये वा विशेषो वक्तव्य इति । ख्यापनीयो वर्ण्यो विपर्ययादवर्ण्यः । तावेतौ साध्यदृष्टान्तधर्मौ विपर्यस्यतो वर्ण्यावर्ण्यसमौ भवतः । साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पात्साध्यधर्मविकल्पं प्रसंजतो विकल्पसमः । क्रियाहेतुगुणयुक्तं किंचिद्गुरु

---

साध्यतेऽत्रेति साध्यं पक्षः । तथा च साध्यदृष्टान्तयोरित्यस्य पक्षदृष्टान्तयोरन्यतरस्मिन्नित्यर्थः । विकल्पो धर्मस्य वैचित्र्यम् । तच्च क्वचित्सत्त्वं क्वचिदसत्त्वम् । प्रकृते साध्यसाधनान्यतररूपस्य धर्मस्य विकल्पात्सत्त्वाद्योऽविद्यमानधर्मारोपः स उत्कर्षसमः । व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन्साध्यसाधनान्यतरेणाविद्यमानधर्मप्रसञ्जनमुत्कर्षसम इति फलितार्थः । यथा शब्दोऽनित्यः कृतकत्वादिति स्थापनायामनित्यत्वं कृतकत्वं घटे रूपसहचरितमतः शब्दोऽपि रूपवान्स्यात्तथा च विवक्षितविपरीतसाधनाद्विशेषविरुद्धो हेतुस्तद्देशनाभासा चेयम् । एवं श्रावणशब्दसाधर्म्यात्कृतकत्वाद्घटोऽपि श्रावणः स्यादविशेषात् । वस्तुतस्तु घटे श्रावणत्वापादनेऽर्थान्तरमत उक्तलक्षणे दृष्टान्तपदं साध्यपदं च न देयम् । अपकर्षसमायां तु धर्मविकल्पो धर्मस्य सहचरितधर्मस्य विकल्पोऽसत्त्वं ततोऽपकर्षः साध्यसाधनान्यतरस्याभावप्रसञ्जनम् । तथा च पक्षदृष्टान्तान्यतरस्मिन्व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतुसाध्यान्यतराभावप्रसञ्जनमपकर्षसमा । यथा शब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यसहचरितघटधर्मात्कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचारितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात् । आद्येऽसिद्धिदेशना । द्वितीये बाधदेशना । एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगादावनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटेऽनित्यत्वं कृतकत्वं च व्यावर्तेतेति दृष्टान्ते साध्यसाधनवैकल्यदेशनाभासाऽपीयम् । यत्तु वार्तिके शब्दो नीरूप इति घटोऽपि नीरूपः स्यादित्यपकर्ष इति । तदसत् । घटे नीरूपत्वापादनस्यार्थान्तरत्वात् । आचार्यस्वरसोऽप्येवम् । यत्तु वैधर्म्यसमाया अत्रैवान्तर्भावः स्यादिति । तन्न । उपधेयसंकरेऽप्युपाधेरसंकरात् । वर्ण्यसमायां तु साध्यः सिद्ध्यभाववान्संदिग्धसाध्यकादिर्वा तस्य धर्मः संदिग्धसाध्यकादिवृत्तिहेतुस्तस्य विकल्पात्सत्त्वाद्दृष्टान्ते वर्ण्यतास्य संदिग्धसाध्यकत्वस्याऽऽपादनं वर्ण्यसमा । तदयमर्थः—पक्षवृत्तिहे-

---

१ ङ. °सजतो ।

यथा लोष्टः, किंचिल्लघु यथा वायुरेवं क्रियाहेतुगुणयुक्तं किंचित्क्रियावत्स्याद्यथा लोष्टः किंचिदक्रियं यथाऽऽत्मा विशेषो वा वाच्य इति। हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यस्तं दृष्टान्ते प्रसैजतः साध्यसमः। यदि यथा लोष्टस्तथाऽऽत्मा प्राप्तस्तर्हि यथाऽऽत्मा तथा लोष्ट इति। साध्यश्चायमात्मा क्रियावानिति

---

तुर्हि गमकः। पक्षश्च संदिग्धसाध्यकः। तथा च संदिग्धसाध्यकवृत्तिर्हेतुस्त्वया दृष्टान्तेऽपि स्वीकार्यः। तथा च दृष्टान्तस्यापि संदिग्धसाध्यकत्वात्सपक्षवृत्तित्वानिश्चयादसाधारणो हेतुस्तद्देशनाभासा चेयम्। हेतुः संदिग्धसाध्यकवृत्तिर्यदि न दृष्टान्ते तदा गमकहेत्वभावात्साधनविकलो दृष्टान्तः स्यादिति भावः। अवर्ण्यसमायां तु दृष्टान्ते सिद्धसाध्यके यो धर्मो हेतुस्तस्य सत्त्वात्पक्षे शब्दादावसंदिग्धसाध्यकत्वापादनमवर्ण्यसमा। दृष्टान्ते हेतोर्यादृशत्वं तादृशो हेतुरेव गमक इत्यभिमानेनैवमापादनम्। दृष्टान्ते यो हेतुः सिद्धसाध्यकवृत्तिः स चेन्न पक्षे तदा गमकहेत्वभावात्स्वरूपासिद्धिः स्यादतस्तादृशो हेतुरवश्यं पक्षत्वाभिमते स्वीकार्यः। तथा च संदिग्धसाध्यकत्वलक्षणपक्षत्वाभावादाश्रयासिद्धिरसिद्धिदेशनाभासा चेयम्। विकल्पसमायां तु पक्षे दृष्टान्ते च यो धर्मस्तस्य विकल्पो विरुद्धः कल्पो व्यभिचारित्वम्। उपलक्षणं चैतदन्यवृत्तिधर्मस्यापि बोध्यम्। व्यभिचारोऽपि हेतोर्धर्मान्तरं प्रति धर्मान्तरस्य साध्यं प्रति धर्मान्तरस्य धर्मान्तरं प्रति वा। तथा च कस्यचिद्धर्मस्य क्वचिद्व्यभिचारदर्शनेन धर्मत्वाविशेषात्प्रकृतहेतोः प्रकृतसाध्यं प्रति व्यभिचारापादनं विकल्पसमा। यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनाद्गुरुत्वस्यानित्यत्वव्यभिचारदर्शनादनित्यत्वस्य मूर्तत्वव्यभिचारदर्शनाद्धर्मत्वाविशेषात्कृतकत्वमप्यनित्यत्वं व्यभिचरेदित्यनैकान्तिकदेशनाभासा चेयम्। पक्षदृष्टान्तादेः प्रकृतसाध्यतुल्यतापादनं साध्यसमा। तत्रायमाशयः—एतत्प्रयोगसाध्यस्यैवानुमितिविषयत्वम्। तथा च पक्षादेरनुमितिविषयत्वात्साध्यवदेतत्प्रयोगसाध्यत्वमतः साध्यसमा। तथाहि—पक्षादेः पूर्वं सिद्धत्व एतत्प्रयोगसाध्यत्वाभावान्नानुमितिविषयत्वम्। पूर्वमसिद्धत्वे पक्षादेरज्ञानादाश्रयासिद्ध्यादयस्तद्देशनाभासा चेयम्। सूत्रार्थस्तु—उभयसाध्यत्वादुभयं पक्षदृष्टान्तौ तद्धर्मो हेत्वादिस्तत्साध्यत्वं तदधीनानुमितिविषयत्वं साध्यस्येव पक्षादेरपीति तुल्यतापादनमिति। लिङ्गोपहितभानमते लिङ्ग-

---

१ क. °सृजतः।

कामं लोष्टोऽपि साध्यः । अथ नैवं न तर्हि यथा लोष्टस्तथाऽऽत्मा ॥ ४ ॥

भा०—एतेषामुत्तरम्—

**किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥**

अलभ्यः सिद्धस्य निह्नवः । सिद्धं च किंचित्साधर्म्यादुपमानं यथा गौस्तथा गवय इति । तत्र न लभ्यो गोगवययोर्धर्मविकल्पश्चोदयितुम् । एवं साधके धर्मे दृष्टान्तादिसामर्थ्ययुक्ते न लभ्यः साध्यदृष्टान्तयोर्धर्मविकल्पाद्वैधर्म्यात्प्रतिषेधो वक्तुमिति ॥ ५ ॥

---

स्याप्यनुमितिविषयत्वात्साध्यसमत्वम् । हेतोश्च साध्यत्वे हेतुमान्दृष्टान्तोऽपि साध्य इत्याशयः ॥ ४ ॥

वृ०—एतासामसदुत्तरत्वे बीजमाह—किंचित्साधर्म्यात्साधर्म्यविशेषाद्व्याप्तिसहितादुपसंहारसिद्धेः साध्यसिद्धेः, वैधर्म्याद्धेताद्विपरीतात् , व्याप्तिनिरपेक्षात्साधर्म्यमात्राद्भवता कृतः प्रतिषेधो न संभवतीत्यर्थः । अन्यथा प्रमेयत्वरूपा साधकसाधर्म्यात्तद्दूषणमप्यसम्यक् स्यादिति भावः । तथा चायं क्रमः—अनित्यत्वव्याप्यात्कृतकत्वाच्छब्देऽनित्यत्वमुपसंहरामो न तु कृतकत्वं रूपस्यापि व्याप्यं येन ततो रूपमप्यापादनीयम् । शब्द एवमनित्यत्वं न रूपव्याप्यं येन रूपाभावादनित्यत्वाभावः शब्दे स्यात् । एवं वर्ण्यसमेऽपि किंचित्साधर्म्याद्व्याप्यतावच्छेदकावच्छिन्नाद्धेतोः साध्यसिद्धिः । तादृशहेतुमत्त्वं च दृष्टान्ताप्रयोजकं न तु पक्षे यावद्विशेषणावच्छिन्नो हेतुस्तावदवच्छिन्नहेतुमत्त्वम् । अन्यथा त्वयाऽपि दूषणीयो दृष्टान्तीकर्तव्यः सोऽपि न स्यात् । एवमवर्ण्यसमेऽपि व्याप्यतावच्छेदकावच्छिन्नस्य दृष्टान्तदृष्टस्य पक्षे सत्त्वात्साध्यसिद्धिर्न तु दृष्टान्तवृत्तियावद्धर्मावच्छिन्नस्य पक्षे सत्त्वम् । एवं विकल्पसमेऽपि प्रकृतसाध्यव्याप्यात्प्रकृतहेतोः साध्यसिद्धिस्तद्वैधर्म्याद्यत्किंचिद्व्यभिचारात्कृतः प्रतिषेधो न संभवति । न हि यत्किंचिद्व्यभिचारादेव प्रकृतहेतोः प्रकृतसाध्यासाधकत्वम् , अतिप्रसङ्गात् । एवं साध्यसमेऽपि व्याप्याद्धेतोः सिद्धे पक्षे साध्यसिद्धिर्न तु पक्षदृष्टान्तादयोऽप्यनेन साध्यन्ते । तथा सति क्वचिदपि साध्यसिद्धिर्न स्यात्त्वदीयदूषणमपि विलीयेत ॥ ५ ॥

साध्यातिदेशाच्च* दृष्टान्तोपपत्तेः ॥ ६ ॥

भा०—यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं तेनाविपरीतोऽर्थोऽतिदिश्यते प्रज्ञापनार्थमेवं साध्यातिदेशाद्दृष्टान्त उपपद्यमाने साध्यत्वमनुपपन्नमिति ॥ ६ ॥

इति जातिषट्कप्रकरणम् ॥ २ ॥

---

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥

भा०—हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा । न तावत्प्राप्य । प्राप्त्यामविशिष्टत्वादसाधकः । द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा । अप्राप्य साधकं न भवति ।

---

वृ०—वर्ण्यावर्ण्यसाध्यसमासु समाधानान्तरमप्याह—दृष्टान्तोपपत्तिर्दृष्टान्ततोपपत्तिः साध्यातिदेशात् । दृष्टान्ते हि साध्यमतिदिश्यते तावतैव दृष्टान्तत्वमुपपद्यते । न त्वशेषो धर्मः, पक्षदृष्टान्तयोरभेदापत्तेः । पक्षादेरपि साध्यसमत्वमेतेन प्रत्युक्तम् । दृष्टोऽन्तो दृष्टान्तः पक्षस्तस्माद्वह्निमानित्यतः पक्षोत्कीर्तनात्तथा च साध्यस्यातिदेशात्साधनात्पक्ष इत्युच्यते न तु पक्षेऽपि साध्यतेऽतिप्रसङ्गादिति भावः ॥ ६ ॥

इति जातिषट्कप्रकरणम् ॥ २ ॥

---

वृ०—क्रमप्राप्तौ प्राप्त्यप्राप्तिसमौ लक्षयति—हेतोरिति । साधकत्वमिति शेषः । प्राप्तिपक्षे दोषमाह—प्राप्त्याऽविशिष्टत्वादिति । द्वयोरपि प्राप्तत्वाविशेषात्किं कस्य साधकम् । अप्राप्तिपक्षे दोषमाह—अप्राप्त्येति । अप्राप्तस्य साधकत्वेऽतिप्रसङ्गात् । साधकत्वं चात्र कारकज्ञापकसाधारणम् । एवं च कारकज्ञापकलक्षणं साधनं कार्यज्ञाप्यलक्षणेन साध्येन संबद्धं सत्साधकं चेत्तदा सत्त्वावि-

---

* अयमाशयः—नहि दृष्टान्तदृष्टसकलधर्मयोगित्वं पक्षस्य सुवचम् । तथा सति दृष्टान्तदार्ष्टान्तिकभावस्यैवानुपपत्तिः स्यात् । अपि तु दृष्टान्तदृष्टसाध्यव्याप्यहेतुमत्तानिश्चयेन साध्यमात्रं पक्षे सिध्यति । न तु तत्समानाधिकरणं धर्मान्तरं नापि पक्षप्रसिद्धधर्मवत्ता । दृष्टान्ते साधकाभावादिति ।

नाप्राप्तः प्रदीपः प्रकाशयतीति । प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः ।
अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः ॥ ७ ॥

भा०—अनयोरुत्तरम्—

**घटादिनिष्पत्तिदर्शनात्पीडने**
**चाभिचारादप्रतिषेधः ॥ ८ ॥**

उभयथा खल्वयुक्तः प्रतिषेधः । कर्तृकरणाधिकरणानि प्राप्य मृदं घटादिकार्यं निष्पादयन्ति । अभिचाराच्च पीडने सति दृष्टमप्राप्य *साधकत्वमिति ॥ ८ ॥

इति प्राप्त्यप्राप्तिसमजातिद्वयप्रकरणम् ॥ ३ ॥

---

**दृष्टान्तस्य करणानपदेशात्प्रत्यवस्थानाच्च**
**प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥**

भा०—साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गेन प्रत्यवस्थानं

---

शेषाच्च कार्यकारणभावः । तत्संबन्धस्य प्रागेव ज्ञातत्वाच्च ज्ञाप्यज्ञापकभावः प्राप्तयोर्न जन्यजनकभावः । प्राप्तत्वेन लवणोदकयोरिवाभेदादित्याशय इत्यन्ये । तथा च प्राप्त्याऽविशेषादनिष्टापादनेन प्रत्यवस्थानं प्राप्तिसमा । यदि चाप्राप्तं लिङ्गं साध्यबुद्धिं जनयति साध्याभावबुद्धिमेव किं तेन न जनयेदप्राप्तत्वाविशेषात् । तथा चाप्राप्त्याऽसाधकत्वादनिष्टापादनमप्राप्तिसमा । प्रतिकूलतर्कदेशनाभासे चेमे ॥ ७ ॥

वृ०—अनयोरसदुत्तरत्वे बीजमाह—दण्डादितो घटादिनिष्पत्तेर्दर्शनात्सर्वलोकप्रत्यक्षसिद्धत्वादभिचाराच्छ्येनादितः शत्रुपीडने च व्यभिचाराच्च त्वदुक्तः प्रतिषेधः संभवति । नहि कारणं दण्डादि प्रागेव घटादिना संबद्धमपि तु मृदादिना । श्येनादिरप्युद्देश्यतया पीडां जनयति । अन्यथा लोकवेदसिद्धकार्यकारणभावोच्छेदे त्वदुक्तौ हेतुरप्यसाधकः स्यादिति ॥ ८ ॥

इति प्राप्त्यप्राप्तिसमजातिद्वयप्रकरणम् ॥ ३ ॥

---

वृ०—क्रमप्राप्ते प्रसङ्गप्रतिदृष्टान्तसमे जाती लक्षयति—दृष्टान्तस्य कारणं प्रमाणं तदनपदेशोऽनभिधानम् । अभिधानं चानतिप्रयोजनकम् । तथा च

---

* घटादेर्मृत्पिण्डे प्राप्तस्य समवेतस्य मृत्पिण्डसंयुक्तैरेवोत्पादनादाभिचारेण च श्येनादिनोद्देश्यासंयुक्तेनैवोद्देश्यपीडाया जननान्नोभयथाऽपि प्रत्यवस्थानं युक्तमिति भावः ।

*प्रसङ्गसमः प्रतिषेधः। क्रियाहेतुगुणयोगी क्रियावाँल्लोष्ट इति हेतुर्नापदिश्यते। न च हेतुमन्तरेण सिद्धिरस्तीति प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः क्रियावानात्मा क्रियाहेतुगुणयोगाल्लोष्टवदित्युक्ते प्रतिदृष्टान्त उपादीयते क्रियाहेतुयुक्तमाकाशं निष्क्रियमिति। कः पुनराकशस्य क्रियाहेतुर्गुणः। वायुना संयोगः संस्कारापेक्षो वायुवनस्पतिसंयोगवदिति ॥ ९ ॥

भा०—अनयोरुत्तरम्—

प्रदीपोपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः ॥ १० ॥

इदं तावदयं पृष्टो वक्तुमर्हति अथ के प्रदीपमुपाददते किमर्थं वेति दिदृक्षमाणा दृश्यदर्शनार्थमिति। अथ प्रदीपं दिदृक्षमाणाः प्रदीपान्तरं कस्मान्नोपाददते। अन्तरेणापि प्रदीपान्तरं दृश्यते

---

दृष्टान्तस्य साध्यवत्त्वे प्रमाणाभावात्प्रत्यवस्थानमर्थः। यद्यपीदं सदुत्तरमेव तथाऽपि दृष्टान्ते प्रमाणं वाच्यम्। तत्रापि प्रमाणान्तरमित्यनवस्थया प्रत्यवस्थाने तात्पर्यम्। तदुक्तमाचार्यैः—अनवस्थाभासप्रसङ्गः प्रसङ्गसम इति। एतन्मते हेतोर्हेत्वन्तरमित्यनवस्थाऽपि प्रसङ्गसम एव। पूर्वमते तु हेत्वनवस्थादिकं वक्ष्यमाणाकृतिगणेष्वन्तर्भूतमिति विशेषः। अनवस्थादेशनाभासा चेयम्। प्रतिदृष्टान्तसमः प्रत्येतव्यः। प्रतिदृष्टान्तेन प्रत्यवस्थानात्प्रतिदृष्टान्तसमः। एतच्च सावधारणम्। तेन प्रतिदृष्टान्तमात्रबलेन प्रत्यवस्थानमर्थः। तेन साधर्म्यसमाव्युदासः। यदि घटदृष्टान्तबलेनानित्यः शब्दस्तदाऽऽकाशदृष्टान्तबलेन नित्य एव स्यात्। नित्यः किं न स्यादिति बाधः प्रतिरोधो वाऽऽपादनीयः। हेतुरनङ्गं दृष्टान्तमात्रबलादेव साध्यसिद्धिरित्यभिमानः। बाधप्रतिरोधान्यतरदेशनाभासा चेयम् ॥ ९ ॥

वृ०—प्रसङ्गसमे प्रत्युत्तरमाह—दृष्टान्तो हि निदर्शनस्थानत्वेन साध्यनिश्चयार्थमपेक्षते न तु दृष्टान्तादृष्टान्ताद्यनवस्थितपरम्परा लोकसिद्धा युक्तिसिद्धा

---

* अत्रेदं बोध्यम्—साध्यसमो हि दृष्टान्ते साध्यवद्धेत्वाद्यवयवं प्रसञ्जयति। दृष्टान्तगतस्यानित्यत्वस्य पञ्चावयवप्रयोगसाध्यतां प्रसञ्जयतीति यावत्। प्रसङ्गसमस्तु दृष्टान्तगतस्यानित्यत्वस्य प्रमाणमात्रसाध्यतां प्रसञ्जयतीति न पौनरुक्त्यमिति।

---

१ क. ग. च. °दीपा°।

प्रदीपः । तत्र प्रदीपदर्शनार्थं प्रदीपोपादानं निरर्थकम् । अथ दृष्टान्तः किमर्थमुच्यत इति । अप्रज्ञातस्य ज्ञापनार्थमिति । अथ दृष्टान्ते कारणापदेशः किमर्थं दृश्यते । यदि प्रज्ञापनार्थम् , प्रज्ञातो दृष्टान्तः । स खलु ' लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ' ( १ । १ । २५ ) इति । तत्प्रज्ञानार्थः कारणापदेशो निरर्थक इति प्रसङ्गसमस्योत्तरम् ॥ १० ॥

भा०—अथ प्रतिदृष्टान्तसमस्योत्तरम्—

प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥

प्रतिदृष्टान्तं ब्रुवता न विशेषहेतुरपदिश्यतेऽनेन प्रकारेण प्रतिदृष्टान्तः साधको न दृष्टान्त इति एवं प्रतिदृष्टान्तहेतुत्वेनाहेतुर्दृष्टान्त इत्युपपद्यते स च कथ*महेतुर्न स्यात् । यद्यप्रतिषिद्धः, साधकः स्यादिति ॥ ११ ॥

इति प्रसङ्गसमप्रतिदृष्टान्तसमप्रकरणम् ॥ ४ ॥

---

वा० । अन्यथा घटादिप्रत्यक्षाय प्रदीप इव प्रदीपप्रत्ययार्थमनवस्थितप्रदीपपरम्परा प्रसज्येत । त्वदीयसाधनमपि व्याहन्येत ॥ १० ॥

वृ०—प्रतिदृष्टान्तसमे प्रत्युत्तरमाह—अत्रायमुत्तरक्रमः । प्रतिदृष्टान्तस्त्वया किमर्थमुपादीयते मदीयहेतोर्बाधनार्थं सत्प्रतिपक्षितत्वार्थं वा । नाऽऽद्यः । यतः प्रतिदृष्टान्तस्य हेतुत्वे स्वार्थसाधकत्वे मदीयो दृष्टान्तो नाहेतुर्नासाधकस्तथा च तुल्यबलत्वान्न बाधः । न वा द्वितीयोऽपि । यतः प्रतिदृष्टान्तस्य स्वार्थसाधकत्व उच्यमाने नाहेतुर्दृष्टान्तः । मदीयो दृष्टान्तस्तु सहेतुकत्वादधिकबलः । वस्तुतो हेतुं विना दृष्टान्तमात्रेण न सत्प्रतिपक्षसंभावना तदभावव्याप्यवत्ताज्ञानाभावात् । हेतूपादाने तु सदुत्तरत्वमेवेति भाव इति ॥ ११ ॥

इति प्रसङ्गसमप्रतिदृष्टान्तसमप्रकरणम् ॥ ४ ॥

---

* अयं भावः—मदीयस्य दृष्टान्तस्याभ्युपगमान्न त्वदीयो दृष्टान्त इत्युक्तेऽपर आह यथा न मदीयो दृष्टान्तस्तथा त्वदीयोऽपि । एवं च प्रतिदृष्टान्तेन मदीयस्यादृष्टान्तत्वे साध्ये व्याघातः । तथाहि—प्रतिदृष्टान्तेन हि मदीयस्यादृष्टान्तता साध्या, स चेन्न दृष्टान्तस्तर्हि तेन कथं मदीयस्यादृष्टान्तता । तथा च प्रतिदृष्टान्तेन मदीयोऽदृष्टान्त इति व्याहतमिति ।

१ ख. ग. °ते हे°

**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥**

भा०—अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्तेऽपर आह—प्रागुत्पत्तेरनुत्पन्ने शब्दे प्रयत्नानन्तरीयकत्वमनित्यत्वकारणं नास्ति तदभावान्नित्यत्वं प्राप्तं नित्यस्य चोत्पत्तिर्नास्ति । अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ॥ १२ ॥

भा०—अस्योत्तरम्—

**तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥**

तथाभावादुत्पन्नस्येति उत्पन्नः खल्वयं शब्द इति भवति । प्रागुत्पत्तेः शब्द एव नास्ति । उत्पन्नस्य शब्दभावाच्छब्दस्य सतः प्रयत्नानन्तरीयकत्वमनित्यत्वकारणमुपपद्यते । कारणोपपत्ते-

---

वृ०—क्रमप्राप्तमनुत्पत्तिसमं लक्षयति—प्रागुत्पत्तेरिति । साधनाङ्गस्येति शेषः । कारणाभावाद्धेत्वभावात् । तथा च साधनाङ्गपक्षहेतुदृष्टान्तानामुत्पत्तेः प्राग्धेत्वभाव इत्यनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः । यथा घटो रूपवान्गन्धात्पटवदित्युक्ते घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादसिद्धिः । पटे च गन्धोत्पत्तेः पूर्वं हेत्वभावेन दृष्टान्तासिद्धिः । एवमाद्यक्षणे रूपाभावाद्बाधश्च । अनुत्पत्त्या प्रत्यवस्थानस्य तत्रापि सत्त्वात् । उत्पत्तेः पूर्वं हेत्वाद्यभावेन प्रत्यवस्थानस्यैव लक्षणत्वात् । जातित्वे सतीति च विशेषणीयम् । तेनोत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यत्र बाधने प्रत्यवस्थाने नातिव्याप्तिः । असिद्ध्यादिदेशनाभासा चेयम् ॥ १२ ॥

वृ०—अत्रोत्तरमाह—उत्पन्नस्य तथाभावाद्घटाद्यात्मकत्वात् । अत्र कारणस्य हेतोरुपपत्तेः सत्त्वात्कथं कारणप्रतिषेधः । अयमाशयः—पक्षे हेत्वभावोऽसिद्धिर्न त्वनुत्पन्ने हेत्वभावः संभवति, अधिकरणाभावात् । नहि हेत्वभावमात्रासिद्धिः । त्वदीयहेतोरपि क्वचिदभावसत्त्वात् । एतेन दृष्टान्तासिद्धिर्व्याख्याता । यदा कदाचिद्धेतुसत्त्वेनैव दृष्टान्तोपपत्तेः । एवं हेत्वादीनां यदा कदाचित्पक्षे सत्त्वा-

रयुक्तोऽयं दोषः प्रागुत्पत्तेः कार*णाभावादिति ॥ १३ ॥

इत्यनुत्पत्तिसमप्रकरणम् ॥ ५ ॥

---

सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नि-
त्यानित्यसाधर्म्यात्संशय+समः ॥ १४ ॥

भा०—अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदित्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते । सति प्रयत्नानन्तरीयकत्वेऽस्त्येवास्य नित्येन सामान्येन साधर्म्यमैन्द्रियकत्वमस्ति च घटेनानित्येन । अतो नित्यानित्यसाधर्म्यादनिवृत्तः संशय इति ॥ १४ ॥

---

देव हेत्वादिभावो न तु सार्वत्रिकी तदपेक्षेति ॥ १३ ॥

इत्यनुत्पत्तिसमप्रकरणम् ॥ ५ ॥

---

वृ०—क्रमप्राप्तं संशयसमं लक्षयति—नित्यानित्यसाधर्म्यादिति संशयकारणोपलक्षणम् । तेन समानधर्मदर्शनादियत्किंचित्संशयकारणबलात्संशयेन प्रत्यवस्थानं संशयसमः । अधिकं तूदाहरणपरम् । तथाहि—शब्दोऽनित्यः कार्यत्वाद्घटवदित्युक्ते सामान्ये गोत्वादौ दृष्टान्ते घट ऐन्द्रियकत्वं तुल्यम् । यथा कार्यत्वान्निर्णायकादनित्यत्वं निर्णीयते तथैन्द्रियकत्वात्संशयकारणादनित्यत्वं संदिह्यताम् । एवं शब्दत्वादिसाधर्म्यदर्शनादपि संशयो बोध्यः । तथा च हेतुज्ञातेऽप्रामाण्यशङ्काधानद्वारा साध्यसंशयात्सत्प्रतिपक्षदेशनाभासा चेयम् ॥ १४ ॥

---

* प्रयत्नानन्तरीयकत्वादित्ययं ज्ञापको हेतुर्न तु कारकः । ज्ञापके च कारकहेतुवत्प्रत्यवस्थानमयुक्तम् । तथाहि—कारको हेतुर्हि निवर्तमानः स्वकार्यं निवर्तयति । न तु ज्ञापकः । तदभावेऽपि चिरनिखातायां भूमौ निध्यादीनामनिवृत्तेः । एवं च प्रागुत्पत्तेरिति विशेषणमनर्थकम् । प्रागसतो हि सत्तासंबन्ध उत्पत्तिः । प्रागपि चेदसौ शब्दोऽभ्युपगतस्तर्हि तदनर्थकमनुत्पत्तिधर्मकत्वादिति भावः । + ननु संशयसमा साधर्म्यसमातो न भिद्यत इति चेत् । मैवम् । उभयैकसाधर्म्यभेदात् । उभयसाधर्म्यात्संशयसमः । एकसाधर्म्यात्तु साधर्म्यसम इति बोध्यम् ।

भा०—अस्योत्तरम्—

सार्धम्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रति*षेधः॥ १५ ॥

विशेषाद्वैधर्म्यादवधार्यमाणेऽर्थे 'पुरुषः' इति न स्थाणुपुरुषसाधर्म्यात्संशयोऽवकाशं लभत एवं वैधर्म्याद्विशेषात्प्रयत्नानन्तरीयकत्वादवधार्यमाणे शब्दस्यानित्यत्वे नित्यानित्यसाधर्म्यात्संशयोऽवकाशं न लभते। यदि वै लभेत ततः स्थाणुपुरुषसाधर्म्यानुच्छेदादत्यन्तं संशयः स्यात्। गृह्यमाणे च विशेषे नित्यं साधर्म्यं संशयहेतुरिति नाभ्युपगम्यते। नहि गृह्यमाणे पुरुषस्य विशेषे स्थाणुपुरुषसाधर्म्यं संशयहेतुर्भवति॥ १५॥

इति संशयसमप्रकरणम्॥ ६॥

---

वृ०—अत्रोत्तरम्—साधर्म्यात्साधर्म्यदर्शनात्संशये आपद्यमानेऽपि न संशयो वैधर्म्याद्वैधर्म्यदर्शनात्। यदि च कार्यत्वरूपविशेषदर्शनेऽपि संशयस्तदाऽत्यन्तसशयप्रसङ्गः संशयानुच्छेदप्रसङ्गः। न च तथाऽभ्युपगन्तुं शक्यमित्याह नित्यत्वेति। सामान्यस्य समानधर्मदर्शनस्य नित्यत्वानभ्युपगमान्नित्यसंशयजनकत्वानभ्युपगमात्। तथा सति त्वदीयहेतुरपि न परपक्षप्रतिषेधकः स्यादिति भावः। सामान्यस्य गोत्वादेर्नित्यत्वानभ्युपगमान्नित्यत्वानभ्युपगमप्रसङ्गात्तत्रापि साधारणधर्मप्रमेयत्वादिना संशय एव स्यादिति केचित्॥ १५॥

इति संशयसमप्रकरणम्॥ ६॥

---

* न सामान्यदर्शनमात्रं संशयस्य कारणं किंतु विशेषादर्शनसहितम्। विशेषदर्शने तु सति न सामान्यदर्शनं संशयकारणमिति सूत्रार्थः।

उभयसाधर्म्यात्प्रक्रियासिद्धेः *प्रकरणसमः ॥ १६ ।

भा०—उभयेन नित्येन चानित्येन च साधर्म्यात्पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदित्येकः पक्षं प्रवर्तयति द्वितीयश्च नित्यसाधर्म्यात्। एवं च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानो न प्रकरणमतिवर्तते। अनतिवृत्तेस्तन्निर्णयानिवर्तनम्। समानं चैतन्नित्यसाधर्म्येणोच्यमाने हेतौ। तदिदं प्रकरणानतिवृत्त्या प्रत्यवस्थानं प्रकरणसमः। समानं चैतद्वैधर्म्येऽपि उभयवैधर्म्यात्प्रक्रियासिद्धेः प्रकरणसम इति ॥ १६ ॥

भा०—अस्योत्तरम्—

प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥ १७ ॥

उभयसाधर्म्यात्प्रक्रियासिद्धिं ब्रुवता प्रतिपक्षात्प्रक्रियासिद्धिरुक्ता भवति। यदुभयसाधर्म्यं तत्रैकतरः प्रतिपक्ष इति। एवं च सत्युपपन्नः प्रतिपक्षो भवति। प्रतिपक्षोपपत्तेरनुपपन्नः प्रति-

---

वृ०—क्रमप्राप्तं प्रकरणसमं लक्षयति—उभयसाधर्म्यादन्वयसहचाराद्व्यतिरेकसहचाराद्वा। प्रक्रिया प्रकर्षेण क्रिया साधनं विपरीतसाधनमिति फलितार्थः। तत्सिद्धेस्तस्य पूर्वमेव सिद्धेः। तथा चाधिकबलत्वेनाऽऽरोपितप्रमाणान्तरेण बाधेन प्रत्यवस्थानं प्रकरणसमः। यथा शब्दोऽनित्यः कृतकत्वादित्युक्तेः। नैतदेवम्। श्रावणत्वेन नित्यत्वसाधकेन बाधात्। बाधदेशनाभासा चेयम् ॥ १६ ॥

वृ०—अत्रोत्तरमाह—प्रतिपक्षाद्विपरीतसाध्यसाधकत्वेनाभिमताच्छ्रावणत्वादितः। प्रकरणसिद्धिद्वारा मदीयसाध्यस्य यः प्रतिषेधस्त्वया क्रियते तस्या-

---

* उभयेन नित्येनानित्येन च साधर्म्येणोच्यमानेन प्रक्रियायाः प्रकरणस्यानुमितिप्रयोजकसंशयस्येति यावत्, सिद्धेः प्रकरणसमो जातिरित्यर्थः। तथा च नित्येनानित्येन च साधर्म्येण प्रत्यवस्थानं प्रकरणसमद्वयम्। एवं वैधर्म्येणापि प्रकरणसमद्वयमिति प्रकरणसमचतुष्टयं बोध्यम्।

षेधः। यदि प्रतिपक्षोपपत्तिः प्रतिषेधो नोपपद्यते। अथ प्रतिषेधोपपत्तिः प्रतिपक्षो नोपपद्यते। प्रतिपक्षोपपत्तिः प्रतिषेधोपपत्तिश्चेति विप्रतिषिद्धमिति। तत्त्वानवधारणाच्च प्रक्रियासिद्धिर्विपर्यये प्रकरणावसानात्। तत्त्वावधारणे ह्यवसितं प्रकरणं भवतीति॥ १७॥

इति प्रकरणसमप्रकरणम्॥ ७॥

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः॥ १८॥

भा०— हेतुः साधनं तत्साध्यात्पूर्वं पश्चात्सह वा भवेत्। यदि पूर्वं साधनम्, असति साध्ये कस्य साधनम्। अथ पश्चात्, असति साधने कस्येदं साध्यम्। अथ युगपत्साध्यसाधने, द्वयोर्विद्यमानयोः किं कस्य साधनं किं कस्य साध्यमिति हेतुरहेतुना न विशिष्यते। अहेतुना साधर्म्यात्प्रत्यवस्थानमहेतुसमः॥ १८॥

---

नुपपत्तिः। कुतः। प्रतिपक्षोपपत्तेः। त्वत्पक्षापेक्षया प्रतिपक्षस्य मदीयपक्षस्योपपत्तेः साधनात्। अयमाशयः—श्रावणत्वेन पूर्वं नित्यत्वस्य साधनाद्यो बाध उच्यते स नोपपद्यते। पूर्वं साधितस्य बलवत्त्वाभावात्कदाचित्कृतकत्वेनानित्यत्वस्यापि पूर्वं साधनादिति त्वत्पक्षप्रतिषेधोऽपि स्यात्॥ १७॥

इति प्रकरणसमप्रकरणम्॥ ७॥

वृ०— क्रमप्राप्तमहेतुसमं लक्षयति—त्रैकाल्यं कार्यकालतःपूर्वापरकालास्तेन हेतोरसिद्धेर्हेतुत्वासिद्धेः। अयमर्थः—दण्डादिकं घटादेर्न पूर्ववर्तितया कारणं तदानीं घटादेरभावात्कस्य कारणं स्यात्। अत एव न घटाद्युत्तरकालवर्तितयाऽपि न वा समानकालवर्तितया, तुल्यकालवर्तिनोः सव्येतरविषाणयोरिवाविनिगमनापत्तेः। तथा च कालसंबन्धखण्डनेनाहेतुतया प्रत्यवस्थानमहेतुसमः। कारणमात्रखण्डनेन ज्ञप्तिहेतोरपि खण्डनान्न तदसंग्रहः। प्रतिकूलतर्कदेशनाभासा चेयम्॥ १८॥

---

* ननु प्रकरणसमस्य सत्प्रतिपक्षरूपहेत्वाभासत्वेनोक्तत्वादत्र जातित्वेनोक्तिः कथमिति चेत्। अत्रोच्यते—स्वसाध्यनिर्णयेन परसाधनविघटनबुद्ध्या प्रतिपक्षसाधनं प्रकरणसमजात्युत्तरं भवति। सत्प्रतिपक्षतया वादिनः साधनमनिश्चायकं करोमीति बुद्ध्या प्रतिपक्षसाधनं प्रयुञ्जानो न जातिवादी भवति। सिद्धान्तं ज्ञात्वा वादिपरीक्षणार्थं प्रवृत्तत्वेन सदुत्तरवादित्वात्।

भा०—अस्योत्तरम्—

न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥

न त्रैकाल्यासिद्धिः । कस्मात् । हेतुतः साध्यसिद्धेः । निर्वर्तनीयस्य निर्वृत्तिर्विज्ञेयस्य विज्ञानमुभयं कारणतो दृश्यते सोऽयं महान्प्रत्यक्षविषय उदाहरणमिति । यत्तु खलूक्तमसति साध्ये कस्य साधनमिति, यत्तु निर्वर्त्यते यच्च विज्ञाप्यते तस्येति ॥ १९ ॥

प्रतिषेधानुपपत्तेः प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥

भा०—पूर्वं पश्चाद्युगपद्वा प्रतिषेध इति नोपपद्यते । प्रतिषेधानुपपत्तेः स्थापनाहेतुः सिद्ध इति ॥ २० ॥

इत्यहेतुसमप्रकरणम् ॥ ८ ॥

---

अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः* ॥ २१ ॥

भा०—अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदिति स्थापिते पक्षेऽर्थापत्त्या प्रतिपक्षं साधयतोऽर्थापत्तिसमः । यदि प्रयत्नानं-

---

वृ०—अत्रोत्तरमाह—त्रैकाल्यासिद्धिस्त्रैकाल्येन याऽसिद्धिरुक्ता सा न । कुतः । हेतुतः साध्यसिद्धेस्त्वयाऽप्यभ्युपगमात् ॥ १९ ॥

वृ०—पूर्ववर्त्तितामात्रेणैव हेतुतासंभवात् । अन्यथा त्वदीयहेतोरपि साध्यं न सिध्येदित्याह—हेतुफलभावखण्डने प्रतिषेधस्याप्यनुपपत्तेः प्रतिषेद्धव्यस्य परकीयहेतोर्न प्रतिषेध इत्यर्थः ॥ २० ॥

इत्यहेतुसमप्रकरणम् ॥ ८ ॥

---

वृ०—क्रमप्राप्तमर्थापत्तिसमं लक्षयति—अर्थापत्तिरर्थापत्त्याभासः । तथा चार्थापत्त्याभासेन प्रतिपक्षसाधनाय प्रत्यवस्थानमर्थापत्तिसमः । अयमाशयः—

---

* वादिना प्रयुक्ते हेतौ तद्विपरीतहेतोः साध्याभावसाधकत्वमनुक्तमप्यर्थादापद्यत इति संभाव्य वादितात्पर्यविपरीतापादनेन यत्र प्रतिहेतुः साध्याभावसाधक इत्यापद्यते सोऽर्थापत्तिसम इत्यर्थः ।

न्तरीयकत्वादनित्यसाधर्म्यादनित्यः शब्द इति, अर्थादापद्यते नित्यसाधर्म्यान्नित्य इति । अस्ति चास्य नित्येन साधर्म्यमस्पर्शत्वमिति ॥ २१ ॥

भा०—अस्योत्तरम्—

अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥२२॥

अनुपपाद्यसामर्थ्यमनुक्तमर्थादापद्यत इति ब्रुवतः पक्षहानेरुपपत्तिरनुक्तत्वादनित्यपक्षसिद्धावर्थादापन्नमनित्यपक्षस्य * हानिरिति । अनैकान्तिकत्वाच्चार्थापत्तेरुभयपक्षसमा चेयमर्थापत्तिः । यदि नित्यसाधर्म्यादस्पर्शत्वादाकाशवच्च नित्यः शब्दः, अर्थादापन्नमनित्यसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्य इति । न चेयं

---

अर्थापत्तिर्हि उक्तेनानुक्तमाक्षिपति । यथा शब्दोऽनित्य इत्युक्तेऽर्थादापद्यतेऽन्यन्नित्यम् । तथा च दृष्टान्तासिद्धिः। विरोधश्च—कृतकत्वादनित्य इत्युक्तेऽर्थादापन्नमन्यस्माद्धेतोर्बाधः सत्प्रतिपक्षो वा । अनुमानादनित्य इत्युक्ते प्रत्यक्षान्नित्य इति च बाधः । विशेषविधेः शेषनिषेधफलकत्वमित्यभिमानः । सर्वदोषदेशनाभासा चेयम् ॥ २१ ॥

वृ०—अत्रोत्तरम्—किमुक्तेनानुक्तं यत्किंचिदेवार्थादापद्यत उक्तोपपादकं वा ? । आद्ये त्वत्पक्षहानिरप्यापाद्यतां त्वयाऽनुक्तत्वात् । अन्त्येऽस्या अर्थापत्तेरनैकान्तिकत्वम्, एकान्तिकत्वमेकपक्षसाधकत्वं बलं तन्नास्ति। न ह्यनित्य इत्यस्योपपादकं नित्यत्वमिति । नहि विशेषविधिमात्रं शेषनिषेधफलकम् । अपि तु

---

* अयं भावः—तदेव खल्वनुक्तं वचनाल्लभ्यते यत्कल्पनमन्तरेण वचनार्थो न संगच्छते । यथा पीनो देवदत्तो दिवा न भुङ्क्त इत्युक्ते रात्रिभोजनं कल्प्यते । तस्य वाक्यार्थोपपादने सामर्थ्यात् । न त्वव्यभिचारिणः साधर्म्यात्साध्ये साध्यमानेऽर्थादुक्तं भवति व्यभिचारिणाऽपि साधर्म्येण साधयितव्यमिति । वाक्यार्थोपपादने तस्यासामर्थ्यात् । किंतु तदन्तरेणापि वाक्यार्थोपपत्तेः । यदि पुनरनुपलब्धसाधर्म्यमनुक्तमात्रं गम्यते ततस्त्वया नित्यत्वापादने शब्दस्योच्यमानेऽनुच्यमानमनित्यत्वं प्रत्येतव्यम् । तथा च भवदभिमतस्य नित्यत्वस्य व्याहतिः प्राप्नोतीति ।

विपर्ययमात्रादेकान्तेनार्थापत्तिः । न खलु वै घनस्य ग्राव्णः पतनमित्यर्थादापद्यते द्रवाणामपां पतनाभाव इति ॥ २२ ॥

इत्यर्थापत्तिसमप्रकरणम् ॥ ९ ॥

एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेष*समः ॥ २३ ॥

भा०—एको धर्मः प्रयत्नानन्तरीयकत्वं शब्दघटयोरुपपद्यत इत्यविशेषे तूभयोरानित्यत्वे सर्वस्याविशेषः प्रसज्यते । कथम् । सद्भावोपपत्तेः । एको धर्मः सद्भावः सर्वस्योपपद्यते । सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गात्प्रत्यवस्थानमविशेषसमः ॥ २३ ॥

भा०—अस्योत्तरम्—

+क्वचित्तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधा×भावः ॥ २४ ॥

यथा साध्यदृष्टान्तयोरेकधर्मस्य प्रयत्नानन्तरीयकत्वस्योपप-

---

सति तात्पर्ये क्वचित् । नहि नीलो घट इत्युक्ते सर्वमन्यदनीलमिति क्वचित्प्रतिपद्यते ॥ २२ ॥

इत्यर्थापत्तिसमप्रकरणम् ॥ ९ ॥

वृ०—अविशेषसमं लक्षयति—एकस्य धर्मस्य कृतकत्वादेः शब्दे घटे चोपपत्तेः सत्त्वाद्यदि शब्दघटयोरनित्यत्वेनाविशेष उच्यते तदा सर्वेषामविशेषप्रसङ्गः । कुतः । सद्भावोपपत्तेः । सतः सन्मात्रस्य ये भावा धर्माः सत्त्वप्रमेयत्वादयस्तेषामुपपत्तेः सत्त्वात् । तथा च सर्वेषामभेदे पक्षाद्यविभागः । सर्वेषामेकजातीयत्वेऽवान्तरजात्युच्छेदः । सर्वेषामनित्यत्वे जात्यादिविलय इत्यादि । तथा च सन्मात्रवृत्तिधर्मेणाविशेषापादनमविशेषसम इति फलितम् । अत्र चाविशेषसम इति लक्ष्यनिर्देशः । सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गादिति लक्षणम् । शेषं व्युत्पादकम् । प्रतिकूलतर्कदेशनाभासा चेयम् ॥ २३ ॥

वृ०—अत्रोत्तरमाह—तद्धर्मस्तस्य हेतोर्धर्मो व्याप्त्यादिस्तस्य क्वचित्कृतक-

---

* एकसाधर्म्यात्प्रत्यवस्थानं साधर्म्यसमः समस्तसाधर्म्यात्तु अविशेषसम इति भेदः ।

+ क्वचिद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभाव इति प्रायशः पाठ उपलभ्यते ।

× अविनाभावसंपन्नं साधर्म्यं गमकं न तु साधर्म्यमात्रमिति भावः ।

त्तेरनित्यत्वधर्मान्तरमविशेषो नैवं सर्वभावानां सद्भावोपपत्तिनिमित्तं धर्मान्तरमस्ति येनाविशेषः स्यात् । अथ मतमनित्यत्वमेव धर्मान्तरं सद्भावोपपत्तिनिमित्तं भावानां सर्वत्र स्यादित्येवं खलु वै कल्प्यमाने नित्याः सर्वे भावाः सद्भावोपपत्तेरिति पक्षः प्राप्नोति । तत्र प्रतिज्ञार्थव्यतिरिक्तमन्यदुदाहरणं नास्ति । अनुदाहरणश्च हेतुर्नास्तीति । प्रतिज्ञैकदेशस्य चोदाहरणत्वमनुपपन्नम् । नहि साध्यमुदाहरणं भवति । ततश्च नित्यानित्यभावादनित्यत्वानुपपत्तिः । तस्मात्सद्भावोपपत्तेः सर्वाविशेषप्रसङ्ग इति निरभिधेयमेतद्वाक्यमिति । सर्वभावानां सद्भावोपपत्तेरनित्यत्वमिति ब्रुवताऽनुज्ञातं शब्दस्यानित्यत्वं तत्रानुपपन्नः प्रतिषेध इति ॥ २४ ॥

इत्यविशेषसमप्रकरणम् ॥ १० ॥

---

**उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥**

भा०—यद्यनित्यत्वकारणमुपपद्यते शब्दस्येत्यनित्यः शब्दो नित्यत्वकारणमप्युपपद्यतेऽस्यास्पर्शत्वमिति नित्यत्वमप्युपपद्यते । उभयस्यानित्यत्वस्य नित्यत्वस्य कारणोपपत्त्या प्रत्यवस्थानमुपपत्ति*समः ॥ २५ ॥

---

त्वादावुपपत्तेः सत्त्वात् । क्वचित्सत्त्वादावनुपपत्तेरभावात् । त्वदुक्तस्य प्रतिषेधस्याभावोऽसंभव इत्यर्थः ॥ २४ ॥

इत्यविशेषसमप्रकरणम् ॥ १० ॥

---

वृ०—उपपत्तिसमं लक्षयति—उभयं पक्षप्रतिपक्षौ तयोः कारणस्य प्रमाणस्योपपत्तेः सत्त्वात् । तथा च व्याप्तिमपुरस्कृत्य यत्किंचिद्धर्मेण परपक्षदृष्टान्तेन स्वपक्षसाधनेन प्रत्यवस्थानमुपपत्तिसमः । यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते यथा त्वत्पक्षेऽनित्यत्वे प्रमाणमस्ति तथा मत्पक्षोऽपि सप्रमाणकस्त्वत्पक्षमत्पक्षान्यतरत्वात्त्वत्पक्षवत् । तथा च बाधः प्रतिरोधो वा । तद्देशनाभासा चेयम् ॥ २५ ॥

---

* प्रकरणसमजातौ पक्षप्रतिपक्षसाधनयोः समानबलत्वेऽपि प्रतिवादी साधनात्स्वपक्षसिद्धया वादिसाधनदूषणे प्रवर्तते । उपपत्तिसमायां स्वसाधनेनैव प्रवर्तत इति विशेषो बोध्यः ।

भा०—अस्योत्तरम्—

उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥

उभयकारणोपपत्तेरिति ब्रुवता नानित्यत्वकारणोपपत्तेरनित्यत्वं प्रतिषिध्यते । यदि प्रतिषिध्यते नोभयकारणोपपत्तिः स्यात् । उभयकारणोपपत्तिवचनादनित्यत्वकारणोपपत्तिरभ्यनुज्ञायते । अभ्यनुज्ञानादनुपपन्नः प्रतिषेधः । व्याघातात्प्रतिषेध इति चेत्समानो व्याघातः । एकस्य नित्यत्वानित्यत्वप्रसङ्गं व्याहतं ब्रुवतोक्तः प्रतिषेध इति चेत्स्वपक्षपरपक्षयोः समानो व्याघातः । स च नैकतरस्य साधक इति ॥ २६ ॥

इत्युपपत्तिसमप्रकरणम् ॥ ११ ॥

---

निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥ २७ ॥

भा०—निर्दिष्टस्य प्रयत्नानन्तरीयकत्वस्यानित्यत्वकारणस्याभावेऽपि वायुनोदनाद्वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपल-

---

वृ०—अत्रोत्तरम्—अयं त्वदुक्तप्रतिषेधो न संभवति । कुतः । मत्पक्ष उपपत्तिकारणस्य मत्पक्षसाधकप्रमाणस्य त्वयाऽभ्यनुज्ञानात् । त्वया हि मत्पक्षस्य दृष्टान्तीकरणेन सप्रमाणकत्वमनुज्ञातमतः कथं तत्प्रतिषेधः शक्यते कर्तुम् । अनुज्ञातस्यापि प्रतिषेधे स्वपक्ष एव किं न प्रतिषिध्यते ॥ २६ ॥

इत्युपपत्तिसमप्रकरणम् ॥ ११ ॥

---

वृ०—उपलब्धिसमं लक्षयति—वादिना निर्दिष्टस्य कारणस्य साधनस्याभावे साध्यस्योपलम्भात्प्रत्यवस्थानमुपलब्धिसम इत्यर्थः । पर्वतो वह्निमान्धूमादित्यादिकं वह्न्यवधारणार्थमुच्यते । न च तत्संभवति । धूमं विनाऽऽलोकादितोऽपि वह्निसिद्धेः । तथा च न तस्य साधकत्वमिति प्रतिकूलः । न वा धूमाद्वह्निमानेवेत्यवधारणम् । द्रव्यत्वादेरपि धूमेन साधनात् । न वा पर्वत एव वह्निमानेवेत्यादिकमवधारयितुं शक्यते । महानसादेरपि वह्निमत्त्वात् । अन्यथा

भ्यते । निर्दिष्टस्य साधनस्याभावेऽपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः* ॥ २७ ॥

भा०—अस्योत्तरम्—

कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः+ ॥ २८ ॥

प्रयत्नानन्तरीयकत्वादिति ब्रुवता कारणत उत्पत्तिरभिधीयते न कार्यस्य कारणनियमः । यदि च कारणान्तरादप्युपपद्यमानस्य शब्दस्य तदनित्यत्वमुपपद्यते किमत्र प्रतिषिध्यत इति । न प्रागुच्चारणादविद्यमानस्य शब्दस्यानुपलब्धिः । कस्मात् । आवरणाद्यनुपलब्धेः । यथा विद्यमानस्योदकादेरर्थस्याऽऽवरणादेरनुपलब्धिर्नैवं शब्दस्याग्रहणकारणेनाऽऽवरणादिनाऽनुपलब्धिः । गृह्येत चैतदस्याग्रहणकारणमुदकादिवत्, न गृह्यते[1] । तस्मादुदकादिविपरीतः शब्दोऽनुपलभ्यमान इति ॥ २८ ॥

इत्युपलब्धिप्रकरणम् ॥ १२ ॥

---

दृष्टान्तासिद्धिः स्यात् । एवं वह्निशून्यपर्वतस्यापि सत्त्वाद्बाध इत्यादि । तद्देशनाभासा चेयम् ॥ २७ ॥

वृ०—अत्रोत्तरमाह—कारणान्तरात्साधनान्तरादालोकादितोऽपि तस्य धर्मस्य साध्यस्योपलब्धेस्त्वदुक्तः प्रतिषेधो न संभवति । अयमाशयः—नहि वयमवधारणार्थं वह्निमान्धूमादित्यादिकं प्रयुञ्ज्महे, अपि तु संदिग्धस्य वह्नेः सिद्ध्यर्थम् । अन्यथा त्वदुक्तमसाधकतासाधनमपि न स्यादसाधकतासाधकान्तरस्यापि सत्त्वात् ॥ २८ ॥

इत्युपलब्धिप्रकरणम् ॥ १२ ॥

---

* यद्यपि अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्यत्र प्रकरणाद्वर्णात्मकः शब्दोऽनित्यत्वेन साध्यतया विवक्षितस्तथाऽपि ध्वन्यात्मकोऽप्यनेन पक्षीकृत इत्यारोहणमुपलब्धिसमार्थः । + वर्णानामनित्यत्वं साधयितुं प्रयत्नाच्छब्दस्योत्पत्तिनियमोऽभिधीयते । न तु 'प्रयत्नादेव सर्वः शब्दो जायते न तु वायुसंयोगजाद्वृक्षभङ्गात्' इति कार्यस्य कारणनियम उच्यते । येनाव्यापकत्वं हेतोः स्यादिति सूत्रार्थः ।

---

[1] ङ. गृह्यते चै° ।

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धि*समः ॥ २९ ॥

भा०—तेषामावरणादीनामनुपलब्धिर्नोपलभ्यते । अनुपलम्भान्नास्तीत्यभावोऽस्याः सिध्यति । अभावसिद्धौ हेत्वभावात्तद्विपरीतमस्तित्वमावरणादीनामवधार्यते । तद्विपरीतोपपत्तेर्यत्प्रतिज्ञातं न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिरित्येतन्न सिध्यति । सोऽयं हेतुरावरणाद्यनुपलब्धेरित्यावरणादिषु चाऽऽवरणाद्यनुपलब्धौ च समयानुपलब्ध्या प्रत्यवस्थितोऽनुपलब्धिसमो भवति ॥ २९ ॥

---

वृ०—अनुपलब्धिसमं लक्षयति—यद्यपि चेयं द्वितीयाध्याये दर्शिता दूषिता च तथाऽप्यनुपलब्धिसमजातिरेवमिति तत्रानुक्तेरत्र क्रमप्राप्ताऽभिधीयते। तत्रायं क्रमः—नैयायिकैस्तावच्छब्दानित्यत्वमेव साध्यते । यदि शब्दो नित्यः स्यादुच्चारणात्प्राक्कुतो नोपलभ्यते । नहि घटाद्यावरणकुड्यादिवच्छब्दस्याऽऽवरणमस्ति तदनुपलब्धेरिति । तत्रैवं जातिवादी प्रत्यवतिष्ठते—यद्यावरणानुपलब्धेरावरणाभावः सिध्यति तदाऽऽवरणानुपलब्धेरप्यनुपलम्भादावरणानुपलब्धेरप्यभावः सिध्येत् । तथा चाऽऽवरणानुपलब्धिप्रमाणक आवरणाभावो न स्यादपि त्वावरणोपपत्तिरेव स्यादिति शब्दनित्यत्वेनोक्तं बाधकं युक्तम् । नन्वनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणात्कथमेवमिति चेत् । इत्थम्—अनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणे स्वयमेव स्वस्मिन्ननुपलब्धिरूपेति वाच्यम् । तथा च स्वयैवानुपलब्ध्याऽनुपलब्धत्वसंभवात्तदभावसिद्धेः । स्वात्मन्युपलब्धिरूपत्वाभावेऽनुपलब्धिस्त्वमेव न स्यात् । अनुपलब्धेरनुपलब्ध्यन्तरापेक्षणेऽनवस्था स्पष्टैव । इत्थं चैवंरूपेण प्रत्यवस्थानमनुपलब्धिसम इत्यर्थः । प्रतिकूलतर्कदेशनाभासा चेयम् ॥ २९ ॥

---

* उपलभ्यमानत्वे सति उपलब्धिरूपतयाऽनुपलब्धित्वानुपपत्तेः । तथा चानुपलब्धेरनुपलम्भानुपलब्धिर्नास्तीति आवरण इवाऽऽवरणानुपलब्धावप्यनुपलब्धिसमेत्यर्थः ।

भा०—अस्योत्तरम्—

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः* ॥ ३० ॥

आवरणाद्यनुपलब्धिर्नास्त्यनुपलम्भादित्यहेतुः । कस्मात् । अनुपलम्भात्मकत्वादनुपलब्धेरुपलम्भाभावमात्रत्वादनुपलब्धेः । यदस्ति तदुपलब्धेर्विषय उपलब्ध्या तदस्तीति प्रतिज्ञायते । यन्नास्ति तदनुपलब्धेर्विषयोऽनुपलभ्यमानं नास्तीति प्रतिज्ञायते । सोऽयमावरणाद्यनुपलब्धेरनुपलम्भाभावोऽनुपलब्धौ स्वविषये प्रवर्तमानो न स्वविषयं प्रतिषेधति । अप्रतिषिद्धा चाऽऽवरणाद्यनुपलब्धिर्हेतुत्वाय कल्पते । आवरणादीनि तु विद्यमानत्वादुपलब्धेर्विषयास्तेषामुपलब्ध्या भवितव्यम् । यत्तानि नोपलभ्यन्ते तदुपलब्धेः स्वविषयप्रतिपादिकाया अभावादनुपलम्भादनुपलब्धेर्विषयो गम्यते न सन्त्यावरणादीनि शब्दस्याग्रहणकारणानीति । अनुपलम्भादनुपलब्धिः सिध्यति विषयः स तस्येति ॥ ३० ॥

---

वृ०—अत्रोत्तरमाह—अनुपलब्धिरात्मन्यनुपलब्धिरिति कोऽर्थः । स्वयमनुपलब्धिरूपेति चेद्भवत्येव । स्वविषयिण्यनुपलब्धिरिति चेन्नेदं प्रसक्तम् । अनुपलब्धेरनुपलम्भात्मकत्वादुपलम्भाभावात्मकत्वादभावस्य च निर्विषयकत्वात्स्वात्मन्युपलब्धित्वाभावेऽनुपलब्धित्वमेव कथमस्या इति चेत्कतमो विरोधः । न हि घटः स्वविषयो न भवतीति नायं घटः । आवरणाभावः कथमनुपलब्धिविषय इति चेत्क एवमाह । किं त्वनुपलब्धिसहकृतेन्द्रियग्राह्यत्वादनुपलब्धिग्राह्य इत्युपचर्यते । अतस्तदनुपलब्धेरनुपलम्भादित्यादिकमहेतुः । अन्यथा त्वत्साधनमपि दोषानुपलब्धेरनुपलम्भात्सदोषमेव स्यादिति ॥ ३० ॥

---

* अयं भावः—आवरणाद्यनुपलब्धिरावरणादीनामभावं गमयति, न तु स्वस्यैवाभावमावरणाद्युपलब्धिरूपम् । न ह्यसावनुपलब्धिरात्मनः । येन स्वाभावं गमयेत् । उपलब्धिरपि उपलभ्यविषया, नाऽऽत्मविषया, किं पुनरनुपलब्धिः । तस्मादनुपलब्धिरुपलभ्याभावहेतुः, न हेतुरात्माभावस्य । तथा सति सैव न स्यादुपलभ्याभावेऽपि, किंतु आवरणं तदुपलब्धिश्च स्यादिति ।

ज्ञानविकल्पानां च भावाभा-
वसंवेदनादध्यात्मम् ॥ ३१ ॥

भा०—अहेतुरिति वर्तते । शरीरे शरीरिणां ज्ञानविकल्पानां भावाभावौ संवेदनीयौ, अस्ति मे संशयज्ञानं नास्ति मे संशय-ज्ञानमिति । एवं प्रत्यक्षानुमानागमस्मृतिज्ञानेषु । सेयमावरणाद्यनुपलब्धिरुपलब्ध्यभावः स्वसंवेद्यः, नास्ति मे शब्दस्याऽऽवरणाद्युपलब्धिरिति, नोपलभ्यन्ते शब्दस्याग्रहणकारणान्यावरणादीनीति । तत्र यदुक्तं तदनुपलब्धेरनुपलम्भादभावसिद्धिरिति एतन्नोपपद्यते ॥ ३१ ॥

इत्यनुपलब्धिसमप्रकरणम् ॥ १३ ॥

---

साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानि-
त्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥

भा०—अनित्येन घटेन साधर्म्यादनित्यः शब्द इति ब्रुवतोऽस्ति

---

वृ०—नन्वनुपलब्धेः स्वस्मिन्ननुपलब्धित्वाभावेऽनुपलब्धिरपि केन सिध्येदत आह—अध्यात्ममात्मन्यधि ज्ञानविकल्पानां ज्ञानविशेषाणां भावाभावयोर्मनसा संवेदनाद्घटं साक्षात्करोमि वह्निमनुमिनोमि नानुमिनोमीत्येवं ज्ञानविशेषतदभावानां मनसैव सुग्रहत्वादिति भावः ॥ ३१ ॥

इत्यनुपलब्धिसमप्रकरणम् ॥ १३ ॥

---

वृ०—अनित्यसमं लक्षयति—यदि दृष्टान्तघटसाधर्म्यात्कृतकत्वात्तेन सह तुल्यधर्मतोपपद्यत इत्यतः शब्देऽनित्यत्वं साध्यते तदा सर्वस्यैवानित्यत्वं स्यात्सत्त्वादिरूपसाधर्म्यसंभवात् । न चेदमर्थान्तरग्रस्तमिति वाच्यम् । सर्वस्यानित्यत्वे व्यतिरेकाग्रहादनुमानदूषणे तात्पर्यात्परस्यान्वयव्यतिरेकिण एवानुमानत्वादित्याशयः । तथा च व्याप्तिमपुरस्कृत्य यत्किंचिद्दृष्टान्तसाधर्म्येण सर्वस्य साध्यवत्त्वापादनमनित्यसमः । साध्यपदादविशेषसमोऽतो व्यवच्छेद्यस्तत्र सर्वाविशेष एवाऽऽपाद्यते न तु सर्वस्य साध्यवत्त्वम् । यस्त्वनित्यत्वेन समोऽनित्यसम इति भावप्रधानो निर्देशः । तथा चान्वर्थलब्धमेव लक्षणमिति ।

घटेनानित्येन सर्वभावानां साधर्म्यमिति सर्वस्यानित्यत्वमनिष्टं संपद्यते। सोऽयमनित्यत्वेन प्रत्यवस्थानादनित्यसम इति॥३२॥

भा०—अस्योत्तरम्—

साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः
प्रतिषेध्यसाधर्म्याच्च ॥ ३३ ॥

प्रतिज्ञाद्यवयवयुक्तं वाक्यं पक्षनिवर्तकं प्रतिपक्षलक्षणं प्रतिषेधः। तस्य पक्षेण प्रतिषेध्येन साधर्म्यं प्रतिज्ञादियोगः। तद्यद्यनित्यसाधर्म्यादनित्यत्वस्यासिद्धिः साधर्म्यादसिद्धेः प्रतिषेधस्याप्यसिद्धिः प्रतिषेध्येन[4] साधर्म्यादिति ॥ ३३ ॥

दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य
हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ॥ ३४ ॥

भा०—दृष्टान्ते यः खलु धर्मः साध्यसाधनभावेन प्रज्ञायते स

---

तत्र। वह्निमान्धूमादित्यादौ महानससाधर्म्यात्सत्त्वात्सर्वस्य वह्निमत्त्वं स्यादित्यस्य जात्यन्तरत्वापत्तेः। आचार्यास्तु—साधर्म्यं वैधर्म्यस्याप्युपलक्षकम्। यथाऽऽकाशवैधर्म्यात्कृतकत्वाच्छब्दोऽनित्यस्तथाऽऽकाशवैधर्म्यादाकाशभिन्नत्वादितः सर्वमेवानित्यं स्यात्। इत्थं च लक्षणे यत्किंचिद्धर्मेणेत्येव वाच्यमित्याहुः। अत्र च वैधर्म्यस्य विपक्षावृत्तित्वान्न सर्वस्य साध्यवत्त्वापादनं किंत्वात्मादीनामप्यनित्यत्वं स्यादिति। तत्र चार्थान्तरमित्यवधेयम्। प्रतिकूलतर्कदेशनाभासा चेयम् ॥ ३२ ॥

वृ०—अत्रोत्तरमाह—यदि यत्किंचित्साधर्म्यात्सर्वस्य साध्यवत्त्वमापादयतस्तव साधर्म्यस्यासाधकत्वमभिमतं तदा त्वत्कृतप्रतिषेधस्याप्यसिद्धिः। तस्यापि प्रतिषेधसाधर्म्येण प्रवृत्तत्वात्। त्वया ह्येवं साध्यते कृतकत्वं न साधकं दृष्टान्तसाधर्म्यरूपत्वात्सत्त्वादिवत्। अत्र च त्वदीयहेतुस्त्वत्प्रतिषेध्येन मदीयहेतुना कृतकत्वेन सत्त्वेन च सह साधर्म्यरूपः। तथा चायमपि न साधकः स्यात् ॥ ३३ ॥

वृ०—यदि च साधर्म्यमात्रं न साधकम्। अपि तु व्याप्तिसहितमित्यभिमतं

---

१ ख. घ. °साधर्म्यात्। प्र°। २ क. घ. प्रमर्थ्यं प्र°। ३ ख. घ. °त्यस्या°। ङ. त्यस्यासि°। ४ ख. घ. ङ. °षेधो न°।

हेतुत्वेनाभिधीयते । स चोभयथा भवति केनचित्समानः कुतश्चि-द्विशिष्टः । सामान्यात्साधर्म्यं विशेषाच्च वैधर्म्यम् । एवं साधर्म्यविशेषो हेतुः, नाविशेषेण साधर्म्यमात्रं वैधर्म्यमात्रं वा । साधर्म्यमात्रं वैधर्म्यमात्रं चाऽऽश्रित्य भवानाह-'साधर्म्यात्तुल्य-धर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः' ( ५ । १ । ३२ ) इति । एतदयुक्तमिति । अविशेषसमप्रतिषेधे च यदुक्तं तदपि वेदितव्यम् ॥ ३४ ॥

इत्यनित्यसमप्रकरणम् ॥ १४ ॥

---

नित्यमनित्यभावादनित्ये नित्य-त्वोपपत्तेर्नित्यसमः ॥ ३५ ॥

भा०--अनित्यः शब्द इति प्रतिज्ञायते तदनित्यत्वं किं शब्दे नित्य-मथानित्यम् । यदि तावत्सदा भवति धर्मस्य सदाभावाद्धर्मि-

---

तदा कृतकत्वे तदस्ति न तु सत्त्व इति विशेष इत्याह—साध्यसाधक-भावेन व्याप्यव्यापकभावेन, दृष्टान्ते प्रज्ञातस्य प्रमितस्य, तस्य हेतुत्वात्साध-कत्वात्, तस्य हेतुत्वस्य, उभयथाऽन्वयेन व्यतिरेकेण च, भावान्मदीयहेतौ सत्त्वात्, सत्त्वादिनाऽविशेष इति यदुक्तं तन्न भवति ॥ ३४ ॥

इत्यनित्यसमप्रकरणम् ॥ १४ ॥

---

वृ०—नित्यसमं लक्षयति—अनित्यस्य भावोऽनित्यत्वं तस्य नित्यं सर्व-कालं स्वीकारेऽनित्ये शब्दे नित्यत्वं स्यादित्यापादनं नित्यसमः । अयमाशयः—अनित्यस्य नित्यमस्वीकारेऽनित्यत्वाभावदशायां तस्यानित्यत्वं नेति तस्यापि नित्यत्वापत्तिः । नहि दण्डाभावदशायां दण्डीत्युच्यतेऽतोऽनित्यत्वस्य नित्यमेव स्वीकार इत्यभ्युपगन्तव्यम् । तथा च शब्दस्यापि नित्यत्वापत्तिः । तेन बाधः सत्प्रतिपक्षो वा । तद्देशनाभासा चेयम् । एवमनित्यत्वं यदि नित्यं कथं शब्दस्यानित्यतां कुर्यात् । नहि रक्तं महाजनं परस्य नीलतां संपादयति । अथानित्यं तदा तदभावदशायामनित्यत्वं न स्यादित्यादिकमूह्यम् । एतदनु-सारेण लक्षणमपि कार्यमित्याचार्याः । वयं तु अनित्यस्य भावो धर्मस्तस्य नित्यमभ्युपगमेऽनित्यत्वेनाभ्युपगतस्य नित्यत्वं स्यात् । यथा क्षितिः सकर्तृ-

णोऽपि सदाभाव इति *नित्यः शब्द इति । अथ न सर्वदा भवति अनित्यत्वस्याभावान्नित्यः शब्दः । एवं नित्यत्वेन मत्यवस्थानान्नित्यसमः ॥ ३५ ॥

भा०—अस्योत्तरम्—

प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः ॥ ३६ ॥

प्रतिषेध्ये शब्दे नित्यमनित्यत्वस्य भावादित्युच्यमानेऽनुज्ञातं शब्दस्यानित्यत्वम् । अनित्यत्वोपपत्तेश्च नानित्यः शब्द इति प्रतिषेधो नोपपद्यते । अथ नाभ्युपगम्यते । नित्यमनित्यत्वस्य भावादिति हेतुर्न भवतीति हेत्वभावात्प्रतिषेधानुपपत्तिरिति । उत्पन्नस्य निरोधादभावः शब्दस्यानित्यत्वं तत्र परिप्रश्नानुपपत्तिः । योऽयं परिप्रश्नस्तदनित्यत्वं किं शब्दे सर्वदा भवति अथ नेत्ययमनुपपन्नः । कस्मात् । उत्पन्नस्य यो निरोधादभावः शब्दस्य तदनित्यत्वम् । एवं च सति अधिकरणाधेयविभागो व्याघातान्नास्तीति । नित्यानित्यविरोधाच्च । नित्यत्वमनित्यत्वं

---

केत्यत्रानित्यक्षितेर्धर्मः सकर्तृकत्वं त्वया क्षितौ नित्यमुपेयते न वा । न चेत्तदा साध्याभावादेशतो बाधः । अथ क्षितौ नित्यमेव सकर्तृकत्वम् । विरुद्धम् । तद्देशनाभासा चेयमिति ब्रूमः ॥ ३५ ॥

वृ०—अत्रोत्तरमाह—प्रतिषेध्ये मत्पक्षे शब्दे सर्वदाऽनित्यभावादनित्यत्वादनित्ये शब्देऽनित्यत्वमुपपद्यते । नहि संभवति अनित्यत्वं नित्यम् । अस्ति अथ च तन्नित्यमिति व्याघातात् । न च नित्यमिति सर्वकालमित्यर्थः । तथा च शब्दस्यानित्यत्वे कथं सर्वकालमनित्यत्वसंबन्ध इति वाच्यम् । सर्वकालमित्यस्य यावत्सत्त्वमित्यर्थात् । अतस्त्वत्कृतः प्रतिषेधो न संभवति । मतान्तरे

---

* नहि सामान्यसमवायातिरिक्ता धर्मा नित्या धर्मी चानित्य इति संभवोऽस्तीति भावः ।

---

१ क. ग. ङ. च. °तिः । सोऽयं । २ क. ग च. तदा नि° ।

चैकस्य धर्मिणो धर्मौ विरुध्येते न संभवतः। तत्र यदुक्तं नित्यमनित्यत्वस्य भावान्नित्य एव तदवर्त*मानार्थमुक्तमिति ॥ ३६ ॥

इति नित्यसमप्रकरणम् ॥ १५ ॥

---

प्रयत्नकार्यानेकत्वात्कार्यसमः ॥ ३७ ॥

भा०—प्रयत्नानन्तरीयक+त्वादनित्यः शब्द इति। यस्य प्रयत्नानन्तरमात्मलाभस्तत्खल्वभूत्वा भवति यथा घटादिकार्यम्। अनित्यमिति च भूत्वा न भवतीत्येतद्विज्ञायते। एवमवस्थिते प्रयत्नकार्यानेकत्वादिति प्रतिषेध उच्यते। प्रयत्नानन्तरमात्मलाभश्च दृष्टो घटादीनां व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानाम्। तत्किं

---

तु अनित्येऽनित्यत्वोपपन्ने हेतोस्त्वपायः प्रतिषेधः कृतः। स न संभवतीत्यर्थः ॥ ३६ ॥

इति नित्यसमप्रकरणम् ॥ १५ ॥

---

वृ०—कार्यसमं लक्षयति—प्रयत्नकार्यस्य प्रयत्नसंपादनीयस्यानेकत्वादनेकविषयत्वात्। अयमर्थः—शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वं प्रयत्नकार्ये घटादौ प्रयत्नानन्तरोपलभ्यमाने कीलकादावपि दृष्टम्। तत्र द्वितीयं न तज्जन्यत्वसाधकम्। आद्ये त्वसिद्धम्। तथा च सामान्यत उक्ते हेतोरनभिमतविशेषनिराकरणेन प्रत्यवस्थानं कार्यसमः। असिद्धदेशनाभासा चेयम्। अथ वा प्रयत्नकार्याणां प्रयत्नकर्तव्यानां कर्तव्यप्रयत्नानामिति यावत्। तादृशानामनेकविधत्वादुक्तान्यस्य व्याघातकमुत्तरं कार्यसमः। तथा चास्याऽऽकृतिगणत्वात्परसूत्रानुदर्शितानामपि परिग्रहः। यथा—त्वत्पक्षे किंचिद्दूषणं

---

* अप्रासङ्गिकमित्यर्थः। + अयमाशयः—अत्र प्रयत्नानन्तरीयकत्वं नाम प्रयत्नानन्तरोत्पादोऽथवा प्रयत्नानन्तरोपलम्भः स्यात्। तत्र न तावत्पूर्वः कल्पः। असिद्धत्वात्। तस्मात्प्रयत्नानन्तरोपलम्भ आस्थेयः। तत्र कार्यसमप्रतिषेधमाह। तथाहि—प्रयत्नानन्तरमुपलब्धिर्द्विधा विषयात्मलाभपूर्विका विषयाभिव्यक्तिपूर्विका च। आद्या घटादीनाम्। अन्या व्यवहितानां मूलकीलकादीनां व्यवधानापोहात्। तत्किं प्रयत्नानन्तरमात्मलाभः शब्दस्याऽऽहोस्विदभिव्यक्तिरिति विशेषो नास्तीति कार्याविशेषेण प्रत्यवस्थानं कार्यसम इति।

प्रयत्नानन्तरमात्मलाभः शब्दस्याऽऽहो अभिव्यक्तिरिति विशेषो नास्ति । कार्याविशेषेण प्रत्यवस्थानं कार्यसमः ॥ ३७ ॥

भा०—अस्योत्तरम्—

**कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥**

सति कार्यान्यत्वेऽनुपलब्धिकारणोपपत्तेः प्रयत्नस्याहेतुत्वं शब्दस्याभिव्यक्तये । यत्र प्रयत्नानन्तरमभिव्यक्तिस्तत्रानुपलब्धिकारणं व्यवधानमुपपद्यते । व्यवधानापोहाच्च प्रयत्नानन्तरभाविनोऽर्थस्योपलब्धिलक्षणाऽभिव्यक्तिर्भवतीति न तु शब्दस्यानुपलब्धिकारणं किंचिदुपपद्यते । यस्य प्रयत्नानन्तरमपोहाच्छब्दस्योपलब्धिलक्षणाऽभिव्यक्तिर्भवतीति । तस्मादुत्पद्यते शब्दो नाभिव्यज्यत इति । हेतोश्चेदनैकान्तिकत्वमुपपाद्यतेऽनैकान्तिकत्वादसाधकः स्यादिति ॥ ३८ ॥

इति कार्यसमप्रकरणम् ॥ १६ ॥

भा०—यदि चानैकान्तिकत्वादसाधकम्—

**प्रति*षेधेऽपि समानो दोषः ॥ ३९ ॥**

प्रतिषेधोऽप्यनैकान्तिकः किंचित्प्रतिषेधति किंचिन्नेति अनैका-

---

भविष्यतीति शङ्काऽपि शाठीसमा । कार्यकारणभावस्योपकारनियतत्वेऽनवस्थेत्यनुपकारसमेत्यादि ॥ ३७ ॥

वृ०—अत्रोत्तरम्—शब्दस्य कार्यान्यत्वेऽकार्यत्वे प्रयत्नस्य वक्तृप्रयत्नस्याहेतुत्वमकारणत्वम् । इदं च तदा स्याद्यद्यनुपलब्धिकारणमावरणादिकमुपपद्यते । न च तच्छब्देऽस्तीत्यर्थः । आकृतिगणपक्षे तु कार्याणां जातीनामन्यत्वे नानाविधत्व इदमुत्तरं प्रयत्नस्य त्वदीयदूषणप्रयत्नस्याहेतुत्वमसाधकता साधकत्वाभावः । उपलब्धेः कारणस्य प्रमाणस्य निर्दोषवाक्यस्य योपपत्तिर्निर्दोषवाक्याधीनोपपादनं तदभावात्तद्वाक्यस्य स्वव्याघातकत्वादित्यर्थः ॥ ३८ ॥

इति कार्यसमप्रकरणम् ॥ १६ ॥

वृ०—कार्यसमप्रकरणस्यैवं तावज्जातिवादिनं प्रति सर्वत्र सदुत्तरेणैवो-

---

* तदेवं जात्युत्तरवादिनं प्रति साधनवादिना सर्वत्रैव सम्यक्समाधानं स्वसाधनस्य वक्तव्यम् । एवं सति तत्त्वनिर्णये कथापर्यवसानं भवति । यदि पुनर्वाद्यपि जातिवादिनं प्रति साधनाभासेन प्रत्यवतिष्ठेत ततः षट्पक्ष्यां सत्यां न तत्त्वनिर्णयावसाना कथा भवेदिति शिष्यहितः सूत्रकारः समाधानाभासवादिनं प्रति षट्पक्षीमवतारयति ।

न्तिकत्वादसाधक इति । अथवा शब्दस्यानित्यत्वपक्षे प्रयत्नानन्तरमुत्पादो नाभिव्यक्तिरिति विशेषहेत्वभावः । नित्यत्वपक्षेऽपि प्रयत्नानन्तरमभिव्यक्तिर्नोत्पाद इति विशेषहेत्वभावः । सोऽयमुभयपक्षसमो विशेषहेत्वभाव इत्युभयमप्यनैकान्तिकमिति ॥ ३९ ॥

सर्वत्रैवम् ॥ ४० ॥

भा०—सर्वेषु साधर्म्यप्रभृतिषु प्रतिषेधहेतुषु यत्र यत्राविशेषो दृश्यते तत्रोभयोः पक्षयोः समः प्रसज्यत इति ॥ ४० ॥

प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

भा०—योऽयं प्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वमापाद्यते सोऽयं प्रतिषेधस्य प्रतिषेधेऽपि समानः । तत्रानित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति साधनवादिनः स्थापना प्रथमः पक्षः ।

---

द्धारः कार्य इत्यभिहितं तदेवाभिमतं तन्निर्णयविजयफलकत्वं कथायां संपद्यते । असदुत्तरोद्भावने तु वन्ध्ययोः संप्रयोगवन्नाभिमतफलसिद्धिरिति व्युत्पादयितुं कथाभासरूपां षट्पक्षीं शिष्यशिक्षायै प्रदर्शयति-प्रयत्नानन्तरीयकत्वं न शब्देऽनित्यत्वं साधयति अनैकान्तिकत्वादिति यो दोषः स त्वत्पक्षेऽपि तुल्यः। प्रयत्नाभिव्यङ्ग्यत्वस्याप्यसाधकत्वात् । अथवाऽनैकान्तिकत्वादसाधक इति त्वया प्रतिषेधः कृतस्तत्राप्ययं दोषः समानः । न ह्यनैकान्तिकत्वं सर्वस्यैवासाधकत्वं साधयति । स्वस्यैवासाधकत्वासाधनत्वात् ॥ ३९ ॥

वृ०—सेयं मतानुज्ञा किं कार्यसमायामेव नेत्याह—एवं सर्वमसदुत्तरं सर्वत्रैव जातौ संभवतीत्यर्थः । यथा शब्दोऽनित्यः शब्दत्वादित्यत्र नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः स्यादिति साधर्म्यसमायामाकाशसाधर्म्यान्नित्यत्व आकाशवच्छब्दे परममहत्त्वं स्यादित्युत्कर्षसमा । एवमन्यत्राप्यूह्यम् । यद्यप्ययमतिदेशः षट्पक्ष्यनन्तरमेव कर्तुमुचितस्तथाऽपि त्रिपक्ष्यादिकमपि सूचयितुमत्रैवोक्तः । उभयासुज्ञत्वबोधफला हि षट्पक्षी । त्रिपक्ष्यादावपि तत्फलकत्वं तुल्यमिति भावः । तर्हि त्रिपक्ष्यामेव मध्यस्थेन पर्यनुयोज्योपेक्षणस्योद्भावने कथासमाप्तौ कुतः षट्पक्षीति चेत्पुंसां स्फुरणवैचित्र्येण तत्संभवात् ॥ ४० ॥

वृ०—तुल्यबलविरोधो विप्रतिषेधः । तथा च प्रतिषेधस्य यो विप्रतिषेधस्तत्र प्रतिषेधदोषवद्दोष इत्यर्थः । तथाहि—शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वा-

प्रयत्नकार्यानेकत्वात्कार्यसम इति दूषणवादिनः प्रतिषेधहेतुना द्वितीयः पक्षः। स च प्रतिषेध इत्युच्यते। तस्यास्य प्रतिषेधस्य प्रतिषेधेऽपि समानो दोष इति तृतीयः पक्षो विप्रतिषेध इत्युच्यते। तस्मिन्प्रतिषेधविप्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वं चतुर्थः पक्षः॥ ४१॥

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा॥ ४२॥**

भा०—प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तदुद्धारमनुक्त्वाऽनुज्ञाय प्रतिषेधविप्रषेधे तृतीये पक्षे समानमनैकान्तिकत्वमिति समानं दूषणं प्रसञ्जयतो दूषणवादिनो मतानुज्ञा प्रसज्यत इति पञ्चमः पक्षः॥ ४२॥

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोष इति॥ ४३॥**

भा०—स्थापनापक्षे प्रयत्नकार्यानेकत्वादिति दोषः स्थापनाहेतुवादिनः स्वपक्षलक्षणो भवति। कस्मात्। स्वपक्षसमुत्थत्वात्। सोऽयं स्वपक्षलक्षणं दोषमपेक्षमाणोऽनुद्धृत्यानुज्ञाय प्रतिषेधेऽपि समानो दोष इत्युपपद्यमानं दोषं परपक्ष उपसंहरति। इत्थं चानैकान्तिकः प्रतिषेध इति हेतुं निर्दिशति। तत्र स्वपक्षलक्षणापेक्षयोपपद्यमानदोषोपसंहारे हेतुनिर्देशे च सति अनेन परपक्षोऽ-

---

दिति स्थापनावादिनः प्रथमः पक्षः। प्रयत्नकार्यानेकत्वात्कार्यसम इतिवादिनो द्वितीयः पक्षः। प्रतिषेधाप्रतिषेधेऽप्यनैकान्तिकत्वं तुल्यमितिवादिनस्तृतीयः पक्षः। विप्रतिषेधस्तत्रापि तथैवानैकान्तिकत्वं तत्समानदोषोद्भावनं वा चतुर्थः पक्षः॥ ४१॥

वृ०—पञ्चमं पक्षमाह–प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तत्र मदुक्तं दोषमनुद्धृत्य प्रतिषेधे मदीयपक्षे तृतीये समानं दोषं प्रसञ्जयतस्तव मतानुज्ञानामकं निग्रहस्थानमित्यर्थः॥ ४२॥

वृ०—षष्ठं पक्षमाह—स्वपक्षस्थापनारूपः प्रथमः पक्षः, तं लक्षीकृत्य प्रवृत्तो द्वितीयः पक्षः स्वपक्षलक्षणः, तस्यापेक्षा समादरस्तत्र दोषानुद्धारम-

भ्युपगतो भवति । कथं कृत्वा । यः परेण प्रयत्नकार्यानैकत्वा-
दित्यादिनाऽनैकान्तिकदोष उक्तस्तमनुद्धृत्य प्रतिषेधेऽपि
समानो दोष इत्याह । एवं स्थापनां सदोषामभ्युपेत्य प्रतिषे-
धेऽपि समानं दोषं प्रसञ्जयतः परपक्षाभ्युपगमात्समानो दोषो
भवति । यथा परस्य प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधेऽपि
समानं दोषं प्रसञ्जयतो मतानुज्ञा प्रसज्यत इति । स खल्वयं
षष्ठः पक्षः । तत्र खलु स्थापनाहेतुवादिनः प्रथमतृतीयपञ्चम-
पक्षाः । प्रतिषेधहेतुवादिनो द्वितीयचतुर्थषष्ठपक्षाः । तेषां साध्वसा-
धुतायां मीमांस्यमानायां चतुर्थषष्ठयोरविशेषात्पुनरुक्तदोषप्रसङ्गः ।
चतुर्थपक्षे समानदोषत्वं परस्योच्यते प्रतिषेधविप्रतिषेधे प्रतिषे-
धदोषवद्दोष इति । षष्ठेऽपि परपक्षाभ्युपगमात्समानो दोष इति
समानदोषत्वमेवोच्यते नार्थविशेषः कश्चिदस्ति । समानस्तृती-
यपञ्चमयोः पुनरुक्तदोषप्रसङ्गः । तृतीयपक्षेऽपि प्रतिषेधेऽपि
समानो दोष इति समानत्वमभ्युपगम्यते । पञ्चमपक्षेऽपि प्रतिषे-
धप्रतिषेधे समानो दोषप्रसङ्गोऽभ्युपगम्यते नार्थविशेषः कश्चि-
दुच्यत इति । तत्र पञ्चमषष्ठपक्षयोरर्थाविशेषात्पुनरुक्तदोषः ।
तृतीयचतुर्थयोर्मतानुज्ञा । प्रथमद्वितीययोर्विशेषहेत्वभाव इति
षट्पक्ष्यामुभयोरसिद्धिः । कदा । षट्पक्षी यदा प्रतिषेधेऽपि
समानो दोष इत्येवं प्रवर्तते तदोभयोः पक्षयोरसिद्धिः । यदा तु
कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेरित्यनेन तृतीय-
पक्षो युज्यते तदा विशेषहेतुवचनात्प्रयत्नानन्तरमात्मलाभः

---

मिति फलितार्थः । तथा च मदीयपक्षे दोषमनुद्धाव्यैव स्वपक्षोपपादनं कर्तुं
यस्त्वया हेतुर्निर्दिष्टः प्रतिषेधेऽपि समानो दोष इति तावता तवापि मतानुज्ञा
वृत्तैवेत्यर्थः । तदेवं षट्पक्ष्यामुभयोरप्ययुक्तत्वादित्वादर्थासिद्धिः । यदि तु

शब्दस्य नाभिव्यक्तिरिति सिद्धः प्रथमपक्षः, न षट्पक्षी प्रवर्तत इति ॥ ४३ ॥

इति कथाभासप्रकरणम् ॥ १७ ॥

---

इति वात्स्यायनीये न्यायभाष्ये पञ्चमाध्यायस्याऽऽद्य-माह्निकम् ॥ १ ॥

---

भा०—विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति संक्षेपेणोक्तं तदिदानीं विभजनीयम् । निग्रहस्थानानि खलु पराजयवस्तून्यपराधाधिकरणानि प्रायेण प्रति*ज्ञाद्यवयवाश्रयाणि तत्त्ववादिनमतत्त्ववादिनं चाभिप्लवन्ते तेषां विभागः—

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थक-**

---

स्थापनावादी जातिवादिनं सदुत्तरेणैव दूषयति तदा षट्पक्षी न प्रवर्तत इति ॥ ४३ ॥

इति कथाभासप्रकरणम् ॥ १७ ॥

---

इति श्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ पञ्चमाध्यायस्याऽऽद्याह्निकम् ॥ १ ॥

वृ०—अथेदानीं निग्रहस्थानविशेषलक्षणाभिधानं तदेव चाऽऽह्निकार्थः । सप्त चेह प्रकरणानि । तत्र चाऽऽद्यं प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चक-

---

* अयं भावः—विषयान्तरे साध्यस्य साधनस्य वाऽबाधितत्वात्प्रकृते तद्धेतुना साधयितुमशक्यं तत्साध्यत्वेन तदसाधकं वा तत्साधनत्वेनोपाददानस्य वादिनः कर्तुरेव निग्रहः। तदुपादानं चाज्ञानेन विपरीतज्ञानेन वेति सामान्यतो द्वे एव निग्रहस्थाने । अवान्तरभेदाः पुनर्द्वाविंशतिः । साधयितुमशक्यस्य साध्यत्वेनोपादानादसाधकस्य च हेतोर्हेतुवाक्ये साधनत्वेनोपादानात्प्रतिज्ञादिविषयकाज्ञानविपरीतज्ञानवतः कर्तुर्निग्रहान्निग्रहस्थानस्य समवायेन कर्तैवाधिकरणं प्रतिज्ञादयस्तु विषयतयेति कर्त्राश्रयस्यापि निग्रहस्थानस्य प्रतिज्ञाद्यवयवाश्रयत्वे न विरोधः । तत्त्ववादिनाऽपि परोक्तदूषण आभासत्वाग्रहेण सम्यग्दूषणत्वग्रहेण वा तदाभासत्वाप्रदर्शने निग्रहात्तत्त्ववादिनोऽपि निग्रहस्थानाश्रयत्वं नानुपपन्नमिति ।

मविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥

॥ १ ॥

भा०—तानीमानि द्वाविंशतिधा विभज्य लक्ष्यन्ते—

प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥

साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानन्प्रतिज्ञां जहातीति प्रतिज्ञाहानिः । निदर्शनम्—ऐन्द्रियकत्वादनित्यः शब्दो घटवदिति कृतेऽपर आह दृष्टमैन्द्रियकत्वं सामान्ये नित्ये, कस्मान्न तथा शब्द इति प्रत्यवस्थिते, इदमाह यद्यैन्द्रियकं सामान्यं नित्यं कामं घटो नित्योऽस्त्विति ।

---

विशेषलक्षणप्रकरणम् । अन्यानि च यथास्थानं वक्ष्यन्ते । तत्र विशेषलक्षणार्थमादौ विभजते । अत्र चस्त्वर्थे । तेनैतानि तु निग्रहस्थानानि । न पुनरपस्मारादिनाऽननुभाषणादिकं न वा झटिति संवरणेन तिरोहिता च वाणीत्यर्थो लभ्यत इति प्राञ्चः । नव्यास्तु चकारोऽनुक्तसमुच्चये । तेन दृष्टान्ते साधनवैकल्यादीनां परिग्रहः ॥ १ ॥

वृ०—तत्र क्रमेण प्रतिज्ञाहान्यादीनां लक्षणेषु वक्तव्येषु प्रथमोद्दिष्टां प्रतिज्ञाहानिं लक्षयति—प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः परपक्षः । स्वः स्वीयः दृष्टान्तो यत्र स स्वदृष्टान्तः पक्षः । तथा च स्वपक्षे परपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिः । स्वयं विशिष्याभिहितपरित्याग इति फलितार्थः । सिद्धान्तस्तु स्वयं विशिष्य नाभिधीयत इति नापसिद्धान्तसांकर्यम् । सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात्पञ्चधा भवति । यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोऽयमित्युत्तरितेऽस्तु तर्हि घट एव पक्ष इति । एवं तत्रैवैन्द्रियकत्वादिति हेतोरनैकान्तिकत्वामिति प्रत्युक्तेऽस्तु कृतकत्वादिति हेतुरिति । एवं पर्वतो वह्निमान्धूमादयोगोलकवदित्युक्ते दृष्टान्तः साधनविकल इति प्रत्युक्तेऽस्तु

स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति । पक्षं जहत्प्रतिज्ञां ज* हातीत्युच्यते प्रतिज्ञाश्रयत्वात्पक्षस्येति ॥ २ ॥

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्त-
दर्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥

भा०—प्रतिज्ञातार्थोऽनित्यः शब्द ऐन्द्रियकत्वाद्घटवदित्युक्ते योऽस्य प्रतिषेधः प्रतिदृष्टान्तेन हेतुव्यभिचारः सामान्यमैन्द्रियकं नित्यमिति तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पादिति । दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात्सामान्यमैन्द्रियकं सर्वगतम्, ऐन्द्रियकस्त्वसर्वगतो घट इति धर्मविकल्पात् । तदर्थनिर्देश इति । साध्यसिद्ध्यर्थम् । कथम् । यथा घटोऽसर्वगत एवं शब्दोऽप्यसर्वगतो घटवदेवानित्य इति । तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा । असर्वगत इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरम् । तत्कथं निग्रह-

---

तर्हि महानसवदिति । एवमत्रैव सिद्धसाधने च प्रत्युक्तेऽस्तु तर्हीन्धनवानिति । अन्यहानिस्तु विशेषणहान्यादिः । यथा तत्रैव नीलधूमादित्युक्तेऽसमर्थविशेषणत्वेन प्रत्युक्तेऽस्तु तर्हि धूमादिति हेतुरित्यादि ॥ २ ॥

वृ०—प्रतिज्ञान्तरं लक्षयति—प्रतिज्ञातस्यार्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया धर्मस्य धर्मान्तरस्य विशिष्टः कल्पो विकल्पस्तस्मात् । विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनमिति फलितार्थः । प्रतिषेधे इत्यनेन झटिति संवरणे विलम्बेनापि स्वयं दूषणं विभाव्य विशेषणे न दोष इत्युक्तम् । प्रतिज्ञातार्थस्येत्युपलक्षणं हेत्वतिरिक्तार्थस्येति तत्त्वम् । तेनोदाहरणान्तरमुपनयान्तरं च प्रतिज्ञान्तरत्वेन संगृहीतं भवति । इदं च पक्षसाध्यविशेषणभेदात्प्रत्येकं द्विविधम् । यथा शब्दोऽनित्य इत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्ष इति प्रतिज्ञान्तरम् । न चेदमर्थान्तरम् । प्रकृतोपयोगात् । न चेयं प्रतिज्ञाहानिः पूर्वोक्तस्यापरित्यागात् । एवं पर्वतो वह्निमान्सुरभिमलिनधूमवत्त्वा-

---

* अयं भावः—ऐन्द्रियकत्वस्य सामान्ये नित्येऽपि प्रदर्शनेन तस्य नित्यत्वव्याप्यता न संभवतीति चोदिते दृष्टान्ते घटेऽपि नित्यत्वमभ्युगच्छतो वादिन ऐन्द्रियकत्वस्य नित्यत्वव्याप्यत्वेनावधारणात्तेन हेतुना शब्देऽपि नित्यताप्राप्तेः प्रतिज्ञाहानिरिति ।

स्थानमिति । न प्रतिज्ञायाः साधनं प्रतिज्ञान्तरं किंतु हेतुदृष्टान्तौ साधनं प्रतिज्ञायाः । तदेतदसाधनोपादानमनर्थकमिति । आनर्थक्यान्निग्रहस्थानमिति ॥ ३ ॥

प्रतिज्ञाहेत्वोर्विरोधः प्रति*ज्ञाविरोधः ॥ ४ ॥

भा०—गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा । रूपादितोऽर्थान्तरस्यानुपलब्धेरिति हेतुः । सोऽयं प्रतिज्ञाहेत्वोर्विरोधः । कथम् । यदि गुणव्यतिरिक्तं द्रव्यम्, रूपादिभ्योऽर्थान्तरस्यानुपलब्धिर्नोपपद्यते । अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः, गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते । गुणव्यतिरिक्तं च द्रव्यं रूपादिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते व्याहन्यते न संभवतीति ॥ ४ ॥

---

दित्युक्तेऽसमर्थविशेषणत्वेन च परेण प्रत्युक्ते कृष्णागुरुप्रभववह्निमानित्यत्र । एवं तादृशवह्नौ साध्ये यः सुरभिमलिनधूमवान्स वह्निमानित्युदाहरणे न्यूनत्वेन प्रत्युक्ते स तादृशवह्निमानित्यत्र । एवमन्यदप्यूह्यम् ॥ ३ ॥

वृ०—प्रतिज्ञाविरोधं लक्षयति—अत्र च प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे । तथा च कथायां स्ववचनार्थविरोधः प्रतिज्ञाविरोधः । यद्यपि काञ्चनमयः पर्वतो वह्निमान्, पर्वतः काञ्चनमयवह्निमान्, ह्रदो वह्निमान्ह्रदत्वात्, पर्वतो वह्निमान्काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसांकर्यं तथाऽप्युपधेयसंकरेऽप्युपाधेरसांकर्यान्न दोषः । न चासंकीर्णस्थलाभावः । पर्वतो वह्निमान्धूमाद्यो यो धूमवान्स निरग्निरित्युदाहरणे निरग्निश्चायमित्युपनये च तत्सत्त्वात् । एवं विनिगमनेऽपि बोध्यम् ॥ ४ ॥

---

* अत्रेदं बोध्यम्—प्रतिज्ञाहेत्वोरिति प्रतियोगिद्वयमात्रोपलक्षणं तेन दृष्टान्तादयोऽपि प्रतियोगिन उन्नेयाः । तथा च येषां वाक्यगतानां पदार्थानां मिथो व्याघातः प्रतीयते प्रमाणान्तरं च विरोधकं स विरोधो नाम निग्रहस्थानमिति फलति । एवं च यत्र प्रतिज्ञा हेतुना विरुध्यते प्रतिज्ञा स्ववचनेनैव वा हेतुर्वा दृष्टान्तेन प्रमाणान्तरेण वा प्रतिज्ञाहेतू तस्य सर्वस्यापि अनेनैव संग्रह इति भावः ।

---

**पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ॥ ५ ॥**

भा०—अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते परो ब्रूयात्—सामान्यमैन्द्रियकम्, न चानित्यम्, एवं शब्दोऽप्यैन्द्रियको न चानित्य इति। एवं प्रतिषिद्धे पक्षे यदि ब्रूयात्कः पुनराहानित्यः शब्द इति। सोऽयं प्रतिज्ञातार्थनिह्नवः प्रतिज्ञासंन्यास इति॥ ५॥

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥**

भा०—निदर्शनम्—एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा। कस्माद्धेतोः। एकप्रकृतीनां विकाराणां परिमाणात्। मृत्पूर्वकाणां शरावादीनां दृष्टं परिमाणं यावान्प्रकृतेर्व्यूहो भवति तावान्विकार इति। दृष्टं च प्रतिविकारं परिमाणम्। अस्ति चेदं परिमाणं प्रतिव्यक्तम्। तदेकप्रकृतीनां च विकाराणां परिमाणात्पश्यामो व्यक्तमिदमेकप्रकृतीति। अस्य व्यभिचारेण प्रत्यवस्थानं नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति। एवं प्रत्यवस्थिते, आह—एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात्। सुखदुःखमोहसमन्वितं ह्[1]इदं व्यक्तं परिमितं गृह्यते। तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति। तदिद-

---

वृ०—प्रतिज्ञासंन्यासं लक्षयति—पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपलाप इत्यर्थः। यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते क एवमाह शब्दोऽनित्य इति॥ ५॥

वृ०—हेत्वन्तरं लक्षयति—अत्र च हेतावित्यनेन हेत्ववयवांशो न विवक्षितोऽपि तु साधकांशः। स च हेत्ववयवस्थ उदाहरणादिस्थो वा। अविशेषोक्त इति पूर्वोक्त इत्यर्थः। विशेषमिच्छत इति साभिप्रायम्। तेन परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ विशेषणान्तरप्रक्षेपोऽन्यहेतुकरणं वा द्वयमपि हेत्वन्तरम्। तथा च परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टवचनं हेत्वन्तरम्। हेतौ विशेषणदान एव हेत्वन्तर-

---

१ ग. ङ. परमिदं।

प्रविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति । सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वान्निग्रहस्थानम् । हेत्वन्तर-वचने सति यदि हेत्वर्थनिदर्शनो दृष्टान्त उपादीयते, नेदं व्यक्त-मेकप्रकृति भवति प्रकृत्यन्तरोपादानात् । अथ नोपादीयते । दृष्टान्ते हेत्वर्थस्यानिदर्शितस्य साधकभावानुपपत्तेरानर्थक्याद्धेतो-रनिवृत्तं निग्रह*स्थानमिति ॥ ६ ॥

इति प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चक-
विशेषलक्षणप्रकरणम् ॥ १ ॥

---

**प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम् ॥ ७ ॥**

भा०—यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृ-तायां ब्रूयात्—नित्यः शब्दः, अस्पर्शत्वादिति हेतुः । हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तपदम् । पदं च नामाख्यातोप-सर्गनिपाताः । अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः

---

मिति प्राञ्चः । पूर्वोक्तत्वं हेत्ववयव उदाहरणादौ वा । यथा शब्दोऽनित्यो बाह्येन्द्रियप्रत्यक्षत्वादित्युक्ते सामान्येऽनैकान्तिकत्वेन च प्रत्युक्ते सामान्यवत्त्वे सतीति विशेषणम् । एवं विशिष्टहेतुमुक्त्वा यद्बाह्येन्द्रियप्रत्यक्षं तदनित्यमित्यु-दाहरणे न्यूनत्वेन प्रत्युक्ते विशिष्टोक्तौ । एवमुपनयविशेषणेऽपि ॥ ६ ॥

इति प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेष-
लक्षणप्रकरणम् ॥ १ ॥

---

वृ०—अर्थान्तरं लक्षयति—प्रकृतात्प्रकृतोपयुक्तात् । ल्यब्लोपे पञ्चमी । तेन प्रकृतोपयुक्तमर्थमुपेक्ष्यासंबद्धार्थाभिधानमर्थान्तरम् । प्रकृतानाकाङ्क्षिता-

---

* साधनान्तरोपादाने पूर्वस्य हेतोरसामर्थ्यख्यापनान्निग्रहस्थानत्वं सामर्थ्ये वा हेत्वन्तरं व्यर्थं भवति । अयमाशयः—दत्तोत्तरावसर एव वादिनि सति यदि प्रतिवादी हेतुं व्यभिचारयति वादी च तृतीयपदके स्थितो हेतुं विशेषयति तदा साधनान्तरोपादानान्निगृ-ह्यतामाहोस्विदनैकान्तिकोपादानात् । न तावदनैकान्तिकसाधनोपादानात् । हेतुविशेषणेन समाहितत्वात् । तस्माद्धेत्वन्तरवचनादेव निगृह्यते । पूर्वस्य हेतोर्वस्तुतोऽसमर्थस्यासामर्थ्य-ख्यापनार्थत्वात् । सामर्थ्ये वा हेत्वन्तरानर्थक्यमिति ।

---

१ म. ङ. °बन्धा° ।

शब्दो * नाम, क्रियाकारकसमुदायः। कारकसंख्याविशिष्ट-क्रियाकालयोगाभिधाय्याख्यातम्। धात्वर्थ+मात्रं च काला-भिधानविशिष्टम्। योगेष्वर्थादभिद्यमानरूपा निपाताः। उपसृ-ज्यमानाः क्रियावद्योतका उपसर्गा इत्येवमादि तदर्थान्तरं वेदितव्यमिति ॥ ७ ॥

वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥

भा०—यथा नित्यः शब्दः कचटतपाः जबगडदशत्वात्, झभञ्घ-ढधषवदिति। एवं प्रकारं निरर्थकम्। अभिधानाभिधेयभावानु-पपत्तावर्थगतेरभावाद्वर्णा एव क्रमेण निर्दिश्यन्त इति ॥ ८ ॥

परिषत्प्रतिवादिभ्यां त्रिरभिहित-मप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥

भा०—यद्वाक्यं परिषदा प्रतिवादिना च × त्रिरभिहितमपि न

---

भिधानमिति फलितार्थः। यथा शब्दोऽनित्यः कृतकत्वादित्युक्त्वा शब्दो गुणः स चाऽऽकाशस्येत्यादि ॥ ७ ॥

वृ०—निरर्थकं लक्षयति—वर्णानां क्रमेण निर्देशो जबगडेत्यादिप्रयोगस्त-त्तुल्यो निर्देशोऽनर्थकं निग्रहस्थानम्। अवाचकपदप्रयोग इति फलितार्थः। वाच-कत्वं शक्त्या निरूढलक्षणया शास्त्रपरिभाषया वा बोध्यम्। समयबन्धव्यति-रेकेणेति विशेषणीयम्। तेन यत्रापभ्रंशेन विचारः कर्तव्य इति समयसंबन्धस्त-त्रापभ्रंशे न दोषः। झटिति संवरणे तु न दोष इत्युक्तप्रायम्। अस्य संभवः प्रमादादित्यवधेयम् ॥ ८ ॥

वृ०—अविज्ञातार्थं लक्षयति—त्रिरभिहितं वादिनेति शेषः। त्रिरभिधानं

---

* अभिधेयस्येत्याद्युक्तो नामपदार्थो बोध्यः। तस्यैव फलितार्थमाह—क्रियाकारकसमु-दाय इति। + उक्तव्याख्यया प्रकृतिप्रत्ययविशिष्टः समुदाय आख्यातशब्दार्थः सिद्धः। तद्घ-टकप्रकृतेरर्थस्तु कालाभिधानविशिष्टः। कालोऽभिधीयतेऽनेन भ्वादिशब्देन तद्विशिष्टः क्रियारूपोऽर्थः। धातुस्तु क्रियाकालवाचक इति यावत्। × वादिना त्रिरभिहितमपि परिषदा प्रतिवादिना च न विज्ञायत इत्यन्वयः। अविज्ञाने हेतुः श्लिष्टशब्दत्वादिः। त्रिर-भिधाने सति प्रायेण बोधानुत्पत्तिर्नोपपद्यत इति त्रिरित्युक्तमिति बोध्यम्।

---

१ ङ. °रकः सं°। २ ख. घ. °शिष्टः क्रि°।

विज्ञायते श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येवमादिना कारणेन तदविज्ञातमविज्ञातार्थम् । असामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानमिति ॥ ९ ॥

पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थ * कम् ॥ १० ॥

भा०—यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्येणान्वययोगो नास्तीत्यसंबद्धार्थत्वं गृह्यते तत्समुदायार्थस्यापायादपार्थकम् । यथा

---

चान्वयधानादिनाऽबोधनिरासाय । परिषत्प्रतिवाद्यन्यतरेण विज्ञाते तु नाविज्ञातार्थमिति भावः । तथा चावहिताविकल्प्युत्पन्नपरिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगोऽविज्ञातार्थमिति । वाचकेत्यनेन निरर्थकापार्थकव्युदासः । अत्र च पराज्ञानापादनेन मम जयो भविष्यतीति भ्रमादुक्तिसंभवः । न च यथाकथंचित्परो जेतव्य इत्यज्ञानापादनं न्याय्यमेवेति वाच्यम् । तथा सति भङ्गकाले परमदुर्बोधयत्किंचिदभिधानेनैव सर्वत्र जयसंभवात् । एतस्य त्रेधा संभवः । असाधारणतन्त्रमात्रप्रसिद्धम्—यथा पञ्च स्कन्धादयो बौद्धानाम् । तत्र रूपादयः पञ्चेन्द्रियाणि च रूपस्कन्धः । सविकल्पकं संज्ञास्कन्धः । रागद्वेषाभिनिवेशाः संस्कारस्कन्धः । सुखदुःखे वेदनास्कन्धः । निर्विकल्पं ज्ञानस्कन्धः । द्वितीयमतिप्रसक्तयोगमनपेक्षितरूढिकम्—यथा कश्यपतनयधृतिहेतुरयं त्रिनयनसमाननामधेयवांस्तत्केतुमत्त्वादित्यादि । तृतीयं श्लिष्टम्—यथा श्वेतो धावतीत्यादि । एवमतिद्रुतोच्चारितादिकमपीति भाष्यम् । अत्र नाऽऽद्यस्य संभवः । उभयतन्त्राभिज्ञमध्यस्थे सत्युभयतन्त्राभिज्ञयोरेव विचारसंभवादिति चेत् । सत्यम् । तथाऽपि यत्र नैयायिकमीमांसकयोर्विचारेऽन्यतरो बौद्धतन्त्रादिपरिभाषया वदति तत्र निग्रह इत्याशयः । तत्रापि चेद्यया कयाचित्परिभाषयोच्यतामिति परः प्रौढ्या वदति न तत्राऽऽद्यस्योपादानमिति । उत्तरयोस्तु न सर्वथैवेति ॥ ९ ॥

वृ०—अपार्थकं लक्षयति—पौर्वापर्यं कार्यकारणभावस्तस्यायोगादसंभवाच्छाब्दबोधजनकाकाङ्क्षाज्ञानाद्यभावादिति फलितार्थः । अप्रतिसंबद्धोऽसंबद्धोऽर्थः प्रयोजनं शाब्दबोधरूपं यत्र । यद्यपि दश दाडिमानि षडपूपाः कुण्डमजाजिन-

---

* ननु निरर्थकापार्थकयोः समानार्थत्वेनान्यतरवैयर्थ्यमिति चेत् । नैवम् । वाच्यार्थशून्यत्वं निरर्थकत्वं समुदायार्थशून्यत्वमपार्थकत्वमिति भेदात् ।

दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डोऽधरोरुकमेतत्कुमार्याः पाय्यं तस्याः पिताऽप्रतिशीन इति ॥ १० ॥

इत्यभिमतवाक्यार्थाप्रतिपादकनिग्रहस्थानचतुष्टयप्रकरणम् ॥ २ ॥

---

## अवयवविपर्यासवचन * मप्राप्तकालम् ॥ ११ ॥

भा०—प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात्क्रमः । तत्रावयवविपर्यासेन वचनमप्राप्तकालमसंबद्धार्थं निग्रहस्थानमिति ॥ ११ ॥

## हीनमन्यतमेनाप्य + वयवेन न्यूनम् ॥ १२ ॥

भा०—प्रतिज्ञादीनामवयवानामन्यतमेनाप्यवयवेन हीनं न्यूनं निग्र-

---

मित्यादावचान्तरवाक्यादर्थबोधसत्त्वादव्याप्तिः, अतिव्याप्तिश्च निरर्थके तथाऽप्यभिमतवाक्यार्थबोधानुकूलाकाङ्क्षादिशून्यबोधजनकपदत्वं तत् । अविज्ञातार्थे तु स्वस्य बोधो भवत्येवेति नातिव्याप्तिः । उदाहणं तु अयोग्यानासन्नानाकाङ्क्षवाक्यम् ॥ १० ॥

इत्यभिमतवाक्यार्थाप्रतिपादकनिग्रहस्थानचतुष्टयप्रकरणम् ॥ २ ॥

---

वृ०—अप्राप्तकालं लक्षयति—अवयवस्य कथैकदेशस्य विपर्यासो वैपरीत्यम् । तथा च समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानं पर्यवसन्नम् । तत्रायं क्रमः—वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासा उद्धरणीया इत्येकः पादः । प्रतिवादिनश्च तत्रोपालम्भो द्वितीयः पादः । प्रतिवादिनः स्वपक्षसाधनं तत्र हेत्वाभासोद्धरणं चेति तृतीयः पादः । जयपराजयव्यवस्था चतुर्थः पादः । एवं प्रतिज्ञाहेत्वादीनां क्रमः । सभाक्षोभव्यामोहादिना व्यत्यस्ताभिधानमप्राप्तकालमिति ॥ ११ ॥

वृ०—न्यूनं लक्षयति—अवयवेन स्वशास्त्रसिद्धेन तेन सौगतस्य ह्यवय-

---

* प्रतिज्ञादिप्रयोगस्य क्रमिकतायाः प्रथमाध्याये व्यवस्थापितत्वादुव्युत्क्रमेण प्रयोगे सति झटिति विवक्षितार्थासिध्याऽऽर्थक्रमेण शब्दप्रयोगस्य कर्तुमुचितत्वेन तदुल्लङ्घने वादिनोऽसामर्थ्योन्नयनान्निग्रहस्थानमिति भावः । + अवयवपञ्चकमध्य एकतमस्याप्यनुपादाने विवक्षितार्थासिद्धेः प्रथमाध्याये निर्णीतत्वादिति भावः ।

---

२ क. ग. च. °द्धार्थकाले नि° ।

इस्थानं साधनाभावे साध्यासिद्धिरिति ॥ १२ ॥

हेतूदाहरणाधिकमधिकम् ॥ १३ ॥

भा०—एकेन कृतत्वादन्यतरस्याऽऽनर्थक्य*मिति। तदेतन्नियमा-
+भ्युपगमे वेदितव्यमिति ॥ १३ ॥

इति स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रक-
रणम् ॥ ३ ॥

---

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥

भा०—अन्यत्रानुवादाच्छब्दपुनरुक्तमर्थपुनरुक्तं वा। नित्यः शब्दो
नित्यः शब्द इति शब्दपुनरुक्तम्। अर्थपुनरुक्तमनित्यः शब्दो

---

वाभिधानेऽपि न न्यूनत्वम्। नन्ववयवहीनत्वमवयवत्वावच्छिन्नाभावः। तथा
चाकथनमेव स्यादत आह—अन्यतमेनापीति। तथा च यत्किंचिदवयवशू-
न्यावयवाभिधानं फलितम्। न चायमपसिद्धान्तः। सिद्धान्तविरुद्धानभ्युपग-
मात्। अपितु सभाक्षोभादिनाऽनभिधानात् ॥ १२ ॥

वृ०—अधिकं लक्षयति—हेतूदाहरणेत्युपलक्षणम्। दूषणाद्यधिकमपि
बोध्यम्। कृतकर्तव्यापुनरुक्ताभिधानमिति फलितम्। अनुवादस्तु न कृतक-
र्तव्यः साभिप्रायत्वात्। प्रतिज्ञाधिक्यं च पुनरुक्तम्। धूमादालोकान्महानस-
वच्चत्वरवदित्यादिकं तु विना समयबन्धं दाढर्यादिभ्रमादुक्तमधिकम्। यथा
महानसं महानसवदिति तु नाधिकं किंतु पुनरुक्तम् ॥ १३ ॥

इति स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणम् ॥ ३ ॥

---

वृ०—पुनरुक्तं लक्षयति—पुनर्वचनं पुनरुक्तं तस्य विभागार्थं शब्दार्थ-
योरिति। तेन शब्दपुनरुक्तमर्थपुनरुक्तं च लभ्यते। अनुवादेऽतिव्याप्तिवारणा-
यान्यत्रानुवादादिति। अनुवादान्यत्वे सतीत्यर्थः। निष्प्रयोजनं पुनरभिधानं
हि पुनरुक्तम्। अनुवादस्तु व्याख्यारूपः सप्रयोजनक एवेति भावः। तथा च

---

* एकेन हेतुना दृष्टान्तेन वा साध्यसिद्धौ निष्पन्नायां हेत्वन्तरस्य दृष्टान्तान्तरस्य वाऽसाधकत्वेनासाधनस्य साधनबुद्ध्या प्रयोगे विप्रतिपत्तेः सत्त्वादिति भावः।

+ एकस्यैव हेतोर्दृष्टान्तस्य वा प्रयोगः कर्तव्य इति नियमाभ्युपगमेऽयं दोषः। तद-
नभ्युपगमे तु संभवतामनेकेषामपि प्रयोगे न काचित्क्षतिरिति भावः।

निरोधधर्मको ध्वान इति। * अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः। यथा—'हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्' (१।१।३९।) इति॥ १४॥

**अर्थादापन्नस्य स्वशब्देन पुनर्वचनम्॥ १५॥**

भा०—पुनरुक्तमिति प्रकृतम्। निदर्शनम्—उत्पत्तिधर्मकत्वादनित्यमित्युक्त्वाऽर्थादापन्नस्य योऽभिधायकः शब्दस्तेन स्वशब्देन ब्रूयादनुत्पत्तिधर्मकं नित्यमिति तच्च पुनरुक्तं वेदितव्यम्। अर्थसंप्रत्ययार्थे शब्दप्रयोगे प्रतीतः सोऽर्थोऽर्थापत्त्येति॥ १५॥

**विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्॥ १६॥**

भा०—विज्ञातस्य वाक्यार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य

---

समानार्थकपूर्वानुपूर्वीकशब्दप्रयोगः शब्दपुनरुक्तम्। समानार्थकभिन्नानुपूर्वीकशब्दस्य निष्प्रयोजनं पुनरभिधानमर्थपुनरुक्तम्। आद्यं यथा घटो घट इति। द्वितीयं यथा घटः कलश इति। एतस्य प्रमादादिना संभवः॥ १४॥

वृ०—पुनरुक्तप्रभेदान्तरमाह—पुनरुक्तमित्यनुवर्तते। यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकी प्रतिपत्तिर्भवति तस्य तेन रूपेण पुनरभिधानं पुनरुक्तम्। इदमेव चार्थपुनरुक्तमिति गीयते। यथा वह्निरुष्ण इति पूर्वपदाक्षिप्तोक्तिरियम्। उष्णो वह्निरित्युत्तरपदाक्षिप्तोक्तिः। एवं बहिरस्ति गेहे नास्तीति विध्याक्षिप्तोक्तिः। जीवन्गेहे नास्ति बहिरस्तीति निषेधाक्षिप्तोक्तिः। पुनरुक्तत्रैविध्यं चेदं भाष्यादिसंमतम्। अन्ये तु शब्दपुनरुक्तं द्विविधम्। तस्यैव शब्दस्य पुनराभिधानं पर्यायेणाभिधानम्। अन्यत्पुनरर्थपुनरुक्तमित्याहुः॥ १५॥

वृ०—अननुभाषणं लक्षयति—परिषदा विज्ञातस्य विशिष्य बुद्धार्थस्य वादिना त्रिरभिहितस्य तथा च प्रथमवचनेऽननुभाषणे वादिना वारत्रयं वाक्यमिति दर्शितम्। तथा च त्रिरभिधानेऽपि यत्रानुभाषणविरोधी व्यापारस्तत्राननुभाषणं निग्रहस्थानमित्यर्थः। अज्ञानसांकर्यनिरासायाज्ञानमनाविष्कुर्वतेति। विक्षेपसांकर्यनिरासाय कथामविच्छिन्दतेति च विशेषणीयमित्याचार्याः। न

---

* अस्य क्वचित्सूत्रत्वेनोल्लेखो दृश्यते।

---

१ क. ग. घ. 'प्यनुच्चा°।

यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानमिति। अप्रत्युच्चारयन्किमाश्रयं परपक्षप्रतिषेधं ब्रूयात् ॥ १६ ॥

अविज्ञातं चाज्ञानम् ॥ १७ ॥

भा०—विज्ञातार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदविज्ञातं तदज्ञानं निग्रहस्थानमिति। अयं खल्वविज्ञाय कस्य प्रतिषेधं ब्रूयादिति ॥ १७ ॥

उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १८ ॥

भा०—परपक्षप्रतिषेध उत्तरम्। तद्यदा न प्रतिपद्यते तदा निगृहीतो भवति ॥ १८ ॥

कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ॥ १९ ॥

भा०—यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति 'इदं मे करणीयं विद्यते तस्मिन्नवसिते कथयिष्यामि' इति विक्षेपो नाम निग्रह-

---

चाप्रतिभासांकर्यम्। उत्तरप्रतिपत्तावपि सभाक्षोभादिनाऽननुभाषणसंभवात्। तदिदं चतुर्धा—एकदेशानुवादात्, विपरीतानुवादात्, केवलदूषणोक्त्या, स्तम्भेन, वेति। सर्वनामपदेनानुवादात्पञ्चममित्याचार्याः। क्वचिदज्ञानाप्रतिभाननुभाषणासांकर्यं यन्निश्चेतुं शक्यते तदेवोद्भाव्यम् ॥ १६ ॥

वृ०—अज्ञानं लक्षयति—भावे क्तः। चकारश्च परिषदा विज्ञातस्येत्याद्यनुकर्षणार्थः। तथा च परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याप्यविज्ञानमित्यर्थः। इदं च किंविदसि बुध्यत एव नेत्याद्याविष्करणेन ज्ञातुं शक्यत इति ॥ १७ ॥

वृ०—अप्रतिभां लक्षयति—उत्तरार्हे परोक्तं बुद्ध्वाऽपि यत्रोत्तरसमय उत्तरं न प्रतिपद्यते तत्राप्रतिभा निग्रहस्थानम्। न चात्राननुभाषणस्याऽऽवश्यकत्वात्तदेव दूषणमस्त्विति वाच्यम्। परोक्तानानुवादे हि तत्। यत्र परोक्तमनूद्यापि नोत्तरं प्रतिपद्यते तत्रासांकर्यात्। स्वसूचनश्लोकपाठाद्युन्नेया चेयम् ॥ १८ ॥

वृ०—विक्षेपं लक्षयति—कार्यव्यासङ्गात्कार्यव्यासङ्गमुद्भाव्येत्यर्थः। ल्यब्लोपे पञ्चमी। कार्यव्यासङ्गश्चासंभवत्कालान्तरकत्वेनाऽऽरोपितस्तेन तादृशकथाविच्छेदो विक्षेपः। तेन राजपुरुषादिभिराकारणे गृहजनादिभिर्वाऽऽवश्यककार्यार्थमाकारणे स्वगृहदाहादिकं पश्यतो गमने वा शिरोरोगादिना प्रतिबन्धे वा न

स्थानम्। एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यत इति ॥ १९ ॥

**स्वपक्षदोषाभ्युपगमात्परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ २० ॥**

भा०—यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्यानुद्धृत्य वदाति भवत्पक्षेऽपि समानो दोष इति स स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषं प्रसञ्जयन्परमतमनुजानातीति मतानुज्ञा नाम निग्रहस्थानमापद्यत इति ॥ २० ॥

**निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥ २१ ॥**

भा०—पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः, तस्योपेक्षणं निग्रहस्थानं प्राप्तोऽसीत्यननुयोगः। एतच्च कस्य पराजय इत्य-

---

विक्षेपः। ननु कार्यव्यासङ्गोद्भावनं कुतः, सभाक्षोभादिना चेदमननुभाषणमेव, उत्तराप्रतिपत्त्या चेदप्रतिभैवेति चेन्न। उत्तरावसराभावात्। वस्तुतस्तूत्तरस्फूर्तावपि तद्दूषणसंभावनया विक्षेपसंभवात्। यथा—क्षितिः सकर्तृका कार्यत्वादित्युक्तम्, अत्राङ्कुरे व्यभिचारस्तावन्मयोद्भाव्यस्तत्र चेदयं पक्षसमत्वं ब्रूयात्तदा मे किमुत्तरमतोऽत्र महार्णवलिखितं मया च विचारितं किंचित्कार्यमुद्भाव्य गृहे गत्वा दृश्यत इत्येवं विक्षेपसंभवात् ॥ १९ ॥

वृ०—मतानुज्ञां लक्षयति—दोषाभ्युपगमः दोषमनुद्धृत्येत्यर्थः। यथा शब्दो नित्यः श्रावणत्वादित्युक्ते ध्वनावनैकान्तिकत्वेन हेत्वाभासोऽयमित्युक्तौ शब्दोऽनित्यः कृतकत्वादिति साधिते ध्वनेरपि पक्षत्वान्न दोष इत्युक्तावसिद्धत्वात्तत्रापि हेत्वाभासोऽयमित्युक्तौ सोऽयं मतानुज्ञया निगृहीतः स्यादप्रतिषिद्धमनुमतं भवतीति स्वपक्षे दोषाभ्युपगमात् ॥ २० ॥

वृ०—पर्यनुयोज्योपेक्षणं लक्षयति—निग्रहस्थानं प्राप्तवतोऽनिग्रहो निग्रहस्थानानुद्भावनमित्यर्थः। यत्र त्वनेकनिग्रहस्थानपाते, एकतरोद्भावनं तत्र न पर्यनुयोज्योपेक्षणम्। अवसरे निग्रहस्थानोद्भावनत्वावच्छिन्नाभावस्यैव तत्त्वात्।

---

१ क. ख. ग. घ. च. 'पक्षदो°'।

नुयुक्तया परिषदा * वचनीयं न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयादिति ॥ २१ ॥

अनिग्रहस्थाने निग्रहस्थानाभि-
योगो निरनुयोज्यानुयोगः ॥२२॥

भा०—निग्रहस्थानलक्षणस्य मिथ्याध्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परं ब्रुवन्निरनुयोज्यानुयोगान्निगृहीतो वेदितव्य इति ॥ २२ ॥

सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तः ॥ २३ ॥

भा०—कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययादनियमात्कथां प्रसञ्जयतोऽपसिद्धान्तो वेदितव्यः । यथा न सदात्मानं जहाति न सतो विनाशो नासदात्मानं लभते नासदुत्प-

---

ननु वादिना कथमिदमुद्भाव्यं स्वकौपीनविवरणस्यायुक्तत्वादिति चेत् । सत्यम् । मध्यस्थेनैवेदमुद्भाव्यम् । वादे च स्वयमुद्भावनेऽप्यदोषः ॥ २१ ॥

वृ०—निरनुयोज्यानुयोगं लक्षयति—अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तदित्यर्थः । एतेनावसरे निग्रहस्थानोद्भावने, एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावने च नातिव्याप्तिः । सोऽयं चतुर्धा—छलं जातिराभासोऽनवसरग्रहणं च । आभासो व्यभिचारादावसिद्ध्याद्युद्भावनम् । अनवसरग्रहणं चाकाल एवोद्भावनम् । यथा त्यक्ष्यसि चेत्प्रतिज्ञाहानिर्विशेषयसि चेद्धेत्वन्तरम् । एवमवसरमतीत्य कथनमपि । यथा—उच्यमानग्राह्यस्यापशब्दादेः परिसमाप्तौ । एवमनुक्तग्राह्याज्ञानाद्यननुभाषणावसरेऽनुद्भाव्यबोधाविष्करणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमूह्यम् ॥ २२ ॥

वृ०—अपसिद्धान्तं लक्षयति—सिद्धान्तं स्वशास्त्रकाराभ्युपगतमर्थं स्वीकृत्य नियमात्तन्नियमप्रच्यवात्कथाप्रसङ्ग इति । तथा च कथायां स्वीकृतसिद्धान्तप्रच्यवोऽपसिद्धान्तः । तथा च सांख्यमतेनाहं वदिष्यामीत्यभ्युपेत्याऽऽ-

---

* अयं भावः—पर्यनुयोज्योपेक्षणं नाम वादिना साधनाभासोपन्यासे कृते प्रतिवादिन उत्तराप्रतिपत्तिः । तथा च वादिना स्वसाधनमतदूषणस्योद्भावनानुपपत्तेः । प्रतिवादिनश्च स्वेनैव स्वनिग्रहायोगात्परिषदा तदुद्भावनीयमिति । अत्रेदं बोध्यम्—अप्रतिभायां सम्यक्साधनोपन्यासः । अत्र तु साधनाभासोपन्यास इत्युभयोर्विशेष इति ।

यत इति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति--एकप्रकृतीदं व्यक्तं विकाराणामन्वयदर्शनात्। मृदन्वितानां शरावादीनां दृष्टमेकप्रकृतित्वम्। तथा चायं व्यक्तभेदसुखदुःखमोहान्वितो दृश्यते। तस्मात्समन्वयदर्शनात्सुखादिभिरेकप्रकृतीदं शरीरमिति। एवमुक्तवाननुयुज्यते--अथ प्रकृतिर्विकार इति कथं लक्षितव्यमिति। यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते सा प्रकृतिः। यच्च धर्मान्तरं प्रवर्तते स विकार इति। सोऽयं प्रतिज्ञातार्थविपर्यासादनियमात्कथां प्रसञ्जयति। प्रतिज्ञातं खल्वनेन नासदाविर्भवति न सत्तिरो भवतीति। सदसतोश्च तिरोभावाविर्भावमन्तरेण न कस्यचित्प्रवृत्तिः प्रवृत्त्युपरमश्च भवति। मृदि खल्ववस्थितायां भविष्यति शरावादिलक्षणं धर्मान्तरमिति प्रवृत्तिर्भवति, अभूदिति च प्रवृत्त्युपरमः। तदेतन्मृद्धर्माणामपि न स्यात्। एवं प्रत्यवस्थितो यदि सतश्चाऽऽत्महानमसतश्चाऽऽत्मलाभमभ्युपैति तदस्यापसिद्धान्तो निग्रहस्थानं भवति। अथ नाभ्युपैति। पक्षोऽस्य न सिध्यति॥ २३॥

हेत्वाभासाश्च यथोक्ताः॥ २४॥

भा०--हेत्वाभासाश्च निग्रहस्थानानि। किं पुनर्लक्षणान्तरयोगाद्धेत्वाभासा निग्रहस्थानत्वमापन्ना यथा प्रमाणानि प्रमयेत्वमि-

---

रब्धायां कथायामाविर्भावस्याऽऽविर्भावाभ्युपगमेऽनवस्थेति दूषणोद्धारायाऽऽविर्भावस्यासत उत्पत्तिं यद्यभ्युपैति तदाऽपसिद्धान्तः। यस्त्वेकदेशिमतेन कथामारभते तस्य शास्त्रकाराभ्युपगमविरोधे नापसिद्धान्त इति विबोधयितुमभ्युपेत्येत्युक्तम्। सौगतास्त्वपसिद्धान्तं दूषणं न मन्यन्त इत्यन्यदेतत्॥ २३॥

वृ०-क्रमप्राप्तहेत्वाभासलक्षणे वक्तव्ये तदकथनबीजमाह--चः पुनरर्थे। हेत्वाभासाः पुनर्यथा येन रूपेण पूर्वमुक्तास्तेनैव रूपेण तेषां निग्रहस्थानत्वमिति न

---

१ क. ख. ग. घ. च. ° तिविका°।

स्यत आह—यथोक्ता इति । हेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति । त इमे प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्चेति ॥ २४ ॥

इति निग्रहस्थानविशेषलक्षणप्रकरणम् ॥ ४ ॥

---

योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ॥
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥

---

इति पञ्चमाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

इति वात्स्यायनीये न्यायभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

---

समाप्तं चेदं शास्त्रम् ।
मङ्गलमस्तु ॥

---

लक्षणान्तरमपेक्षितमिति । अत्र चकारस्य दृष्टान्ते साधनवैकल्यादिसमुच्चायकत्वमिति केचित् । तन्न । यथोक्ता इत्यस्यानन्वयापत्तेरिति ॥ २४ ॥

इति निग्रहस्थानविशेषलक्षणप्रकरणम् ।

---

समाप्तं पञ्चमाध्यायस्य द्वितीयाह्निकम् ॥ २ ॥

---

एषा मुनिप्रवरगौतमसूत्रवृत्तिः श्रीविश्वनाथकृतिना सुगमाल्पवर्णा ।
श्रीकृष्णचन्द्रचरणाम्बुजचञ्चरीकश्रीमच्छिरोमणिवचःप्रचयैरकारि ॥

---

इति श्रीमहामहोपाध्यायश्रीविद्यानिवासभट्टाचार्यात्मजश्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

# श्रीगौतममुनिप्रणीतन्यायसूत्रपाठः ।

तत्र प्रथमोऽध्यायः ।

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥ दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ॥ २ ॥ प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥ इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥ अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च ॥ ५ ॥ प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् ॥६॥ आप्तोपदेशः शब्दः ॥ ७ ॥ स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥ आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥ इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति ॥ १० ॥ चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥ घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ १२ ॥ पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥ १३ ॥ गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ १४ ॥ बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥ युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥ प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति ॥ १७ ॥ प्रवर्तनालक्षणा दोषाः ॥ १८ ॥ पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥ प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥ बाधनालक्षणं दुःखमिति ॥ २१ ॥ तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥ समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ २३ ॥ यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥ २४ ॥ लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥ तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २६ ॥ सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २७ ॥ सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥ समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥ यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥ ३० ॥ अपरीक्षिताभ्युपग-

मात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ३१ ॥ प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ३२ ॥ साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥ उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ॥ ३४ ॥ तथा वैधर्म्यात् ॥ ३५ ॥ साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ॥ ३६ ॥ तद्विपर्ययाद्वा विपरीतम् ॥ ३७ ॥ उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥ हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ ३९ ॥ अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ ४० ॥ विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ ४१ ॥

इति श्रीगौतमन्यायसूत्रपाठे प्रथमाध्यायस्य प्रथममाह्निकम् ॥ १ ॥

---

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥ यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ २ ॥ स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥ सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः ॥ ४ ॥ अनैकान्तिकः सव्यभिचारः ॥ ५ ॥ सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥ यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥ साध्याविशिष्टः साध्यत्वात्साध्यसमः ॥ ८ ॥ कालात्ययापदिष्टः कालातीतः ॥ ९ ॥ वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥ तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥ अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ १२ ॥ संभवतोऽर्थस्यातिसामान्ययोगादसंभूतार्थकल्पना सामान्यच्छलम् ॥ १३ ॥ धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥ वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ १५ ॥ न तदर्थान्तरभावात् ॥ १६ ॥ अविशेषे वा किंचित्साधर्म्यादेकच्छलप्रसङ्गः ॥ १७ ॥ साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥ विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥ तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

इति श्रीगौतमन्यायसूत्रपाठे प्रथमाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

समाप्तश्चायं प्रथमोऽध्यायः ॥ १ ॥

---

अथ द्वितीयोऽध्यायः ।

समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः ॥ १ ॥ विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ॥ २ ॥ विप्रतिपत्तौ च संप्रतिपत्तेः ॥ ३॥ अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ॥४॥ तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः॥ ५॥ यथोक्ताध्यवसायादेव तद्विशेषापेक्षात्संशये नासंशयो नात्यन्तसंशयो वा॥६॥ यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ॥ ७॥ प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः ॥ ८ ॥ पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसंनिकर्षात्प्रत्यक्षोत्पत्तिः ॥ ९॥ पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ॥ १० ॥ युगपत्सिद्धौ प्रत्यर्थनियतत्वात्क्रमवृत्तित्वाभावो बुद्धीनाम् ॥ ११ ॥ त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥ १२ ॥ सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥ तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥ १४ ॥ त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धेः ॥ १५ ॥ प्रमेयता च तुलाप्रामाण्यवत् ॥ १६ ॥ प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ॥ १७ ॥ तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत्प्रमेयसिद्धिप्रसङ्गः ॥१८॥ न प्रदीपप्रकाशवत्तत्सिद्धेः ॥ १९ ॥ प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् ॥ २० ॥ नाऽऽत्ममनसोः संनिकर्षाभावे प्रत्यक्षोत्पत्तिः ॥ २१ ॥ दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ २२ ॥ ज्ञानलिङ्गत्वादात्मनो नानवरोधः ॥ २३ ॥ तदयौगपद्यलिङ्गत्वाच्च न मनसः ॥ २४ ॥ प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः संनिकर्षस्य पृथग्वचनम् ॥ २५ ॥ सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः संनिकर्षनिमित्तत्वात् ॥ २६ ॥ तैश्चापदेशो ज्ञानविशेषाणाम् ॥ २७ ॥ व्याहतत्वादहेतुः ॥ २८ ॥ नार्थविशेषप्राबल्यात्॥२९॥ प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ॥ ३० ॥ न प्रत्यक्षेण यावत्तावदप्युपलम्भात् ॥ ३१ । न चैकदेशोपलब्धिरवयविसद्भावात् ॥ ३२ ॥ साध्यत्वादवयविनि संदेहः ॥ ३३ ॥ सर्वाग्रहणमवयव्यसिद्धेः ॥ ३४ ॥ धारणाकर्षणोपपत्तेश्च ॥ ३५॥ सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ॥ ३६ ॥ रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ ३७ ॥ नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३८ ॥ वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥ ३९ ॥ तयोरप्यभावो

वर्तमानाभावे तदपेक्षत्वात् ॥ ४० ॥ नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥ ४१ ॥ वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४२ ॥ कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ॥ ४३ ॥ अत्यन्तप्रायैकसाधर्म्यादुपमानासिद्धिः ॥ ४४ ॥ प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४५ ॥ प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४६ ॥ नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति ॥ ४७ ॥ तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४८ ॥ शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४९ ॥ उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥ संबन्धाच्च ॥ ५१ ॥ आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः ॥ ५२ ॥ 'प्रमाणतोऽनुपलब्धेः' पूरणप्रदाहपाटनानुपलब्धेश्च संबन्धाभावः ॥ ५३ ॥ शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५४ ॥ न सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य ॥ ५५ ॥ जातिविशेषे चानियमात् ॥ ५६ ॥ तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५७ ॥ न कर्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥ अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५९ ॥ अनुवादोपपत्तेश्च ॥ ६० ॥ वाक्यविभागस्य चार्थग्रहणात् ॥ ६१ ॥ विध्यर्थवादानुवादवचनाविनियोगात् ॥ ६२ ॥ विधिर्विधायकः ॥ ६३ ॥ स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥ ६४ ॥ विधिविहितस्यानुवचनमनुवादः ॥ ६५ ॥ नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥ ६६ ॥ शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६७ ॥ मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६८ ॥

इति श्रीगौतमन्यायसूत्रपाठे द्वितीयाध्यायस्य प्रथममाह्निकम् ॥ १ ॥

---

न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात् ॥ १ ॥ शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसंभवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥ अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ॥ ३ ॥ अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥ प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥ तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥ नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥ लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयासिद्धिः ॥ ८ ॥ असत्यर्थे नाभा-

व इति चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥ तत्संसिद्धेरलक्षितेष्वहेतुः ॥ १० ॥ न लक्षणावस्थितापेक्षासिद्धेः ॥ ११ ॥ प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥ "विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः" ॥ आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च ॥१३॥ न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ॥ १४ ॥ तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः ॥ १५ ॥ संतानानुमानविशेषणात् ॥ १६ ॥ कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचार इति ॥ १७ ॥ प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥ १८ ॥ तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ १९ ॥ अनुपलम्भादप्यनुपलब्धिसद्भाववन्नाऽऽवरणानुपपत्तिरनुपलम्भात् ॥ २० ॥ अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २१ ॥ अस्पर्शत्वात् ॥ २२ ॥ न कर्मानित्यत्वात् ॥ २३ ॥ नाणुनित्यत्वात् ॥ २४ ॥ संप्रदानात् ॥ २५ ॥ तदन्तरालानुपलब्धेरहेतुः ॥ २६ ॥ अध्यापनादप्रतिषेधः ॥ २७ ॥ उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥ २८ ॥ अभ्यासात् ॥ २९ ॥ नान्यत्वेऽप्यभ्यासस्योपचारात् ॥ ३० ॥ अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः ॥ ३१ ॥ तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥ ३२ ॥ विनाशकारणानुपलब्धेः ॥ ३३ ॥ अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३४ ॥ उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ ३५ ॥ पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३६ ॥ 'विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः' ॥ अस्पर्शत्वादप्रतिषेधः ॥ ३७ ॥ विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३८ ॥ विकारादेशोपदेशात्संशयः ॥ ३९ ॥ प्रकृतिविवृद्धौ विकारवृद्धेः ॥ ४० ॥ न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥ ४१ ॥ नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४२ ॥ द्रव्यविकारे वैषम्यवद्वर्णविकारविकल्पः ॥ ४३ ॥ न विकारधर्मानुपपत्तेः ॥ ४४ ॥ विकारप्राप्तानामपुनरापत्तेः ॥ ४५ ॥ सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४६ ॥ तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥ ४७ ॥ 'वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः' ॥ 'सामान्यवतो धर्मयोगो न सामान्यस्य' ॥ नित्यत्वेऽविकारादनित्यत्वे चान-

वस्थानात् ॥ ४८ ॥ नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥ ४९ ॥ अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः ॥ ५० ॥ विकारधर्मित्वे नित्यत्वाभावात्कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥ ५१ ॥ प्रकृत्यनियमाद्वर्णविकाराणाम् ॥ ५२ ॥ अनियमे नियमान्नानियमः ॥ ५३ ॥ नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥ ५४ ॥ गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु वर्णविकारोपपत्तेर्वर्णविकाराः ॥ ५५ ॥ ते विभक्त्यन्ताः पदम् ॥ ५६ ॥ व्यक्त्याकृतिजातिसंनिधावुपचारात्संशयः ॥ ५७ ॥ याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः ॥ ५८ ॥ न तदनवस्थानात् ॥ ५९ ॥ सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ६० ॥ आकृतिस्तदपेक्षत्वात्सत्त्वव्यवस्थानसिद्धेः ॥ ६१ ॥ व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात्प्रोक्षणादीनां मृद्गवके जातिः ॥ ६२ ॥ नाऽऽकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६३ ॥ व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६४ ॥ व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ ६५ ॥ आकृतिर्जातिलिङ्गाख्या ॥ ६६ ॥ समानप्रसवात्मिका जातिः ॥ ६७ ॥

इति श्रीगौतमन्यायसूत्रपाठे द्वितीयाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

समाप्तश्चायं द्वितीयोऽध्यायः ॥ २ ॥

---

अथ तृतीयोऽध्यायः ।

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥ न विषयव्यवस्थानात् ॥ २ ॥ तद्व्यवस्थानादेवाऽऽत्मसद्भावादप्रतिषेधः ॥ ३ ॥ शरीरदाहे पातकाभावात् ॥ ४ ॥ तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥ न कार्याश्रयकर्तृवधात् ॥ ६ ॥ सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥ नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥ एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥ अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥ दृष्टान्तवि-

रोधादप्रतिषेधः ॥ ११ ॥ इन्द्रियान्तरविकारात् ॥ १२ ॥ न स्मृतेः स्मर्तव्यविषयत्वात् ॥ १३ ॥ तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥ अपरिसंख्यानाच्च स्मृतिविषयस्य ॥ १५ ॥ नाऽऽत्मप्रतिपत्तिहेतूनां मनसि संभवात् ॥१६॥ ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १७ ॥ नियमश्च निरनुमानः ॥ १८ ॥ पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः ॥ १९ ॥ पद्मादिषु प्रबोधसंमीलनविकारवत्तद्विकारः ॥ २० ॥ नोष्णशीतवर्षाकालनिमित्तत्वात्पञ्चात्मकविकाराणाम् ॥ २१ ॥ प्रेत्याऽऽहाराभ्यासकृतात्स्तन्याभिलाषात् ॥ २२ ॥ अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ॥ २३ ॥ नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥ वीतरागजन्मादर्शनात् ॥ २५ ॥ सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ॥ २६ ॥ न संकल्पनिमित्तत्वाद्रागादीनाम् ॥ २७ ॥ पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥ पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ॥ २९ ॥ निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ॥ ३० ॥ गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥ ३१ ॥ श्रुतिप्रामाण्याच्च ॥ ३२ ॥ कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात्संशयः ॥ ३३ ॥ महदणुग्रहणात् ॥ ३४ ॥ रश्म्यर्थसंनिकर्षविशेषात्तद्ग्रहणम् ॥ ३५ ॥ तदनुपलब्धेरहेतुः ॥ ३६ ॥ नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥ ३७ ॥ द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥३८॥ 'अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः' ॥ 'कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः' ॥ 'अव्यभिचाराच्च प्रतीघातो भौतिकधर्मः' ॥ मध्यंदिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ३९ ॥ न रात्रावप्यनुपलब्धेः ॥ ४० ॥ बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥ ४१ ॥ अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥ नक्तंचरनयनरश्मिदर्शनाच्च ॥ ४३ ॥ अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४४ ॥ कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥ अप्रतीघातात्संनिकर्षोपपत्तिः ॥ ४६ ॥ आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् ॥ ४७ ॥ नेतरेतरधर्मप्रसङ्गात् ॥ ४८ ॥ आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ॥ ४९ ॥ दृष्टानुमितानां नियोगप्रतिषेधा-

नुपपत्तिः ॥ ५० ॥ स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥ ५१ ॥ त्वगव्यतिरेकात् ॥ ५२ ॥ 'नेन्द्रियान्तरार्थानुपलब्धेः' ॥ 'त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः' ॥ 'व्याहतत्त्वादहेतुः' ॥ न युगपदर्थानुपलब्धेः ॥ ५३ ॥ 'विप्रतिषेधाच्च न त्वगेका' ॥ इन्द्रियार्थपञ्चत्वात् ॥ ५४ ॥ न तदर्थबहुत्वात् ॥ ५५ ॥ गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ५६ ॥ विषयत्वाव्यतिरेकादेकत्वम् ॥ ५७ ॥ न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥ ५८ ॥ भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ५९ ॥ गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्या अप्तेजोवायूनां पूर्वं पूर्वमपोह्याऽऽकाशस्योत्तरः ॥ ६० ॥ न सर्वगुणानुपलब्धेः ॥ ६१ ॥ एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदुपलब्धिः ॥ ६२ ॥ 'संसर्गाच्चानेकगुणग्रहणम्' ॥ विष्टं ह्यपरं परेण ॥ ६३ ॥ न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६४ ॥ पूर्वपूर्वगुणोत्कर्षात्तत्तत्प्रधानम् ॥ ६५ ॥ तद्व्यवस्थानं तु भूयस्त्वात् ॥ ६६ ॥ सगुणानामिन्द्रियभावात् ॥ ६७ ॥ तेनैव तस्याग्रहणाच्च ॥ ६८ ॥ न शब्दगुणोपलब्धेः ॥ ६९ ॥ तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७० ॥

इति श्रीगौतमन्यायसूत्रपाठे तृतीयाध्यायस्य प्रथममाह्निकम् ॥ १ ॥

---

कर्माकाशसाधर्म्यात्संशयः ॥ १ ॥ विषयप्रत्यभिज्ञानात् ॥ २ ॥ साध्यसमत्वादहेतुः ॥ ३ ॥ न युगपद्ग्रहणात् ॥ ४ ॥ अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥ ५ ॥ क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥ अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥ न गत्यभावात् ॥ ८ ॥ स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः ॥ ९ ॥ न हेत्वभावात् ॥ १० ॥ स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ ११ ॥ नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ १२ ॥ नोत्पत्तिविनाशकारणोपलब्धेः ॥ १३ ॥ क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः ॥ १४ ॥ लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १५ ॥ न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १६ ॥

व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥ १७॥ क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १८ ॥ नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ १९ ॥ युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥ २० ॥ तदात्मगुणत्वेऽपि तुल्यम् ॥ २१ ॥ इन्द्रियैर्मनसः संनिकर्षाभावात्तदनुत्पत्तिः ॥ २२ ॥ नोत्पत्तिकारणानपदेशात् ॥ २३ ॥ विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २४ ॥ अनित्यत्वग्रहाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥ २५ ॥ ज्ञानसमवेतात्मप्रदेशसंनिकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २६ ॥ नान्तःशरीरवृत्तित्वान्मनसः ॥ २७ ॥ साध्यत्वादहेतुः ॥ २८ ॥ स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २९ ॥ न तदाशुगतित्वान्मनसः ॥ ३० ॥ न स्मरणकालानियमात् ॥ ३१ ॥ आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ॥ ३२ ॥ व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३३ ॥ प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपत्स्मरणम् ॥ ३४ ॥ 'प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः' ॥ ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३५ ॥ तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥ ३६ ॥ परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३७ ॥ 'कुम्भादिष्वनुपलब्धेरहेतुः' ॥ नियमानियमौ तु तद्विशेषकौ ॥ ३८ ॥ यथोक्तहेतुत्वात्पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ३९ ॥ परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४० ॥ स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥ ४१ ॥ प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसंबन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥ ४२ ॥ कर्मानवस्थायिग्रहणात् ॥ ४३ ॥ 'बुद्ध्यवस्थानात्प्रत्यक्षत्वे स्मृत्यभावः' ॥ अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्संपाते रूपाव्यक्तग्रहणवत् ॥ ४४ ॥ हेतूपादानात्प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४५ ॥ 'ग्रहणे हेतुविकल्पाद्ग्रहणविकल्पो न बुद्धिविकल्पात्' ॥ प्रदीपार्चिः संतत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ॥ ४६ ॥ द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४७ ॥ यावच्छरीरभावित्वाद्रूपादीनाम् ॥ ४८ ॥ न पाकज-

गुणान्तरोत्पत्तेः ॥ ४९ ॥ प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५० ॥ शरीरव्यापित्वात् ॥ ५१ ॥ न केशनखादिष्वनुपलब्धेः ॥ ५२ ॥ त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥ ५३ ॥ शरीरगुणवैधर्म्यात् ॥ ५४ ॥ न रूपादीनामितरेतरवैधर्म्यात् ॥ ५५ ॥ ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ ५६ ॥ ज्ञानायौगपद्यादेकं मनः ॥ ५७ ॥ न युगपदनेकक्रियोपलब्धेः ॥ ५८ ॥ अलातचक्रदर्शनवत्तदुपलब्धिराशुसंचारात् ॥ ५९ ॥ यथोक्तहेतुत्वाच्चाणु ॥ ६० ॥ पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ६१ ॥ भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् ॥ ६२ ॥ न साध्यसमत्वात् ॥ ६३ ॥ नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६४ ॥ तथाऽऽहारस्य ॥ ६५ ॥ प्राप्तौ चानियमात् ॥ ६६ ॥ शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म ॥ ६७ ॥ एतेनानियमः प्रत्युक्तः ॥ ६८ ॥ 'उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः' ॥ तददृष्टकारितमिति चेत्पुनस्तत्प्रसङ्गोऽपवर्गे ॥ ६९ ॥ 'न करणाकरणयोरारम्भदर्शनात्' ॥ मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः ॥ ७० ॥ नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ॥ ७१ ॥ अणुश्यामतानित्यत्ववदेतत्स्यात् ॥ ७२ ॥ नाकृताभ्यागमप्रसङ्गात् ॥ ७३ ॥

इति श्रीगौतमन्यायसूत्रपाठे तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

समाप्तश्चायं तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः ।

प्रवृत्तिर्यथोक्ता ॥ १ ॥ तथा दोषाः ॥ २ ॥ तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥ नैकप्रत्यनीकभावात् ॥ ४ ॥ व्यभिचारादहेतुः ॥ ५ ॥ तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ॥ ६ ॥ निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥ न दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥ निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥ आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥ व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥ न घटाद्घटानिष्पत्तेः ॥ १२ ॥ व्यक्ताद्घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥ अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥

व्याघातादप्रयोगः ॥ १५ ॥ नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥ न विनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥ क्रमनिर्देशादप्रतिषेधः ॥१८॥ ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥१९॥ न पुरुषकर्माभावे फलानिष्पत्तेः ॥ २० ॥ तत्कारितत्वादहेतुः ॥२१॥ अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥ २२ ॥ अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥ निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥ सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥२५॥ नानित्यतानित्यत्वात् ॥२६॥ तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥ नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥२८॥ सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९ ॥ नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥ तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥ नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥ न व्यवस्थानुपपत्तेः ॥ ३३ ॥ सर्वं पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥ नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥ लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥ सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥३७॥ न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥ न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥ व्याहतत्वादयुक्तम् ॥ ४० ॥ संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥४१॥ न कारणावयवभावात् ॥४२॥ निरवयवत्वादहेतुः ॥ ४३ । सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥ न सद्यः कालान्तरोपभोग्यत्वात् ॥ ४५ ॥ कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४६ ॥ प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात् ॥ ४७ ॥ नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात् ॥ ४८ ॥ प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा कस्मादुत्पादव्ययदर्शनात् ॥ ४९ ॥ बुद्धिसिद्धं तु तदसत् ॥ ५० ॥ आश्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः ॥ ५१ ॥ प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥ न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥५३॥ तत्संबन्धात्फलनिष्पत्तेस्तेषु फलवदुपचारः ॥५४। विविधबाधनायोगाद्दुःखमेव जन्मोत्पत्तिः ॥ ५५ ॥ न सुखस्यान्तरालनिष्पत्तेः ॥ ५६ ॥ बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ५७ ॥ दुःखविकल्पे सुखाभिमानाच्च ॥ ५८ ॥ ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥ प्रधानशब्दानुपप-

त्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥ ६० ॥ ' अधिकाराच्च विधानं विद्यान्तरवत् ' ॥ समारोपणादात्मन्यप्रतिषेधः ॥ ६१ ॥ पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६२ ॥ सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६३ ॥ न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्य ॥६४॥ न क्लेशसंततेः स्वाभाविकत्वात् ॥६५॥ प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेऽप्यनित्यत्वम् ॥ ६६ ॥ अणुश्यामतानित्यत्ववद्वा ॥ ६७ ॥ न संकल्पनिमित्तत्वाच्च रागादीनाम् ॥ ६८ ॥

इति श्रीगौतमन्यायसूत्रपाठे चतुर्थाध्यायस्य प्रथममाह्निकम् ॥ १ ॥

---

दोषनिमित्तानां तत्त्वज्ञानादहंकारनिवृत्तिः ॥ १ ॥ दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः ॥ २ ॥ तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥ विद्याविद्याद्वैविध्यात्संशयः ॥ ४ ॥ तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥ वृत्त्यनुपपत्तेरपि तर्हि न संशयः ॥ ६ ॥ ' कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः ' ॥ ' तेषु चावृत्तेरवयव्यभावः ' ॥ पृथक्चावयवेभ्योऽवृत्तेः ॥ ७ ॥ न चावयव्यवयवाः ॥ ८ ॥ एकस्मिन्भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ९ ॥ अवयवान्तरभावेऽप्यवृत्तेरहेतुरवयवान्तराभावादिति ॥ १० ॥ क्लेशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ ११ ॥ स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १२ ॥ अवयवावयविप्रसङ्गश्चैवमा प्रलयात् ॥ १३ ॥ न प्रलयोऽणुसद्भावात् ॥ १४ ॥ परं वा त्रुटेः ॥ १५ ॥ आकाशव्यतिभेदात्तदनुपपत्तिः ॥ १६ ॥ आकाशासर्वगतत्वं वा ॥ १७ ॥ अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥ १८ ॥ शब्दसंयोगविभवाच्च सर्वगतम् ॥ १९ ॥ अव्यूहाविष्टम्भविभुत्वानि चाऽऽकाशधर्माः ॥ २० ॥ मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥ २१ ॥ संयोगोपपत्तेश्च ॥ २२ ॥ अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ २३ ॥ बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत्तदनुपलब्धिः ॥२४॥ व्याहतत्वादहेतुः ॥२५॥ तदाश्रयत्वादपृथग्ग्रहणम्॥२६॥

प्रमाणतश्चार्थप्रतिपत्तेः ॥२७॥ प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥२८॥ स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ २९ ॥ माया-गन्धर्वनगरमृगतृष्णिकावद्वा ॥ ३० ॥ हेत्वभावादसिद्धिः ॥३१॥ स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः ॥ ३२ ॥ मिथ्योपलब्धि विनाशस्तत्त्वज्ञानात्स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे ॥ ३३ ॥ बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३४ ॥ तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३५ ॥ समाधिविशेषाभ्यासात् ॥ ३६ ॥ नार्थविशेषप्राबल्यात् ॥ ३७ ॥ क्षुदादिभिः प्रवर्तनाच्च ॥ ३८ ॥ पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ३९ ॥ अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ४० ॥ अपवर्गेऽप्येवं प्रसङ्गः ॥ ४१ ॥ न निष्पन्नावश्यंभावित्वात् ॥ ४२ ॥ तदभावश्चापवर्गे ॥ ४३ ॥ तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ४४ ॥ ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ ४५ ॥ तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयिभिरभ्युपेयात् ॥ ४६ ॥ प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४७ ॥ तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ४८ ॥ ताभ्यां विगृह्य कथनम् ॥ ४९ ॥

इति श्रीगौतमन्यायसूत्रपाठे चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

---

समाप्तश्चायं चतुर्थोऽध्यायः ॥ ४ ॥

---

## अथ पञ्चमोऽध्यायः।

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ॥ १ ॥ साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥ गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥ साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥४॥ किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥५॥ साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥ प्राप्य साध्यमप्राप्य

वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥ घटादिनिष्पत्तिदर्शनात्पीडने चाभिचारादप्रतिषेधः ॥ ८ ॥ दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥ प्रदीपोपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः ॥ १० ॥ प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥ प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥१२॥ तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥ सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः ॥ १४ ॥ साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥ उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥ प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥ १७ ॥ त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥ न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥ प्रतिषेधानुपपत्तेः प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥ अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ २१ ॥ अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥ एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः॥२३॥ क्वचित्तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः ॥ २४ ॥ उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥ उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥ निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥ २७ ॥ कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २८ ॥ तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ २९ ॥ अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥ ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥ ३१ ॥ साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥ साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्याच्च ॥ ३३ ॥ दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ॥ ३४ ॥ नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥ ३५ ॥ प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः॥ ३६ ॥

प्रयत्नकार्यानेकत्वात्कार्यसमः ॥ ३७ ॥ कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥ प्रतिषेधेऽपि समानो दोषः ॥ ३९ ॥ सर्वत्रैवम् ॥ ४० ॥ प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥ प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥ स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोष इति ॥ ४३ ॥

इति श्रीगौतमन्यायसूत्रपाठे पञ्चमाध्यायस्य प्रथममाह्निकम् ॥ १ ॥

---

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥ प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥ प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥ प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥ पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ॥ ५ ॥ अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥ प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम् ॥ ७ ॥ वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥ परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥ पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् ॥ १० ॥ अवयवविपर्यासवचनमप्राप्तकालम् ॥ ११ ॥ हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥ हेतूदाहरणाधिकमधिकम् ॥ १३ ॥ शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥ 'अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः' ॥ अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ॥ १५ ॥ विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥ १६ ॥ अविज्ञातं चाज्ञानम् ॥ १७ ॥ उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १८ ॥ कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ॥ १९ ॥ स्वपक्षदोषाभ्युपग-

मात्परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ २० ॥ निग्रहस्थानप्राप्तस्या-निग्रहः पर्यनुयोज्योपेक्षणम् ॥ २१ ॥ अनिग्रहस्थाने निग्रहस्था-नाभियोगो निरनुयोज्यानुयोगः ॥ २२ ॥ सिद्धान्तमभ्युपेत्या-नियमात्कथाप्रसङ्गोऽपसिद्धान्तः ॥ २३ ॥ हेत्वाभासाश्च यथो-क्ताः ॥ २४ ॥

इति श्रीगौतमन्यायसूत्रपाठे पञ्चमाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

समाप्तश्चायं पञ्चमोऽध्यायः ॥ ५ ॥

---

इति श्रीगौतममुनिप्रणीतन्यायसूत्रपाठः ॥

# श्रीगौतमसूत्राणामकारादिक्रमेण सूचीपत्रम् ।

# श्रीगौतमसूत्रस्थविषयाणां सूचीपत्रम् ।



इति गौतमसूत्रस्थविषयाणां सूचीपत्रम् ।

# शुद्धिपत्रकम् ।

| अशुद्धम् । | पृ० | पं० | शुद्धम् । |
|---|---|---|---|
| नोपदाना | ३ | २५ | नोपादाना |
| उपनयनमुप | ७ | ३ | उपनय उप |
| ( ५ । २ । २५ ) | १० | ७ | ( ५ । २ । २४ ) |
| दुःखजन्यप्र | ११ | ३ | दुःखजन्मप्र |
| यासंनिक | १८ | ७ | यार्थसंनिक |
| प्रवृत्तः | २६ | २२ | प्रवृत्तेः |
| मन्तव्य | ३१ | ९ | मन्तव्यं |
| दुःखविना | ३७ | १८ | दुःखाविना |
| अभ्यनज्ञाने | ३८ | ११ | अभ्यनुज्ञाने |
| स्थानषु | ३८ | १२ | स्थानेषु |
| भवेदित्याहृत्य | ४१ | १५ | भवेदित्यध्याहृत्य |
| प्रमाणलक्ष | ४२ | ७ | प्रमेयलक्ष |
| इति सूत्रवृत्तौ न्या | ४६ | ११ | इति न्या |
| प्रतीयमान | ५१ | २७ | अप्रतीय |
| स्थाल्यादिवत्यु | ५४ | ११ | स्याल्यादिवदित्यु |
| संदृश्यप्र | ५८ | १ | सादृश्य |
| उपनयनं चा | ५८ | १० | उपनयं चा |
| कारणोपापत्ति | ५९ | ५ | कारणोपपत्ति |
| त्वनिवृत्तौ | ६३ | ६ | त्वनिवृत्तो |
| ( ५ । १ । ५० ) | ६९ | २ | ( ४ । २ । ४८ ) |
| मप्राप्तिका | ७६ | १६ | मप्राप्तका |
| विप्रतिपत्त्योर्वि | ८४ | ५ | विप्रतिपत्त्यप्रतिपत्त्योर्वि |
| वा न संशयः | ८६ | ९ | वा संशयः |
| शब्दादाद्य | ९६ | १३ | शब्दादातोद्य |
| सत्त्वप्रधानानि | ९९ | ११ | सत्त्वप्रधानानि नामानि |
| सिद्धिः प्रसङ्गः | १०१ | १५ | सिद्धिप्रसङ्गः |

| अशुद्धम् । | पृ० | प० | शुद्धम् । |
|---|---|---|---|
| न प्रमाणान्तरेण | १०३ | ११ | न च प्रमाणमन्तरेण |
| रूपविज्ञान | ११० | २ | रूपविज्ञानं |
| पूर्वकवनि | ११३ | १७ | पूर्वकत्वनि |
| पृथक्त | ११९ | ८ | पृथक्त्व |
| परमणव | ११९ | २६ | परमाणव |
| यथा च | १३० | २१ | तथा च |
| संस्कर | १३२ | २३ | संस्कार |
| मुद्यच्छ | १४३ | २५ | मुदयच्छ |
| पेक्षति | १५५ | १५ | पेक्षेति |
| रणाद्यनुप | १६१ | ११ | रणादनुप |
| स्यानित्यत्षं | १६३ | २० | स्यानित्यत्वं |
| शब्दकण्ठ | १६५ | १८ | शब्दस्य कण्ठ |
| च्चारणनुकू | १६६ | १९ | च्चारणानुकू |
| तदा श्रवण | १६८ | १७ | तदाऽश्रवण |
| रिति ॥ ३६ ॥ | १७० | २ | रिति |
| प्रसङ्गः ॥ ३७ ॥ | १७० | ४ | प्रसङ्गः । |
| इति ॥ ३७ ॥ | १७० | ९ | इति ॥ ३६ ॥ |
| षेधः ॥ ३८ ॥ | १७० | १४ | षेधः ॥ ३७ ॥ (इत आरभ्याध्यायसमाप्तिपर्यन्तमुत्तरोत्तराः सूत्राङ्का गणनीयाः ) |
| नाभिधीमा | १७८ | २० | नाभिधीयमा |
| यथा क्षरि | १७८ | २३ | यथा क्षीर |
| पार्थिवने | १९५ | २४ | पार्थिवेन |
| वाधर्क | २०१ | १८ | वाधक |
| चातुभौति | २०८ | ५ | चातुर्भौति |
| त्रिभौतिक | २०८ | १७ | त्रैभौतिक |
| चक्षुर्गा | २०९ | १० | चक्षुर्ग |
| विशेषाद्ग | २११ | ७ | विशेषात्तद्ग |
| तत्र | २३१ | १ | यत्र |

| अशुद्धम् । | पृ० | प० | शुद्धम् । |
|---|---|---|---|
| त्वावाच्छन्न | २२४ | २२ | त्वावच्छिन्न |
| नासाधिष्ठनं | २२५ | ९ | नासाधिष्ठानं |
| प्रकाराणा | २२५ | २२ | प्रकाराणां |
| विभक्तिपरि | २२७ | ६ | विभक्तिविपरि |
| त्रिविध | २२९ | २४ | त्रिविधं |
| ग्रहण | २३१ | ३ | ग्रहणं |
| इति | २३७ | १२ | इति । |
| व्यहान्त | २४२ | ८ | व्यूहान्त |
| एव च | २४४ | २९ | एवं च |
| स्मर्तव्या | २४९ | ११ | स्मर्तव्यत्वा |
| दुखं | २५० | ६ | दुःखं |
| लिङ्गज्ञात्र | २५० | २७ | लिङ्गज्ञान |
| न्यम् ॥ ६ ॥ | १५३ | ६ | न्यम् ॥ ३६ ॥ |
| मास्थतुम् | २५५ | २४ | मास्थातुम् |
| आह्नि० १ | २५७ | १ | आह्नि० २ |
| संबन्धान्त | २५८ | ११ | संबन्धानन्त |
| विदाना | २५९ | ९ | बिदाना |
| न्यत्राप | २६४ | १६ | न्यत्रापि |
| सा न— | २६७ | १० | सा-- |
| सिद्धेः सत्यारम्भोः | २६९ | १ | सिद्धे सत्यारम्भो |
| पत्रंः स्या | २६९ | १० | पत्रं स्या |
| मनसोः व | २६९ | १६ | मनसो व |
| श्रृयते | २७१ | ७ | श्रूयते |
| इच्छाभद्वे | २८३ | ८ | इच्छात्वद्वे |
| निरूयः | २८६ | २६ | निरूप्यः |
| शिष्टमान्तर | २९२ | ११ | शिष्टमात्मान्तरं |
| सर्वे हि भिन्न | ३०४ | २५ | ( अत्रेदं बोध्यम्—सर्वे हीत्यादिपङ्क्तित्रयं कीलकयोजकप्रमादात्पतितम् ) |

| अशुद्धम् । | पृ० | पं० | शुद्धम् |
|---|---|---|---|
| णोपपात्तः | ३०६ | ४ | णोपपत्तिः |
| निष्पतेः | ३१४ | १३ | निष्पत्तेः |
| जायमनस्य | ३१८ | ४ | जायमानस्य |
| नित्यत्वस्वा | ३२४ | १२ | नित्यत्ववत्स्वा |
| नानुपूर्वा तु | ३२७ | १९ | नानुपूर्व्या तु |
| उच्यन्ते। मिथ्या | ३२७ | २१ | उच्यन्ते। ते मिथ्या |
| देशवृत्तित्वा | ३३० | २६ | देशावृत्तित्वा |
| मनुध्येदं | ३३० | २८ | मनुरुध्येदं |
| पूर्वपक्षिण सू | ३३१ | १५ | पूर्वपक्षिणः सू |
| नाल्पो यो | ३३५ | ८ | नाल्पीयो |
| व्यूहते | ३३७ | ५ | व्यूह्यते |
| दनुकार्य | ३३७ | १० | दणुकार्य |
| विभागस्य च विभाज्यमानहानेर्नोपपद्यते | ३३९ | ७ | विभागस्य च विभज्यमानहानेरनुपपत्तेः प्रलयाभावः। विभागोऽस्ति विभज्यमानं नास्तीत्येवं सत्यनवस्था न स्यात् । स चायं विभागो विभज्यमानहानेर्नोपपद्यते । |
| शून्यतायुक्ता | ३३९ | २२ | शून्यता युक्ता |
| बाह्यर्थ | ३४६ | २६ | बाह्यार्थ |
| वशातत्त्व | ३४७ | ६ | वशात्तत्त्व |
| धर्म्याद्यर्कि | ३५९ | २४ | धर्म्याद्यर्तिक |
| आपद्यमाने | ३६६ | १३ | आपाद्यमाने |
| त्वत्साधमपि | ३७६ | २२ | त्वत्साधनमपि |
| साधकम् । अपि | ३७८ | २६ | साधकम्, अपि |
| नित्याकाशाध | ३८३ | २० | नित्याकाशसाध |
| पर्तेतो | ३८९ | १६ | पर्वतो |

| अशुद्धम् । | पृ० | पं० | शुद्धम् । |
|---|---|---|---|
| व्यक्तमिदमेक | ३९० | १२ | व्यक्तमिदमेक- |
| द्वेषाभिनिशाः | ३९३ | १५ | द्वेषाभिनिवेशाः |
| किंविदसि | ३९७ | १९ | किं वदासि |
| कस्यचिमवृत्तिः | ४०० | १० | कस्यचित्प्रवृत्तिः |

( सूत्रपाठे )

| | | | |
|---|---|---|---|
| महादनुग्र | ७ | १७ | महदणुग्रह |
| व्याहतत्त्वद | ११ | १७ | व्याहतत्त्वाद |

